श्रीमत्कृष्णपदारविन्दविगलन्माध्वीकवद्धादर-
स्त्रैलोक्ये विदितः कृती भगवतीदासोऽस्य पुत्रोऽभवत् ।
कीर्त्या यस्य सुधांशुसुन्दररुचा भूमण्डलं निर्मलं
यद्दानेन दरिद्रवेश्मसु चिरं दारिद्र्यमुन्मूलितम् ॥ १३ ॥

भूलोकस्य विभूषणं त्रिजगतीवैदग्ध्यविश्रामभूः
पुत्रोऽस्य क्षितिमण्डले विजयते श्रीटोडरक्ष्मापतिः ।
यस्मिञ्शासति पाकशासन इव क्षोणीं पवित्राकृतौ
सद्यः कर्णयुधिष्ठिरादिविरहक्लेशं धरित्री जहौ ॥ १४ ॥

श्रीमान्विश्वक्षेजश्रिराय पुलकद्दोःस्तम्भसंभावना-
भूमिष्टोडरमल्ल एष जयताद्वाहुद्रुवषण्डनः ।
राजन्येषु तमोमयेन कलिना क्रूरेण निम्लोचितो
यस्मिन्नभ्युदितो जगद्विमलयन्साम्राज्यतिग्मद्युतिः ॥ १५ ॥

यस्य चेतसि गोविन्दभक्तिरेव गरीयसी ।
नारीचन्दनचीराद्या विषया विषसंमिताः ॥ १६ ॥

चेतो यस्य निरन्तरेण भगवत्पादाम्बुजे भृङ्गति
प्राप्तं येन तपोबलेन महता साम्राज्यमत्यद्भुतम् ।
यत्कीर्तिं श्रुतिलोलकुण्डलयुगं गायन्ति देवाङ्गनाः
सोऽयं टोडरमल्लभूमिरमणः केनोपमेयो भवेत् ॥ १७ ॥

तडागानां यागानतिविमलमूर्तिः समकरो-
दसौ सौधेष्वन्तर्मुरमथनमूर्तीश्च विविधाः ।
विधाय प्रारम्भादुपवनविनोदं भगवतो
यशः स्वीयं राजा जगति बहुशः पल्लवयति ॥ १८ ॥

असौ कदाचिद्विदुषो विशुद्धा-
नाहूय सत्कृत्य विनीतमूर्तिः ।
नानापुराणस्मृतिसारभूतं
समादिशद् ग्रन्थममुं विधातुम् ॥ १९ ॥

शङ्करभावेन कलेः प्रभावा-
ज्जनाञ्जगत्यामलसान्विलोक्य ।
हिताय तेषामखिलार्थसारं
यथाविचारं नृपतिः करोति ॥ २० ॥

सम्यक् श्रुतीनां श्रवणेऽप्यशक्ताः
स्मृतौ पुराणेऽप्यलसाः पुमांसः ।
तेषामशेषानुमतानुसारी
लोकोपकारी नृपतेः प्रयासः ॥ २१ ॥

श्रुतिस्मृतिपुराणानि विस्तीर्णानि पदे पदे ।
ग्रन्थेऽस्मिंष्टोडरानन्दे संक्षिप्तानि महीभृता ॥ २२ ॥

सर्वत्र सन्ति वचनानि बहूनि तेषु
ग्राह्याणि यानि सविशेषविचारितानि ।
विज्ञातमूलकतया बहुभिर्विचार-
निर्वाहसाधुमतिभिश्च समाहृतानि ॥ २३ ॥

## [ ग्रन्थस्थप्रकरणानि ]

सर्गोऽवताराः कालस्य गणनं कालनिर्णयः ।
देशा द्विजातिसंस्कारा आचारः शुद्धिनिर्णयः ॥ २४ ॥

श्राद्धानि वर्षकृत्यानि व्रतानां विधयस्ततः ।
प्रतिष्ठाविधयः पूजा देवतानां ततः परम् ॥ २५ ॥

दानानि ग्रहयागादिशान्तिकं तैर्थिको विधिः ।
विवाहो व्यवहारश्च राजनीतिस्ततः परम् ॥ २६ ॥

प्रायश्चित्तं कर्मपाक आयुर्वेदः प्रसङ्गतः ।
ग्रन्थेऽस्मिंष्टोडरानन्दे सर्वमेतन्निबध्यते ॥ २७ ॥

## [ धर्मलक्षणम् ]

इह खलु पुरुषार्थचतुष्टयमनिष्टनिवृत्तिं चाभिलषद्भिः प्रवृत्तिनिवृत्तिरूपो धर्म एवाश्रयणीयः । तथा च व्यासः—

---

23c A विज्ञान°. 26c A B विवादो for विवाहो.

ऊर्ध्वबाहुर्विरौम्येष न वै कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ २८ ॥

[ भारतसावित्री ९९ ]

आश्रितश्च धर्मो न त्याज्यः । तत्रापि स एव—

न जातु कामान्न भयान्न लोभा-
द्धर्मं जह्याज्जीवितस्यापि हेतोः ।
धर्मो नित्यः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥ २९ ॥

[ महाभा. ५ ४० ११–१२, भारतसावित्री १० ]

मनुश्च—

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत् ॥ ३० ॥ इति ।

[ मनु ८·१५ ]

मोक्षस्य ज्ञानसमवधानेन ज्ञानसंपादकतया वा धर्मो हेतुः । तदुक्तम्—

ज्ञानं प्रधानं न च कर्महीनं
कर्म प्रधानं न च बुद्धिहीनम् ।
समुच्चयेन द्वितयं च हेतु-
र्न ह्येकपक्षो विहगः प्रयाति ॥ ३१ ॥

[ ? ]

द्वितीये[1] पक्षे प्रशस्तपादभाष्यम् ।

"तच्चेश्वरदेशनाभिव्यक्ताद्धर्मादेव । अर्थस्य चाव्यभिचारेण धर्मो हेतुः । धर्मादर्थ इति । यतोऽप्यर्थाद्धर्मः तस्यापि धर्मनिमित्तकत्वात् । अन्यथा अर्थवद्दरिद्रयोर्वैचित्र्यं न स्यात् । अर्थं विनाप्युपवासादेर्धर्मस्य संभवाच्च" ।

[ वैशेषिकसूत्र १·१·३ ? ]

स च धर्मो द्वेधा प्रवृत्तिलक्षणो निवृत्ति [[2]लक्षणश्च । प्रवृत्तिलक्षणो द्विविधः । नित्यः काम्यश्च । नित्यः संध्यावन्दनादिः । काम्यो गोदानादिः ।

---

28b Mbh न च for न वै Mbh मां for मे. d Mbh स धर्मः किं for स किमर्थं 29b Mbh त्यजेत् for जह्यात् 30a A धर्मेण निहतो for धर्म एव हतो

१ B पारमर्षसूत्रे for द्वितीये ... भाष्यम् २ Portion in [ ] om in A

निवृत्ति] लक्षणोऽपि पूर्ववद् द्विविधः। तत्र अहिंसादिर्नित्यः। काम्यश्च अन्नभक्षणनिवृत्त्यादिः। एष्वपि षड्विधत्वं सामान्यधर्म–वर्णधर्म–आश्रमधर्म–वर्णाश्रम [धर्म]–गुण–[धर्म]–निमित्तधर्मभेदात्। तत्र सामान्यधर्मोऽहिंसादिः। वर्णधर्मो याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदित्यादिः, नित्यं ब्राह्मणो मद्यं वर्जयेदित्यादिश्च। आश्रमधर्मः अग्नीन्धनभैक्षचर्यादिः। वर्णाश्रमधर्मः पालाशो दण्डो ब्राह्मणस्येत्येवमादिः। गुणधर्मः अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिः। निमित्तधर्मो निषिद्धाचरणविहिताकरणनिमित्तप्रायश्चित्तादिः। एतस्य किं ज्ञापकमिति। तत्र याज्ञवल्क्यः—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम्॥ ३२॥

[ याज्ञ० १ ७ ]

अत्र मनुः—

श्रुतिश्च वेदो विज्ञेयो धर्मशास्त्रं च वै स्मृतिः।
ते सर्वार्थेषु मीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥ ३३॥

[ मनु० २·१० ]

विष्णुपुराणे—

साधवः क्षीणदोषाः स्युः पुरुषाः समदर्शिनः।
तेषामाचरणं यद्यत्सदाचारः स उच्यते॥ ३४॥

[ विष्णु ३ ११ ३ ]

मनुश्च ब्रह्मर्षिदेशमुक्त्वा—

तस्मिन्देशे य आचारः पारंपर्यक्रमागतः।
[ श्रुतिस्मृत्यविरोधेन ] सदाचारः स उच्यते॥ ३५॥

[ मनु० २ १८ ]

स्वस्य प्रियं वैकल्पिके विषये स्वेच्छाविषयः। यथा—

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्॥ ३६॥

[ याज्ञ० १·१४ ]

---

32*a* T श्रुतिस्मृतिसदाचारा for श्रुति स्मृति सदाचार 33 *b* T तु for च 34 *b* T गच्छन्द साधुवाचर for पुरुषा समदर्शिन, *c* T यत्तु for यद्यत् 35 *a* B यस्मिन् for तस्मिन्, *c* Portion in [ ] not found in T

इत्यत्र स्वेच्छैव नियामिकेति मिताक्षरा ॥ अत्र कश्चित्–नात्र ऐच्छिको विकल्पः, अष्टविधदोषप्रसात्। तन्न। तुल्यविकल्पेऽन्वयप्रतीतेरप्रतिबन्धात्। अन्यथा व्रीहियवविकल्पो न स्यात्। वस्तुतस्तु श्रुत्योर्विरोधे स्मृत्योर्वा विरोधे संदेहस्य निवर्तकं प्रियमन्तःप्रसादविषयः। तदुक्तम्–

यत्रात्मास्य प्रसीदति। इति।

[ ? ]

दर्शितं च भट्टपादैः—

सतां हि संदेहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥ ३७ ॥ इति।

[ तन्त्रवार्तिक on जैमिनि १ ३ ७ ]

सम्यक्संकल्पजः कामः। इति च।

[ ? ]

सम्यक्शास्त्राविरुद्धो लोकैः सम्यक्तया प्रतीयमानोऽनुपलभ्यमूलः स्वेच्छया गृहीतो नियमादिः। यथा भोजनं विना पानीयं न पातव्यमिति। एतावन्ति धर्मे प्रमाणानि ॥

मनुरपि—

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥ ३८ ॥ इति ॥

[ मनु० २ १ ]

तथा—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ ३९ ॥

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ ४० ॥

सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा।
श्रुतिप्रामाण्यतो विद्वान्धर्मेषु निविशेत वै ॥ ४१ ॥

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ ४२ ॥

---

१ B न for नात्र.　२ B om निवर्तकं

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेषु मीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ ४३ ॥

योऽवमन्येत ते मूले हेतुशास्त्राश्रयो द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ ४४ ॥

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ ४५ ॥

[ मनु० २ ६-१२ ]

उक्तं च—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ४६ ॥

[ याज्ञ० १ ३ ]

न्यायस्तर्कः, मीमांसा श्रुतिस्मृत्यर्थविचारः, एतयोः प्रतिपाद्यार्थनिर्णायकतया धर्मोपयोगः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि। तेषु शिक्षामविज्ञाय पाठाज्ञाने महादोष इति। पाठनियमाज्ञाने—

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ४७ ॥

[ निरुक्तम् १ १४, व्या महा पृ २ ]

इति शिक्षाया धर्मोपयोगित्वम्। कल्पः प्रयोगशास्त्रतया धर्मोपयोगी। व्याकरणं सत्यं निरदिक्षदिति सत्यवचनोपयोगितया रक्षोहागमलघ्वसंदेहोपयोगितया च। नैरुक्तं पदार्थबोधकतया धर्मोपयोगि। छन्दश्च 'यो ह वा अविदितार्षेयच्छन्दोदैवतो ब्राह्मणेन याजयति वाध्यापयति वा [स] स्थाणुमृच्छति गर्तं वा प्रतिपद्यते यातयामान्यस्य च्छन्दांसि भवन्ति' इति साक्षादेव ज्ञायमानं धर्मसाधनम्। ज्योतिषं च कालज्ञानद्वारा धर्मोपयोगि। कालमविज्ञायाकाले क्रियमाणं बहुवित्तव्ययायाससाध्यमपि कर्म निष्फलं भवति कालस्य सर्वकर्माङ्गत्वात्। विष्णुपुराणं च—

---

४४ B T हेतुशास्त्राश्रयाद्द्विज

अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ ४८ ॥

आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः ।
अर्थशास्त्रं चतुर्थं च विद्याश्चाष्टादशैव ताः ॥ ४९ ॥

[ विष्णु० ३·६·२५–२६ ]

आयुर्वेदस्यापन्नरुक्प्रतिक्रियया धर्मसाधनत्वम् । धनुर्वेदस्य क्षत्रियाणां युद्धोचितज्ञानद्वारा । गान्धर्वस्य गीतनृत्यादिना भगवदुद्देशेन । अर्थशास्त्रं सम्यग्वार्तादिज्ञानेन वैश्यस्य धनसंपादनद्वारेण, राज्ञोऽपि नीतिज्ञानद्वारा । इति सर्वासां विद्यानां धर्मोपयोगिता इति धर्मानुष्ठानाय सर्वविद्यापरिशीलनमावश्यकं त्रैवर्णिकस्य ॥

सर्वश्चायं धर्मराशिरङ्गतया स्वरूपेण वा भगवद्भजनपर्यवसायी । तदुक्तं विष्णुपुराणे—

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारणम् ॥ ५० ॥

[ विष्णु. ३·८·९ ]

भगवद्गीता च—

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ५१ ॥

[ भ. गी. १८·४६ ]

अपि च—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥ ५२ ॥

[ भ. गी. १८·४५ ]

विष्णुपुराणम्—

न चलति निजवर्णधर्मतो यः
सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किंचिदुच्चैः
स्थिरमनसं तमवेहि विष्णुभक्तम् ॥ ५३ ॥

[ विष्णु ३·७·२० ]

53 *d* T सितमनसं for स्थिर°.

अत्र वर्णाश्रमधर्मादचलनं सामान्यं सममतित्वं प्राकृतभक्तिफलीभूताया भक्तेः स्वरूपम् । आहरणाहनने स्ववर्णाश्रमधर्मसंपादकतत्क्रियेतरविषये । अन्यथा व्रीह्यवघातसमित्कुशाद्याहरणमन्तरेणाश्रमाचारादचलनमसंभवि । अत एव विशिनष्टि उच्चैरिति । तदुक्तं भगवद्गीतायाम्—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ॥ ५४ ॥

[ भ. गी. ३ ९ ]

सकलपुरुषार्थिना च विष्णुरेवाराधनीयः । तदुक्तम्—

भौमान्मनोरथान्सर्वान्स्वर्गिवन्द्यं तथा पदम् ।
प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम् ॥ ५५ ॥

स्वर्गिवन्द्यं पदं भूर्भुवःस्वर्लोकानामुपरि वर्तमानं महर्जनस्तपः सत्यमिति चतुष्टयम् । उत्तमं सालोक्यसारूप्यसामीप्यापेक्षया । उक्तं च याज्ञवल्क्येन—

विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ।
तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥ ५६ ॥

[ योगवासिष्ठ ? ]

अन्यत्रोक्तम्—

आलोच्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं पूज्यो नारायणः सदा ॥ ५७ ॥

[ ? ]

मनु—

नैरुज्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ज्ञानं च शंकरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ ५८ ॥

[ ? ]

इत्यादिभिरनेकैः शास्त्रैस्तत्तदर्थमितरदेवताराधनमुक्तं तत्कथमेवमुच्यते । सत्यमुक्तं, किं तूक्तं भगवद्गीतासु—

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियतास्तथा ॥ ५९ ॥

---

55 *a* B स्वर्ग for सर्वान्. *b* T तथास्पद for तथा पदं      59 *d* T नियता स्वया.

योयो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ ६० ॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ ६१ ॥

[ भ. गी. ७.२०–२२ ]

न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ ६२ ॥

[ भ. गी. ९.२४ ]

तथा—

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ ६३ ॥

[ भ. गी. ९.२३ ]

अहं च सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥ ६४ ॥

[ भ. गी. ९.२४ ]

एवं सति वर्णाश्रमाचरणैर्भगवान्भजनीय इति स्थिते भगवत्स्वरूपं लेशेनाप्यविज्ञाय तद्भजने कथं प्रवर्तताम् । न हि लोका अतिप्राकृतस्याप्युपासनीयस्य स्वरूपमविज्ञाय तमुपासत इति सतां भगवज्जिज्ञासया भवितव्यम् । भगवत्स्वरूपज्ञानं चोपदेशानुभवाभ्यामाञ्जस्येनाघटमानं तटस्थलक्षणादेवापाततो विज्ञायते । अत एव ब्रह्मजिज्ञासानन्तरमसूत्रयद्भगवान् व्यासो 'जन्माद्यस्य यतः [ ब्रह्म० १.१.२ ] इति । अस्य जगतो जन्मस्थितिलया यतस्तद् ब्रह्मेति । तत्राविकारस्य ब्रह्मणो न प्रधानविषयमभिमानं विना जगदुपादानता निमित्तता वा संभवति । अभिमाने तु सति अभिमन्तव्यविकारस्याभिमानिन्युपचारादहं स्थूल इत्यादिवद्भवति तत्संभवः । अत एव 'ईक्षतेर्नाशब्दम्' [ ब्रह्म० १.१.५ ] इत्याह । 'स ऐक्षत बहु स्यां प्रजायेय [ छा० ६.२.३ ] इत्यादिश्रुतावुपादाने ईक्षाश्रवणादनभिमन्यमानतया अशब्दात्प्रधानाच्च जगज्जन्मादीन्युक्तम् । अनभिमतप्रधानमनोबुद्धेः शुद्धस्येक्षाया असंभवात् । अभिमानाविषयस्य च प्रधानस्य जडतया प्रवृत्त्यसंभवादीश्वराभिमानविषयप्रधानोपादानिकी जगदुत्पत्तिर्ब्रह्मण्युपचर्यते इति, आदिसर्गो भगवत्स्वरूपलेशावगमाय निरूप्यते । तत्र विष्णुपुराणे—

64 a T हि for च

परः पराणां परमः परमात्मा हृदि स्थितः ।
रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥ ६५ ॥

अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥ ६६ ॥

अपक्षयो ह्रासः ॥

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ ६७ ॥

तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् ।
एकस्वरूपं च सदा हेत्वभावाच्च निर्मलम् ॥ ६८ ॥

हेतुर्धर्माधर्मौ तदभावादित्यर्थः ॥

तदेव सर्वमेवासीद्व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥ ६९ ॥

[ विष्णु० १·२·१०–१४ ]

एतावता परब्रह्मणः स्वरूपमुक्तम् । इदानीं ब्रह्मणः सर्जकरूपचतुष्टयमाह–

परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विजाः ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापरम् ॥ ७० ॥

प्रधानपुरुषव्यक्तकालानां परमं हि तत् ।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् ॥ ७१ ॥

प्रधानव्यक्तपुरुषकालास्तु प्रविभागशः ।
रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥ ७२ ॥

[ विष्णु० १·२·१५–१७ ]

प्रधानं प्रकृतिः । व्यक्तो विष्णुः । पुरुषो जीवः ॥

तथा—

व्यक्तं विष्णुस्तथाव्यक्तः पुरुषः काल एव च ।
क्रीडतो बालकस्येव क्रीडास्तस्य निशामय ॥ ७३ ॥

[ विष्णु० १·२·१८ ]

---

65 *a* T पुरुष for परम ; *b* T परमात्मात्मसंस्थितः. 68 *d* T हेयाभावाच्च for हेत्व°. 69 *a* T तदेव सर्वमेवैतद् 70 *b* T प्रथमे द्विज for प्रथमं द्विजा 71 *b* T यत् for तत्. 72 *ab* T प्रधानपुरुषव्यक्तं कालस्तु प्रतिभागशः. 73 *d* T चेष्टां तस्य for क्रीडास्तस्य.

बालकस्येत्यनेन स्वप्रयोजनाभावेऽपि प्रवृत्तिरित्युपपादितम् ।

अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः ।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥ ७४ ॥

[ विष्णु० १ २ १९ ]

यदव्यक्तं कारणं तदेव प्रधानम्, सैव सूक्ष्मा प्रकृतिरित्यर्थः । सदसदात्मकं कारणकार्यात्मकम् ॥ तथा—

अक्षयं नान्यदाधारममेयमजरं ध्रुवम् ।
शब्दस्पर्शविहीन तद्रूपादिभिरसंहितम् ॥ ७५ ॥

त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ।
तेनाग्रे सर्वमेवासीद्व्याप्तं वै प्रलयादनु ॥ ७६ ॥

[ विष्णु० १.२ २०–२१ ]

तेन प्रधानेन । अग्रे प्रलयानन्तरं पुनः सर्गकाले ॥ तथा—

तथा वेदविदो ब्रह्मनियता ब्रह्मवादिनः ।
पठन्ति चैनमेवार्थं प्रधानप्रतिपादकम् ॥ ७७ ॥

[ विष्णु० १ २ २२ ]

प्रधानशब्दः प्रतिपादको यस्य तमित्यर्थः ॥ तदाह—

नाहो न रात्रिर्न नभो न भूमि-
र्नासीत्तमो ज्योतिरभूच्च चान्यत् ।
श्रोत्रादिबुध्याद्युपलभ्यमेकं
प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥ ७८ ॥

[ विष्णु० १ २ २३ ]

प्राधानिकं प्रधानप्रकृति । पुरुषो जीव. । ब्रह्म इत्यासीदित्यर्थः ॥ ब्रह्मणः प्रकृतिपुरुषौ भिन्नावित्युपपादयति—

विष्णोः स्वरूपात्परतो हि तेऽन्ये
रूपे प्रधानं पुरुषश्च विप्र ।
तस्यैव तेऽन्यं विधृते वियुक्ते
रूपादि यत्तद्द्विज कालसंज्ञम् ॥ ७९ ॥

[ विष्णु० १ २ २४ ]

---

75 *d* T असंहतं for असंहितम्. 77 *a* T विप्र for ब्रह्म . *b* A नियम' for नियता 79 *c* T तेन्येन धृते . *d* A रूपान्तरं तद्द्विज

प्रकृतौ संस्थितं व्यक्तमतीते प्रलये तु यत् ।
तस्मात्प्राकृतसंज्ञोऽयमुच्यते प्रतिसंचरः ॥ ८० ॥

[ विष्णु० १.२.२५ ]

प्रकृतिमात्मीयतया आत्मतया चाभिमन्यमानम् । व्यक्तं विष्णुः ॥

अनादिर्भगवान्कालो नान्तोऽस्य द्विज विद्यते ।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥ ८१ ॥

गुणसाम्ये ततस्तस्मिन्पृथक्पुंसि व्यवस्थिते ।
कालस्वरूपरूपं तद्विष्णोर्मैत्रेय वर्तते ॥ ८२ ॥

ततस्तत्परमं ब्रह्म परमात्मा जगन्मयः ।
सर्वगः सर्वभूतेशः सर्वात्मा परमेश्वरः ॥ ८३ ॥

प्रधानं पुरुषं चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥ ८४ ॥

[ विष्णु० १.२.२६–२९ ]

व्ययाव्ययौ प्रकृतिपुरुषौ ॥

यथा संनिधिमात्रेण गन्धः क्षोभाय जायते ।
मनसो नोपकर्तृत्वात्तथासौ परमेश्वरः ॥ ८५ ॥

स एव क्षोभको ब्रह्मन्क्षोभ्यश्च परमेश्वरः ।
स संकोचविकाशाभ्यां प्रधानत्वेऽपि च स्थितः ॥ ८६ ॥

विकाराणुस्वरूपश्च ब्रह्मरूपादिभिस्तथा ।
व्यक्तस्वरूपश्च तथा विष्णुः सर्वेश्वरेश्वरः ॥ ८७ ॥

गुणसाम्यात्ततस्तस्मात्क्षेत्रज्ञाधिष्ठितान्मुने ।
गुणव्यञ्जनसंभूतिः सर्गकाले द्विजोत्तम ॥ ८८ ॥

[ विष्णु० १.२.३०–३३ ]

पुरुषाधिष्ठितायाः प्रकृतेर्गुणानां व्यञ्जनं प्रकाशो वैषम्यमित्यर्थः ॥
तथा—

प्रधानतत्त्वमुद्भूतं महान्तं तत्समावृणोत् ॥ ८९ ॥

[ विष्णु० १.२.३४ ]

---

86 *b* T पुरुषोत्तम° for परमेश्वर A °स्वरूपैश्च for °स्वरूपश्च. 87 *a* B विकाराश्च° for विकाराणु°;

उद्भूतं विषमीभूतं प्रधानं महत्तत्त्वमजनयदिति तात्पर्यार्थः ॥

सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ।
प्रधानतत्त्वेन च समं त्वचा बीजमिवावृतम् ॥ ९० ॥

[ वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ] ।
वैकारिकः सात्त्विकः । राजसस्तैजसः । भूतादिस्तामस इत्यर्थः ॥
त्रिविधोऽयमहंकारो महत्तत्त्वादजायत ॥ ९१ ॥

भूतेन्द्रियाणां हेतुश्च त्रिगुणत्वान्महामुने ।
यथा प्रधानेन महान्महता स तथा वृतः ॥ ९२ ॥

भूतादिश्च विकुर्वाणः शब्दतन्मात्रिकं ततः ।
ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ।
शब्दमात्रं तथाकाशं भूतादिः स समावृणोत् ॥ ९३ ॥

आकाशश्च विकुर्वाणः स्पर्शमात्रं ससर्ज ह ।
[ बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः ।
आकाशं शब्दतन्मात्रं स्पर्शमात्रं समावृणोत् ॥ ९४ ॥

ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह ।
ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते ।
स्पर्शमात्रस्तु वै वायू रूपमात्रं समावृणोत् ॥ ९५ ॥

ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्ज ह ।]
संभवन्ति ततोऽम्भांसि रसाधाराणि तानि च ।
रसमात्राणि चाम्भांसि रूपमात्रं समावृणोत् ॥ ९६ ॥

विकुर्वाणानि चाम्भांसि गन्धमात्रं ससर्जिरे ।
संघातो जायते तस्मात्तस्य गन्धो गुणः स्मृतः ॥ ९७ ॥

तस्मिंस्तस्मिंस्तु तन्मात्रा ततस्तन्मात्रता स्मृता ।
तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ॥ ९८ ॥

न शान्ता नापि घोरास्ते न मूढाश्चाविशेषवत् ।
भूततन्मात्रसर्गोऽयमहंकारात्तु तामसात् ॥ ९९ ॥

---

91 *ab* om. in A. 92 *a* T हेतु स for हेतुश्च. 93 *a* T भूतादि for भूतादिश्च, *b* T सर्गतन्मात्रक 94–96 *ab* om. in A B. 98 *a* A L षितते for तन्मात्रा; *b* T तेन for तत. 99 *b* T चाविशेषिण.

तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ।
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥ १०० ॥

त्वक्चक्षुर्नासिका जिह्वा श्रोत्रमत्र च पञ्चमम् ।
शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वै द्विज ॥ १०१ ॥

पायूपस्थौ करौ पादौ वाणी मैत्रेय पञ्चमी ।
विसर्गशिल्पगत्युक्तिकर्म तेषां च कथ्यते ॥ १०२ ॥

आकाशवायुतेजांसि सलिलं पृथिवी तथा ।
शब्दादिभिर्गुणैर्ब्रह्मन्संयुक्तान्युत्तरोत्तरैः ।
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥ १०३ ॥

नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ १०४ ॥

समेत्यान्योन्यसंयोगं परस्परसमाश्रयम् ।
एकसंघातलक्ष्याश्च संप्राप्यैक्यमशेषतः ॥ १०५ ॥

पुरुषाधिष्ठितत्वाच्च प्रधानानुग्रहेण च ।
महदाद्यो विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥ १०६ ॥

तत्क्रमेण प्रवृद्धं तु जलबुद्बुदवत्समम् ।
[ भूतेभ्योऽण्डं महाबुद्धे बृहत्तदुदकेशयम् ।
प्राकृतं ब्रह्मरूपस्य विष्णोः संस्थानमुत्तमम् ] ॥ १०७ ॥

तत्राव्यक्तस्वरूपोऽसौ व्यक्तरूपी जगत्पतिः ।
विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः ॥ १०८ ॥

मेरुरुल्बमभूत्तस्य जरायुश्च महीधराः ।
गर्भोदकं समुद्राश्च तस्यासन्सुमहात्मनः ॥ १०९ ॥

साद्रिद्वीपसमुद्राश्च सज्योतिर्लोकसंग्रहः ।
तस्मिन्नण्डेऽभवद्विप्र सदेवासुरमानुषः ।
वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः ॥ ११० ॥

---

100 a A B ततश्चात्र for मनश्चात्र 102 b T पाश्च for वाणी 106 b T वा for च.
107 a B प्रवृद्धे for प्रवृद्ध c/c/ om. in A B. 108 a A B तत्र व्यक्त° for तत्राव्यक्त°.

वृतं दशगुणैरण्डं भूतादिर्महता तथा ।
अव्यक्तेनावृतो ब्रह्मंस्तैः सर्वैः सहितो महान् ॥ १११ ॥

एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ।
नालिकेरफलस्यान्तर्बीजं बाह्यदलैरिव ॥ ११२ ॥

जुषन्रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः ।
ब्रह्मा भूत्वास्य जगतो विसृष्टौ स प्रवर्तते ॥
सृष्टिं च यात्यनुयुगं यावत्कल्पविकल्पना ॥ ११३ ॥ इति ॥

[ विष्णु० १.२ ३६–६० ]

अत्रायं प्रकरणार्थः— प्रकृतिर्गुणानां साम्यं, तस्याः पुरुषेक्षया क्षोभः वैषम्यं गुणानाम्, तदेव महत्तत्त्वम् । तस्मात्त्रिविधोऽहंकारः । सात्त्विका देवा मनश्च । दिशः वायुः सूर्यो वरुणो नासत्याविति बुद्धीन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणानां, अग्निरिन्द्रो विष्णुः प्रजापतिर्मित्र इति वाक्पाणिपादोपस्थपायूनां कर्मेन्द्रियाणां, मनसश्चन्द्रमा इति वैकारिका देवाः । राजसानीन्द्रियाणि । तामसात्पञ्चमहाभूतानि तन्मात्रक्रमेणेति ॥ एष आदिसर्गः ॥

[ श्रीटोडरानन्दे सर्गसौख्ये आदिसर्गो नाम प्रथमो हर्षः ]

१ . २

अथ प्रतिसर्गः ॥

तत्र ब्राह्मेण मानेन वर्षशतं ब्रह्मण आयुः । तत्र प्रथमं परार्धमतीतं पाद्मः कल्पः । तदर्धे चरमे द्वितीयपरार्धे वाराहः कल्पः प्रथमः । तत्र चतुर्दश मनवः । स्वायंभुवस्वारोचिषोत्तमतामसरैवतचाक्षुषा इति षडतीताः । सांप्रतो वैवस्वतः । भविष्याश्च सावर्णिरैच्यभौत्यमेरुसावर्ण्यश्चत्वारः इति । तथा च ब्रह्मपुराणम् ॥

स्वायंभुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा ।
औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ।
वैवस्वतश्च मो विप्राः सांप्रतं मनुरुच्यते ॥ १ ॥

---

111 *d* A मंहतो for महितो 113 *d* T संप्रवर्तते for स प्रवर्तते.
1 *c* A औत्तम ; T औत्तमि .

सप्तदशलक्षाणि अष्टाविंशतिसहस्राणि प्रत्येकं लभ्यन्ते । इदमधिकमादाय मन्वन्तरमानमित्यर्थः । अतिरोहितमन्यत् ॥

अथ वाराहकल्पसर्गक्रमः ॥ विष्णुपुराणे—

पराशर उवाच ।

प्रजाः ससर्ज भगवान्ब्रह्मा नारायणात्मकः ।
प्रजापतिपतिर्देवो यथा तन्मे निशामय ॥ १२ ॥

अतीतकल्पावसाने निशासुप्तोत्थितः प्रभुः ।
सत्त्वोद्रिक्तस्ततो ब्रह्मा शून्यं लोकमवैक्षत ॥ १३ ॥

नारायणः परोऽचिन्त्यः परेषामपि स प्रभुः ।
ब्रह्मस्वरूपो भगवाननादिः सर्वसंभवः ॥ १४ ॥

इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ।
ब्रह्मस्वरूपिणं देवं जगतः प्रभवाप्ययम् ॥ १५ ॥

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥ १६ ॥

तोयान्तः स महीं ज्ञात्वा जगत्येकार्णवे पुनः ।
अनुमानात्तदुद्धारं कर्तुकामः प्रजापतिः ॥ १७ ॥

अकरोत्स तनूमन्यां कल्पादिषु यथा पुरा ।
मत्स्यकूर्मादिकां तद्वद्वाराहं वपुरास्थितः ॥ १८ ॥

वेदयज्ञमयं रूपमशेषजगतः स्थितौ ।
स्थितः स्थिरात्मा सर्वात्मा परमात्मा प्रजापतिः ॥ १९ ॥

जनलोकगतैः सिद्धैः सनकाद्यैरभिष्टुतः ।
प्रविवेश तदा तोयमात्माधारो धराधरः ॥ २० ॥

निरीक्ष्य तं तदा देवी पातालतलमागतम् ।
तुष्टाव प्रणता भूत्वा भक्तिनम्रा वसुंधरा ॥ २१ ॥

[ विष्णु० १ ४ ३–११ ]

ब्रह्मरूपो नारायणो वराहरूपमास्थाय तोयान्तर्महीमनुमाय तोयं प्रविवेशेत्यर्थः ॥ तथा—

---

11 *c/* om in B　　17 *b* T प्रभु॰ for पुन.　　19 *d* A भगवान् for सर्वात्मा॰

एवं संस्तूयमानस्तु पृथिव्या पृथिवीधरः ।
सामस्वरध्वनिः श्रीमाञ्जगर्ज परिघर्घरः ॥ २२ ॥

ततः समुत्क्षिप्य धरां स दंष्ट्रया
महावराहः स्फुटपद्मलोचनः ।
रसातलादुत्पलपत्रसंनिभः
समुत्थितो नील इवाचलो महान् ॥ २३ ॥
[ विष्णु० १·४·२५–२६ ]

सनकसनन्दनादिस्तुत्यनन्तरम्—

एवं संस्तूयमानस्तु परमात्मा महीधरः ।
उज्जहार क्षितिं क्षिप्रं न्यस्तवांश्च महाम्भसि ॥ २४ ॥

तस्योपरि जलौघस्य महती नौरिव स्थिता ।
विततत्वात्तु देहस्य न मही याति संप्लवम् ॥ २५ ॥

ततः क्षितिं समां कृत्वा पृथिव्यां सोऽचिनोद्गिरीन् ।
यथाविभागं भगवाननादिः परमेश्वरः ॥ २६ ॥

प्राक्सर्गदग्धानखिलान्पर्वतान्पृथिवीतले ।
अमोघेन प्रभावेण ससर्जामोघवाञ्छितः ॥ २७ ॥

भूविभागं ततः कृत्वा सप्त द्वीपान्यथातथम् ।
भूराद्यांश्चतुरो लोकान्पूर्ववत्समकल्पयत् ॥ २८ ॥

ब्रह्मरूपधरो देवस्ततोऽसौ रजसावृतः ।
चकार सृष्टिं भगवांश्चतुर्वक्त्रधरो हरिः ॥ २९ ॥

निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणाम् ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥ ३० ॥

निमित्तमात्रं मुक्त्वैकं नान्यत्किंचिदपेक्ष्यते ।
नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तुतस्तु तम् ॥ ३१ ॥
[ विष्णु० १·४·४५–५२ ]

असौ ब्रह्मा । प्राधान्येन कारणीभूताः शक्तयः । अविदितानां गुणानां सूक्ष्मरूपतया इव स्थानां शक्तिः । एकं कालं कालविशेषमासाद्य शक्तिरेव सर्वेषां कार्याणां कारणम् । ब्रह्मा निमित्तमात्रमित्यर्थः ॥

---

22 *d* A परिघर्घरं. 30 *b* A सृष्टीनां for सृज्यानां 31 *b* B अवेक्षते for अपेक्ष्यते , *d* A वस्तु वास्तुता for वस्तुतस्तु तं. 1 B सर्वेषां for गुणानां.

अत्रायं प्रकरणार्थः—वस्तुगत्या भावो नाम उत्पादविनाशौ आविर्भावतिरोभावावेव, तत्र सूक्ष्मरूपतयावस्थानं तिरोभावः, स्थूलरूपतयावस्थानमाविर्भावः, तथा च सूक्ष्मरूपतयावस्थितैर्गुणैर्भावानामभिव्यक्तिरुत्पत्तिरिति ॥

विशिष्य सर्गमाह—

सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथापुरा ।
अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥ ३२ ॥

तमो मोहो महामोहस्तामिस्रोऽथान्धसंज्ञितः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ ३३ ॥

पञ्चधा संज्ञितः सर्गो ध्यायतोऽप्रतिबोधवान् ।
बहिरन्तःप्रकाशश्च संवृतात्मा नगात्मकः ।
मुख्या नगा यतः प्रोक्ता मुख्यसर्गस्ततस्त्वयम् ॥ ३४ ॥

तं दृष्ट्वा साधकं सर्गममन्यदपरं पुनः ।
तस्याभिध्यायतः सर्गस्तिर्यक्स्रोतोऽभ्यवर्तत ।
यस्मात्तिर्यक्प्रवृत्तः स तिर्यक्स्रोतस्ततः स्मृतः ॥ ३५ ॥

पश्वादयस्ते विख्यातास्तमःप्राया ह्यवेदिनः ।
उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः ॥ ३६ ॥

अहंकृता अहंमाना अष्टाविंशतिधात्मकाः ।
अन्तःप्रकाशास्ते सर्वे आवृताश्च परस्परम् ॥ ३७ ॥

तमप्यसाधकं मत्वा ध्यायतोऽन्यस्ततोऽभवत् ।
ऊर्ध्वस्रोतस्तृतीयस्तु सात्त्विकोर्ध्वमवर्तत ॥ ३८ ॥

तेषु सुप्रीतिबहुला बहिरन्तश्च नावृताः ।
प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोतोद्भवाः स्मृताः ॥ ३९ ॥

तुष्ट्यात्मकस्तृतीयस्तु देवसर्गस्तु यः स्मृतः ।
तस्मिन्सर्गेऽभवत्प्रीतिर्निष्पन्ने ब्रह्मणस्तदा ॥ ४० ॥

ततोऽन्यं स तदा दध्यौ साधकं सर्गमुत्तमम् ।
असाधकांस्तु ताञ्ज्ञात्वा मुख्यसर्गादिसंभवान् ॥ ४१ ॥

---

33 *b* B चान्धसंज्ञितः T ह्यन्धसंज्ञित. for अथान्धसंज्ञितः. 34 *a* T पञ्चधावस्थित. for पञ्चधा संज्ञित ; *c* T यतःप्रोक्ता for यतः प्रोक्ता. 37 *a* B अहंकारा for अहंकृता. 37 *b* T अष्टाविंशद्वधात्मका. 39 *a* T ते सुमप्रीति° for तेषु सुप्रीति°. 40 *a* A तुष्टात्मन ; B तुष्टात्मान. for तुष्ट्यात्मकः.

तथाभिध्यायिनस्तस्य सत्याभिध्यायिनस्ततः ।
प्रादुर्भूतस्तदा व्यक्तादर्वाक्स्रोतस्तु साधकः ।
यस्मादर्वाग्व्यवर्तन्त ततोऽर्वाक्स्रोतसस्तु ते ॥ ४२ ॥

ते च प्रकाशबहुला[स्तमोद्रिक्ता रजोधिकाः ।
तस्मात्ते दुःखबहुला ] भूयोभूयश्च कारिणः ।
प्रकाशा बहिरन्तश्च मनुष्याः साधकास्तु ते ॥ ४३ ॥

इत्येते कथिताः सर्गाः षडेव मुनिसत्तम ।
प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ॥ ४४ ॥

तन्मात्राणां द्वितीयश्च भूतसर्गो हि स स्मृतः ।
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकस्तु सः ॥ ४५ ॥

इत्येष प्राकृतः सर्गः संभूतो बुद्धिपूर्वकः ।
मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥ ४६ ॥

तिर्यक्स्रोतश्च यः प्रोक्तस्तैर्यग्योन्यः स उच्यते ।
ततोर्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः ॥ ४७ ॥

ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः ।
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च यः ॥ ४८ ॥

पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ।
प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ॥ ४९ ॥

इत्येते वः समाख्याता नव सर्गाः प्रजापतेः ।
प्राकृता वैकृताश्चैव जगतो मूलहेतवः ।
सृजतो जगदीशस्य किमन्यच्छ्रोतुमिच्छसि ॥ ५० ॥ इति ॥

[ विष्णु० १ ५ ३–२४ ]

अत्रायं समुदायार्थः—आदौ महतः सर्गः [ स एव ब्रह्मा ]। ततः शब्दादितन्मात्राणां स एव भूतसर्ग इति द्वितीयः। ततो वैकारिक इन्द्रियाधिष्ठातृदेवतासर्गस्तृतीयः। एते प्राकृता बुद्धिपूर्वकाः। बुद्धिर्महत्तत्त्वं तदभिमाना या तत्पूर्वकाः। ततो वैकृताः पञ्च। तत्रादौ मुख्यः सर्गः तामसः स्थावराणाम्। ततस्तिर्यक्स्रोतः सर्गो राजसस्तमोधिकस्तिरश्चां गवादीनाम्।

42 a T अभिध्यायत for अभिध्यायिन 43 *bc* om in A 44 *b* T षड्त्र for षडेव

तत ऊर्ध्वस्रोतसां देवानां सात्त्विकः सर्गः । ततोऽर्वाक्स्रोतसां मानुषाणां रजोबहुलः सर्गः । ततोऽनुग्रहः सात्त्विकस्तामसश्च यक्षरक्षःप्रभृतीनाम् । एवं पञ्च वैकृताः । नवमः कौमारः सात्त्विकस्तमोधिकः कूष्माण्डादीनाम् । एवं नव सर्गाः । श्रुतिरपि ' एकधा नवधा भवति' इति ॥

एषां प्रत्येकं विशेषमाह—

> कर्मभिर्भाविताः पूर्वैः कुशलाकुशलैस्तथा ।
> ख्यात्या तया ह्यनिर्मुक्ताः संहारे ह्युपसंहृताः ।
> स्थावरान्ताः सुराद्याश्च प्रजा ब्रह्मंश्चतुर्विधाः ॥ ५१ ॥
>
> [ विष्णु० १ ५ २६–२८ ]

कुशलाकुशलैः पुण्यपापरूपैः । ख्यातिपदेनात्र संस्कार उच्यते ॥

तथा—

> ब्रह्मणः कुर्वतः सृष्टिं जज्ञिरे मानसीस्तु ताः ।
> ततो देवासुरपितॄन्मानुषांश्च चतुष्टयम् ॥ ५२ ॥
>
> सिसृक्षुरम्भांस्येतानि स्वमात्मानमयीयुजत् ।
> युक्तात्मनस्तमोमात्रा उद्रिक्ताभूत्प्रजापतेः ॥ ५३ ॥
>
> सिसृक्षोर्जघनात्पूर्वमसुरा जज्ञिरे ततः ।
> उत्ससर्ज ततस्तां तु तमोमात्रात्मिकां तनुम् ॥
> सा तु त्यक्ता तनुस्तेन मैत्रेयाभूद्विभावरी ॥ ५४ ॥
>
> सिसृक्षुरन्यदेहस्थः प्रीतिमाप ततः सुराः ।
> सत्त्वोद्रिक्ताः समुद्भूता मुखतो ब्रह्मणो द्विज ॥ ५५ ॥
>
> त्यक्ता सापि तनुस्तेन सत्त्वप्रायमभूद्दिनम् ।
> ततो हि बलिनो रात्रावसुरा देवता दिवा ॥ ५६ ॥
>
> सत्त्वमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ।
> पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे ॥ ५७ ॥
>
> उत्ससर्ज पितॄन्सृष्ट्वा ततस्तामपि स प्रभुः ।
> सा चोत्सृष्टाभवत्सन्ध्या दिनरात्र्यन्तरा स्थितिः ॥ ५८ ॥

---

1 A om. सर्गाः Portion from 51c upto 69c is lost in B on a missing folio. 51 f A ब्राह्मी for ब्रह्मं 53 b T अयूयुजत् for अयीयुजत् 58 d T दिननक्तान्तरस्थितिः

रजोमात्रात्मिकामन्यां जगृहे स तनुं ततः ।
रजोमात्रोत्कटा जाता मनुष्या द्विजसत्तम ॥ ५९ ॥

तामप्याशु स तत्याज तनुमाद्यः प्रजापतिः ।
ज्योत्स्ना समभवत्सापि प्राक्संध्या याभिधीयते ॥ ६० ॥

ज्योत्स्नोद्गमे तु बलिनो मनुष्याः पितरस्तथा ।
मैत्रेय संध्यासमये तस्मादेते भवन्ति वै ॥ ६१ ॥

[ विष्णु० १ ५ २७–३७ ]

पितरः संध्यासमये सायंसंध्यासमये बलिनो भवन्तीत्यर्थः ॥

ज्योत्स्ना रात्र्यहनी संध्या चत्वार्येतानि वै प्रभो ।
ब्रह्मणस्तु शरीराणि त्रिगुणोपाश्रयाणि च ॥ ६२ ॥

तमोमात्रात्मिकामेव तथान्यां जगृहे तनुम् ।
ततः क्षुद् ब्रह्मणो जाता जज्ञे कोपस्तया ततः ॥ ६३ ॥

क्षुत्क्षामानन्धकारेऽथ सोऽसृजद्भगवांस्ततः ।
[ विरूपाः ] श्मश्रुला जातास्तेऽभ्यधावन्त तं प्रभुम् ॥ ६४ ॥

मैवं भो रक्ष्यतामेष यैरुक्तं राक्षसास्तु ते ।
ऊचुः खादाम इत्यन्ये ये ते यक्षास्तु यक्षणात् ॥ ६५ ॥

अप्रियेणास्य तान्दृष्ट्वा केशाः शीर्यन्त वेधसः ।
हीनाश्च शिरसो भूयः समारोहन्त ते शिरः ।
सर्पणात्तेऽभवन्सर्पा हीनत्वादहयः स्मृताः ॥ ६६ ॥

[ विष्णु० १ ५ ३७–४२ ]

अप्रियेण दुःखेन ॥

ततः क्रुद्धो जगत्स्रष्टा क्रोधात्मानो विनिर्ममे ।
वर्णेन कपिलेनोग्रा भूतास्ते पिशिताशिनः ॥ ६७ ॥

धयतो गां समुद्भूता गन्धर्वास्तस्य तत्क्षणात् ।
पिबतो जज्ञिरे वाचं गन्धर्वास्ते ततो द्विज ॥ ६८ ॥

[ विष्णु० १ ५ ४३–४४ ]

---

63 *a* T रजोमात्रा° for तमोमात्रा°. 64 *c* A om विरूपा 66 *a* T अप्रियानय for अप्रियेणाय, *c* A सर्वगात्रे for सर्पणात्ते 68 *d* T तेन ते for ते ततो

वाचं पिबतो मौनिन इत्यर्थः ॥

एतानि सृष्ट्वा भगवान् ब्रह्मा तच्छक्तिनोदितः ।
ततः स्वच्छन्दतोऽन्यानि वयांसि वयसोऽसृजत् ॥ ६९ ॥

[ विष्णु० १ ५ ४५ ]

वयसो मुखात् ॥

अवयो वक्षसश्चक्रे मुखतोऽजाः स सृष्टवान् ।
सृष्टवानुदराद्गाश्च पार्श्वाभ्यां च प्रजापतिः ॥ ७० ॥
पद्भ्यां चाश्वान्स मातङ्गान्शरभान्गवयान्मृगान् ।
उष्ट्रानश्वतरांश्चैव न्यङ्कूनन्याश्च जातयः ।
ओषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे ॥ ७१ ॥
त्रेतायुगमुखे ब्रह्मा कल्पस्यादौ द्विजोत्तम ।
सृष्ट्वा पश्वोषधीः सम्यग्युयोज स तदाध्वरे ॥ ७२ ॥
गौरजः पुरुषो मेष अश्वाश्वतरगर्दभाः ।
एतान्ग्राम्यान्पशूनाहुरारण्यांश्च निबोध मे ॥ ७३ ॥
श्वापदो द्विपदो हस्ती वानराः पक्षिपञ्चमाः ।
औदकाः पशवः षष्ठाः सप्तमाश्च सरीसृपाः ॥ ७४ ॥ इति ।

[ विष्णु० १ ५ ४७–५१ ]

अतः परं ब्रह्मणश्चतुर्षु मुखेषु प्रत्येकं मुखादुत्पत्तिमाह—

गायत्रं च ऋचश्चैव त्रिवृत्साम रथन्तरम् ।
अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् ॥ ७५ ॥
यजूंषि त्रैष्टुभं छन्दः स्तोमं पञ्चदशं तथा ।
बृहत्साम तथोक्थ्यं च दक्षिणादसृजन्मुखात् ॥ ७६ ॥

[ विष्णु० १ ५ ५२–५३ ]

उक्थ्यं च यज्ञविशेषः (?) ॥

सामानि जगती छन्दः स्तोमं सप्तदशं तथा ।
वैरूप्यमतिरात्रं च पश्चिमादसृजन्मुखात् ॥ ७७ ॥

[ विष्णु० १ ५ ५४ ]

अतिरात्रं यज्ञविशेषः ॥

---

71 *b* T रासभान् for शरभान् ॥ A फलमूलानि for फलमूलिन्यो 73 *bcd* om in B. 74 *a* T द्विरदो for द्विपदो 75 B चतुर्मुखस्य for चतुर्षु मुखेषु.

एकविंशमथर्वाणमप्तोर्यामाणमेव च ।
अनुष्टुभं सवैराजमुत्तरादसृजन्मुखात् ॥ ७८ ॥

[ विष्णु० १ ५ ५५ ]

अथर्वाणमथर्ववेदम् । अप्तोर्यामा यज्ञविशेषः । वैराजं सामविशेषः ॥

तथा—

उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ।
देवासुरपितॄन्सृष्ट्वा मनुष्यांश्च प्रजापतिः ॥ ७९ ॥

ततः पुनः ससर्जादौ स कल्पस्य पितामहः ।
यक्षान्पिशाचान्गन्धर्वान्सृष्ट्वैवाप्सरसां गणान् ।
नरकिंनररक्षांसि वय:पशुमृगोरगान् ॥ ८० ॥

अव्ययं च व्ययं चैव यदिदं स्थाणुजङ्गमम् ।
तत्ससर्ज तदा ब्रह्मा भगवानादिकृद्विभुः ॥ ८१ ॥

तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ॥ ८२ ॥

हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
उद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ ८३ ॥

इन्द्रियार्थेषु भूतेषु शरीरेषु च स प्रभुः ।
नानात्वं विनियोगं च धातैव व्यसृजत्स्वयम् ॥ ८४ ॥

नाम रूपं च भूतानां कृत्यानां च प्रवर्तनम् ।
वेदशब्देभ्य एवासौ देवादीनां चकार सः ॥ ८५ ॥

ऋषीणां नामधेयानि यथा वेदे श्रुतानि वै ।
यथानियोगयोग्यानि सर्वेषामपि सोऽकरोत् ॥ ८६ ॥

यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ ८७ ॥

करोत्येवंविधां सृष्टिं कल्पादौ स पुनः पुनः ।
सिसृक्षाशक्तियुक्तोऽसौ सृज्यशक्तिप्रणोदितः ॥ ८८ ॥

[ विष्णु० १ ५ ५६–६५ ]

---

83 c T नद्भाविता for उद्भाविता

इति निगदव्याख्यातानि ॥

तथा—

एवं भूतानि सृष्टानि स्थावराणि चराणि च ॥ ८९ ॥

यदास्य ताः प्रजाः सर्वा न व्यवर्धन्त धीमतः ।
अथान्यान्मानसान्पुत्रान्सदृशानात्मनोऽसृजत् ॥ ९० ॥

भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा ।
मरीचिमत्रिं दक्षं च वसिष्ठं चैव मानसात् ॥ ९१ ॥

नव ब्रह्माण इत्येते पुराणे निश्चयं गताः ।
सर्वे तेऽनागतज्ञाना वीतरागा विमत्सराः ॥ ९२ ॥

तेष्वेवं निरपेक्षेषु लोकसृष्टौ महात्मनः ।
ब्रह्मणोऽभून्महान्क्रोधस्त्रैलोक्यदहनक्षमः ॥ ९३ ॥

तस्य क्रोधात्समुद्भूतज्वालामालाविदीपितम् ।
ब्रह्मणोऽभूत्तदा सर्वं त्रैलोक्यमखिलं मुने ॥ ९४ ॥

भ्रुकुटीकुटिलात्तस्य ललाटक्रोधदीपितात् ।
समुत्पन्नस्तदा रुद्रो मध्याह्नार्कसमप्रभः ॥ ९५ ॥

अर्धनारीश्वरवपुः प्रचण्डोऽतिशरीरवान् ।
विभजात्मानमित्युक्त्वा तं ब्रह्मान्तर्दधे पुनः ॥ ९६ ॥

तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं तदाकरोत् ।
बिभेद पुरुषत्वं च दशधा चैकधा च सः ॥ ९७ ॥

सौम्यासौम्यैस्तथा शान्ताशान्तैः स्त्रीत्वं च स प्रभुः ।
बिभेद बहुधा देवः स्वरूपैरसितैः सितैः ॥ ९८ ॥

ततो ब्रह्मात्मसंभूतं पूर्वं स्वायंभुवं प्रभुम् ।
[ आत्मानमेव कृतवान्प्रजापालं मनुं द्विज ॥ ९९ ॥

After 92 B adds : सनन्दनादयो ये ते पूर्वं सृष्टास्तु वेधसा । न ते लोकेष्वसज्जन्तो निरपेक्षाः प्रजासु ते. 96 *a* T अर्धनारीनरवपुः. 97 *b* T B तथा for तदा.
Portion from 99c to 100 c om. in A.

शतरूपां च तां नारीं तपोनिर्धूतकल्मषाम् ।
स्वायंभुवो ] मनुर्देवः पत्न्यर्थे जगृहे विभुः ॥ १०० ॥

तस्माच्च पुरुषाद्देवी शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ प्रसूत्याकूतिसंज्ञितम् ।
कन्याद्वयं च धर्मज्ञ रूपौदार्यगुणान्वितम् ॥ १०१ ॥

ददौ प्रसूतिं दक्षायाथाकूतिं रुचये पुरा ।
प्रजापतिः स जग्राह तयोर्यज्ञे सुदक्षिणः ॥ १०२ ॥

[ विष्णु० १ ७ ३–१८ ]

इत्यादिसर्गः स्वायंभुवमन्वन्तरे । चाक्षुषे तु विशेषः ब्रह्माण्डपुराणे । वामनपुराणे । सूत उवाच ।

पूर्वे सप्तर्षयः प्रोक्ता ये वै स्वायंभुवेऽन्तरे ।
मनोरन्तरमासाद्य पुनर्वैवस्वतं किल ॥ १०३ ॥

भवाभिशापात्संक्रुद्धा अप्राप्तास्ते तदा तपः ।
उपपन्ना जने लोके सकृदागमनास्तु ते ॥ १०४ ॥

ऊचुः सर्वे तदान्योन्यं जनलोके महर्षयः ।
एत एव महाभागा वारुणे विततेऽध्वरे ॥ १०५ ॥

सर्वे वयं प्रसूयामश्चाक्षुषस्यान्तरे मनोः ।
पितामहात्मजाः सर्वे तत्र श्रेयो भविष्यति ॥ १०६ ॥

एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः ।
ब्रह्मणो जुह्वतः शुक्रमग्नौ पूर्वं प्रजेप्सया ।
ऋषयो जज्ञिरे पूर्वं द्वितीयमिति विश्रुतम् ॥ १०७ ॥

भृग्वङ्गिरा मरीचिश्च पुलस्त्यः पुलहः क्रतुः ।
अत्रिश्चैव वसिष्ठश्च अष्टौ ते ब्रह्मणः सुताः ॥ १०८ ॥

हुते चाग्नौ समुद्भूतो ज्वालया मिश्रितः कविः ।
हिरण्यगर्भस्तं दृष्ट्वा ज्वालां भित्त्वा विनिर्गतम् ।
भृगुस्त्वमिति होवाच यस्मात्तस्मात्स वै भृगुः ॥ १०९ ॥

---

100 *d* A पत्नी चैव गृहे विभु, B पत्नीत्वे जगृहे विभु  1 B वायुपुराणे for वामनपुराणे  104 *a* A मप्तदागमनास्तु ते

महादेवस्तथोद्भूतं दृष्ट्वा ब्रह्माणमब्रवीत् ।
ममैष पुत्रकामस्य दीक्षितस्य त्वया प्रभो ।
विजज्ञेऽथ भृगुर्देव मम पुत्रो भवेदिति ॥ ११० ॥

तथेति समनुज्ञातो महादेवः स्वयंभुवा ।
पुत्रत्वे कल्पयामास महादेवस्तदा भृगुम् ।
वारुणा भृगवस्तस्मात्तदपत्यं च स प्रभुः ॥ १११ ॥

द्वितीयं तु ततः शुक्रमङ्गारेष्ववपत्प्रभुः ।
अङ्गारेषु ततोऽङ्गानि संहतानि ततोऽङ्गिराः ॥ ११२ ॥

संभूतिं तस्य तां दृष्ट्वा वह्निर्ब्रह्माणमब्रवीत् ।
रेतोधास्तुभ्यमेवाहं द्वितीयोऽयं ममास्त्विति ॥ ११३ ॥

एवमस्त्विति सोऽप्युक्तो ब्रह्मणा सद्सस्पतिः ।
तस्मादाङ्गिरसाश्चापि आग्नेया इति नः श्रुतम् ॥ ११४ ॥

षट्कृत्वस्तु पुनः शुक्रे ब्रह्मणा लोककर्तृणा ।
हुते समभवंस्तत्र षड् ब्रह्माण इति श्रुतम् ॥ ११५ ॥

मरीचिः प्रथमं तत्र मरीचिभ्यः समुत्थितः ।
क्रतौ तस्मिन्क्रतुर्जज्ञे यतस्तस्मात्स वै क्रतुः ॥ ११६ ॥

अहं तृतीय इत्यत्रिस्तस्मादत्रिः स कीर्त्यते ।
केशैस्तु निचितो यस्मात्पुलस्त्यस्तेन स स्मृतः ।
केशैर्लम्बैः समुद्भूतस्तस्मात्स पुलहः स्मृतः ॥ ११७ ॥

वसुमध्यात्समुत्पन्नो वसीयान्वसुमान्स्वयम् ।
वसिष्ठ इति तज्ज्ञैः स प्रोच्यते ब्रह्मवादिभिः ॥ ११८ ॥

इत्येते ब्रह्मणः पुत्रा मानसाः षण्महर्षयः ।
लोकस्य संतानकरास्तैरिमा वर्धिताः प्रजाः ।
प्रजापतय इत्येते पठ्यन्ते ब्रह्मणः सुताः ॥ ११९ ॥

अपरे पितरो नाम एभिरेव महर्षयः ।
उत्पादिता देवगणाः सप्तलोकेषु विश्रुताः ॥ १२० ॥

मारीचा भार्गवाश्चैव तथैवाङ्गिरसास्तथा ।
पौलस्त्याः पौलहाश्चैव वासिष्ठाश्चैव विश्रुताः ॥ १२१ ॥

[ वामन ! ]

---

110 *d* B मया for त्वया    117 *c* B केशेषु निचितैर्भूत्वा ·

वैवस्वते तु वार्क्ष्येय्यां मारिषायां दशप्रचेतोभ्यो दक्षो जातः। तदुत्पत्तिमभिधाय। विष्णुपुराणे —

प्रजाः सृजेति व्यादिष्टः पूर्वं दक्षः स्वयंभुवा।
यथा ससर्ज भूतानि तथा शृणु महामते ॥ १२२ ॥

मानसान्येव भूतानि पूर्वं दक्षोऽसृजत्तदा।
देवानृषीन्सगन्धर्वानसुरान्पन्नगांस्तथा ॥ १२३ ॥

यदास्य विप्र मानस्यो न व्यवर्धन्त ताः प्रजाः।
ततः संचिन्त्य स पुनः सृष्टिहेतोः प्रजापतिः ॥ १२४ ॥

मैथुनेनैव धर्मेण सिसृक्षुर्विविधाः प्रजाः।
असिक्नीमावहत्कन्यां वीरणस्य प्रजापतेः।
सुतां सुतपसा युक्तां महतीं लोकधारिणीम् ॥ १२५ ॥

अथ पुत्रसहस्राणि वैरिण्यां पञ्च वीर्यवान्।
असिक्न्यां जनयामास सर्गहेतोः प्रजापतिः ॥ १२६ ॥

[ विष्णु० १. १६. ८७–९३ ]

एते च नारदवचसा भुवः सर्वतोऽन्तर्दर्शनाय गता नाद्यापि निवृत्ता इत्याद्युक्तम्। ततश्च—

षष्टिं दक्षोऽसृजत्कन्यां वीरण्यामिति नः श्रुतम् ॥ १२७ ॥

ददौ स दश धर्माय कश्यपाय त्रयोदश।
सप्तविंशतिः सोमाय चतस्रोऽरिष्टनेमिने ॥ १२८ ॥

द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे तथा।
द्वे कृशाश्वाय विदुषे तासां नामानि मे शृणु ॥ १२९ ॥

अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती।
संकल्पा च मुहूर्ता च साध्या विश्वा च ता दश ॥ १३० ॥

धर्मपत्न्यो दश त्वेतास्तास्वपत्यानि नः शृणु।
विश्वेदेवास्तु विश्वायाः साध्या साध्यान्व्यजायत ॥ १३१ ॥

मरुत्वत्यां मरुत्वन्तो वसोस्तु वसवस्तथा।
भानोस्तु भानवस्तात मुहूर्तायां मुहूर्तजाः ॥ १३२ ॥

[ विष्णु० १.१६.१०३–१०८ ]

---

122 *d* T महामुने for महामते. 130 *a* T वसुयामी for वसुर्याम्या.

मुहूर्तेऽधिष्ठातृत्वेन जायन्ते ॥ तथा—

लम्बायां चैव घोषोऽथ नागवीथी तु यामिजा ।
पृथिवीविषयं सर्वमरुन्धत्यां व्यजायत ।
संकल्पायां च सर्वात्मा जज्ञे संकल्प एव हि ॥ १३३ ॥

ये त्वनेकवसुप्राणा देवा ज्योतिःपुरोगमाः ।
वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरम् ॥ १३४ ॥

आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः ॥ १३५ ॥

आपस्य पुत्रो वैतण्ड्यः श्रमः शान्तो ध्रुवस्तथा ।
ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः ॥ १३६ ॥

सोमस्य भगवान्वर्चा वर्चस्वी येन जायते ।
धरस्य पुत्रो द्रविणो हुतो हव्यवहस्तथा ।
मनोहरायां शिशिरः प्राणोऽथ रमणस्तथा ॥ १३७ ॥

[ विष्णु० १.१५.१०९–११४ ]

एते धरस्यैव ॥

अनिलस्य शिवा भार्या तस्याः पुत्रः पुरोजवः ।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ १३८ ॥

अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत ।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ।
अपत्यं कृत्तिकानां तु कार्तिकेय इति स्मृतः ॥ १३९ ॥

प्रत्यूषस्य विदुः पुत्रमृषिं नाम्ना तु देवलम् ।
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ॥ १४० ॥

बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी ।
योगसिद्धा जगत्कृत्स्नमसक्ता विचरत्युत ॥ १४१ ॥

प्रभासस्य तु या भार्या वसूनामष्टमस्य तु ।
विश्वकर्मा महाभागस्तस्यां जातः प्रजापतिः ॥ १४२ ॥

---

138 *b* T मनोजव. for पुरोजव. 141 *b* T धर्मचारिणी. *d* T दिवचार ? for विचरत्युत. 142 *d* T जज्ञे for जातः; A प्रभासेः for प्रजापति°.

५

कर्ता शिल्पसहस्राणां त्रिदशानां च वार्धकिः ।
भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः ॥ १४३ ॥

सर्वेषां यो विमानानि देवानां च चकार ह ।
मनुष्याश्चोपजीवन्ति यस्य शिल्प महात्मनः ॥ १४४ ॥
[ विष्णु० १ १६ ११५–१२१ ]

प्रभासस्य पुत्रानन्यानाह —
अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च वीर्यवान् ।
त्वष्टुश्चास्यात्मजः पुत्रो विश्वरूपो महातपाः ॥ १४५ ॥

हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ।
वृषाकपिश्च शंभुश्च कपर्दी रैवतस्तथा ॥ १४६ ॥

मृगव्याधश्च शर्वश्च कपाली च महामुने ।
एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ।
शतं त्वेतत्समाख्यातं रुद्राणाममितौजसाम् ॥ १४७ ॥

इति दक्षधर्मपत्नीनामपत्याभिधानम् ।

अथ कश्यपस्यापत्यानि—
अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खसा ।
सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा ।
कद्रुर्मुनिश्च धर्मज्ञ तदपत्यानि मे शृणु ॥ १४८ ॥
पूर्वमन्वन्तरे श्रेष्ठा द्वादशासन्सुरोत्तमाः ।
तुषिता नाम तेऽन्योन्यमूचुर्वैवस्वतेऽन्तरे ॥ १४९ ॥
उपस्थितेऽतियशसश्चाक्षुषस्यान्तरे मनोः ।
समवायीकृताः सर्वे समागम्य परस्परम् ॥ १५० ॥
आगच्छत द्रुतं देवा अदितिं संप्रविश्य वै ।
मन्वन्तरे प्रसूयामस्तन्नः श्रेयो भवेदिति ॥ १५१ ॥
एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः ।
मारीचात्कश्यपाज्जातास्तेऽदित्या दक्षकन्यया ॥१५२॥
तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव च ।
अर्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥ १५३ ॥

144 *b* T देवनाना for देवानां च 146 *a* A बहुरूपश्च for बहुरूपश्च 147 *c* B शतं त्वेतत्समाख्याने, T शतं तेन समाख्यातं 148 *a* T दनुः काला for दनुश्चैव

विवस्वान्सविता चैव मित्रो वरुण एव च ।
अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः ॥ १५४ ॥

चाक्षुषस्यान्तरे पूर्वमासन्ये तुषिताः स्मृताः ।
वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृताः ॥ १५५ ॥

सप्तविंशतिर्याः प्रोक्ताः सोमपत्न्यो महाव्रताः ।
तस्यामपत्यान्यभवन्दीप्तान्यमिततेजसः ॥ १५६ ॥

अरिष्टनेमिपत्नीनामपत्यानीह षोडश ।
बहुपुत्रस्य विदुषश्चतस्रो विद्युतः स्मृताः ।
प्रत्यङ्गिरसजाः श्रेष्ठा ऋचो ब्रह्मर्षिसत्कृताः ॥ १५७ ॥

[ विष्णु० १ १६ १२५–१३५ ]

प्रत्यङ्गिरः प्रत्यङ्गिरसः तस्माज्जाता ऋचो मन्त्रा इत्यर्थः ॥

कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः स्मृताः ॥ १५८ ॥

[ विष्णु० १ १६ १३५ ]

देवप्रहरणा देवायुधाधिष्ठात्र्यो देवता इत्यर्थः ॥

एते युगसहस्रान्ते जायन्ते पुनरेव हि ।
सर्वे देवगणास्तात त्रयस्त्रिंशत्तु कामजाः ॥ १५९ ॥

तेषामपीह सततं निरोधोत्पत्तिरुच्यते ।
यथा सूर्यस्य मैत्रेय उदयास्तमयाविह ।
एवं देवनिकायास्ते सम्भवन्ति युगे युगे ॥ १६० ॥

[ विष्णु० १ १६ १३६–१३७ ]

अथ काश्यपानाह ।

दितेः पुनश्च जज्ञे कश्यपादिति नः श्रुतम् ।
हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्यवान् ।
सिंहिका चाभवत्कन्या विप्रचित्तेः परिग्रहः ॥ १६१ ॥

[ विष्णु० १ १६ १३८–१३९ ]

हिरण्यकशिपोस्तु ह्रादप्रह्रादानुह्रादसंह्रादाश्चत्वारः । तत्र प्रह्रादस्य विरोचनो विरोचनस्य बलिर्बलेर्बाणादयः शतं पुत्राः । सिंहिकायां विप्रचित्ते राहुप्रभृतयश्चतुर्दश सैंहिकेयाः । हिरण्याक्षस्य झर्झरशकुनिभूतसंतापनमहा

---

156 *d* T दीप्तिमन्त्यतितेजसा    159 *d* T छन्दजा for कामजाः

नाभकालनाभादयः पुत्राः। तेषामुत्तरोत्तरमपत्यानीति दैत्यवंशः। दनोश्च विप्रचित्तिर्द्विमूर्धशङ्कुकर्णमहयशिरः प्रभृतयः शतं सुतास्तेषामपत्यानीति दानवाः॥

तथा—

षड् सुताः सुमहासत्त्वास्ताम्रायाः परिकीर्तिताः॥

ता आह।

शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिका॥ १६२॥

शुकी शुकानजनयदुलूकी प्रत्युलूककान्।
श्येनी श्येनांस्तथा भासान्भासी गृध्रांश्च गृध्र्यपि॥ १६३॥

शुचिरोदकान्पक्षिगणान्सुग्रीवी तु व्यजायत।
अश्वानुष्ट्रान्गर्दभांश्च ताम्रावंशः प्रकीर्तितः॥ १६४॥

[ विष्णु० १ २१. १४–१७ ]

भासः पक्षिविशेषः। ओदकानुदकसंबन्धिनः॥

तथा—

विनतायाश्च पुत्रौ द्वौ विख्यातौ गरुडारुणौ।
सुपर्णः पततां श्रेष्ठो दारुणः पन्नगाशनः॥ १६५॥

[ विष्णु० १ २१.१८ ]

गरुड एव सुपर्णः॥

सुरसायाः सहस्रं तु सर्पाणाममितौजसाम्।
अनेकशिरसां ब्रह्मन्खेचराणां महात्मनाम्॥ १६६॥

काद्रवेयास्तु बलिनः सहस्रममितौजसः।
सुपर्णवशगा ब्रह्मञ्जज्ञिरेऽनेकमस्तकाः॥ १६७॥

तेषां प्रधानभूतास्ते शेषवासुकितक्षकाः।
शङ्खः श्वेतो महापद्मः कम्बलाश्वतरौ तथा॥ १६८॥

एलापत्रस्तथा नागः कर्कोटकधनंजयौ।
एते चान्ये च बहवो दन्दशूका विषोल्बणाः॥ १६९॥

गणं क्रोधवशं विद्धि तस्याः सर्वे च दंष्ट्रिणः।
स्थलजाः पक्षिणोऽब्जाश्च दारुणाः पिशिताशनाः॥ १७०॥

[ विष्णु० १ २१ १९–२१ ] इति॥

सुरसायाः सर्पफणाशून्याश्च अजगराद्यः । कद्रोर्नागा मानुषसंस्थानाः फणिनः शेषवासुक्याद्यः । क्रोधवशाया दन्दशूकाः फणिनः स्थलजाः जलजाः पक्षिणः इति ॥

तथा—

गास्तु वै जनयामास सुरभिर्महिषांस्तथा ।
इरा वृक्षलतावल्लीस्तृणजातीश्च सर्वशः ॥ १७१ ॥

खसा च यक्षरक्षांसि मुनिरप्सरसस्तथा ।
अरिष्टा तु महासत्त्वान्गन्धर्वान्समजीजनत् ॥ १७२॥

एते कश्यपदायादाः कीर्तिताः स्थाणुजङ्गमाः ।
येषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ॥ १७३ ॥

[ विष्णु० १ २१ २४-२५ ]

ब्रह्माण्डपुराणे ब्रह्मणो मानसान्भृग्वादीन्सुतानभिधाय स्वायंभुवान्मनोः शतरूपायां प्रियव्रतोत्तानपादौ पुत्रौ आकृतिप्रसूती कन्ये । तत्र आकृती रुचेः प्रजापतेर्भार्या प्रसूतिश्च दक्षस्येत्युपक्रम्य—

तस्यां कन्याश्चतुर्विंशद्दक्षस्त्वजनयत्प्रभुः ।
सर्वास्तास्तु महाभागाः सर्वाः कमललोचनाः ।
योगपत्न्यश्च ताः सर्वाः सर्वास्ता योगमातरः ॥ १७४ ॥

श्रद्धा लक्ष्मीर्धृतिः तुष्टिः पुष्टिर्मेधा तथा क्रिया ।
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्तिस्त्रयोदश ।
पत्न्यर्थं प्रतिजग्राह धर्मो दाक्षायणीः सुताः ॥ १७५ ॥

याभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ।
सती ख्यातिश्च संभूतिः स्मृतिः प्रीतिः क्षमा तथा ॥ १७६॥

संततिश्चानसूया च ऊर्जा स्वाहा स्वधा तथा ।
तास्तदा प्रत्यगृह्णन्त पुनरन्ये महर्षयः ॥ १७७॥

[ ब्रह्माण्ड० ]

तथाहि—

सतीं भवाय प्रायच्छत्ख्यातिं च भृगवे तथा ।
मरीचये च संभूतिं स्मृतिमङ्गिरसे तथा ॥ १७८॥

प्रीतिं चैव पुलस्त्याय क्षमां च पुलहाय च ।
क्रतवे संततिं नाम अनसूयां तथात्रये ॥ १७९॥

ऊर्जां ददौ वसिष्ठाय स्वाहां चैवाग्नये ददौ ।
स्वधां चैव पितृभ्यश्च तास्वपत्यानि मे शृणु ॥ १८० ॥

[ ब्रह्माण्ड० ]

एताः सर्वा महाभागाः प्रजास्वनुगताः स्थिताः ।
मन्वन्तरेषु सर्वेषु यावदाहृतसंप्लवम् ॥ १८१ ॥ इति ॥

[ ब्रह्माण्ड० ]

अत्रेदमवधेयम् । अयं मानुषादीनां सर्गः सर्वमन्वन्तरसाधारणः । तदुक्तं 'मन्वन्तरेषु सर्वेषु' इति ॥ प्राचेतसस्य दक्षस्य असिक्न्यां षष्टिः कन्यकाः सर्गे । वैवस्वतमन्वन्तरे विशेषः । पुराणान्तरेषु सर्गे भेदाः कल्पान्तरमन्वन्तरान्तरविषयतया वा अविरोधनीया इति ॥

* * * *

निर्माय स्वयमेव यः करुणया विश्वं प्रकृत्यात्रिभि-
र्भूयो यः स्वयमेव संहरति तत्स्वस्मिन्सुरैरर्चित. ।
तस्मिन्ब्रह्मणि विश्वधामनि विभौ श्रीटोडरक्ष्मापतेः
सत्सर्गप्रतिसर्गकारिणि हरौ चेतश्चिरं नन्दताम् ॥ १८२ ॥

[ प्रतिसर्गवर्णनं नाम द्वितीयो हर्षः । ]

[ श्रीटोडरानन्दे सर्गप्रतिसर्गवर्णनं नाम प्रथमं सौख्यम् । ]

---

182 *d* B मज्जतु for नन्दताम्

२

# [ अवतारसौख्यं द्वितीयम् ]

अथावताराः ॥ मार्कण्डेयपुराणे—

कस्मात्मानुपतां प्राप्तो निर्गुणोऽपि जनार्दनः ।
वासुदेवो जगत्सूतिस्थितिसंयमकारणम् ॥ १ ॥

[ मार्कं० ४.३१ ]

इति जैमिनिप्रश्ने मार्कण्डेयवाक्यम्—

आपो नारा इति प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥ २ ॥

स देवो भगवान्सर्वं व्याप्य नारायणो विभुः ।
चतुर्धा संस्थितो ब्रह्मन्सगुणो निर्गुणस्तथा ॥ ३ ॥

एका मूर्तिरनिर्देश्या शुक्लां पश्यन्ति तां बुधाः ।
ज्वालामालोपरुद्धाङ्गी निष्ठा सा योगिनां परा ॥ ४ ॥

दूरस्था चान्तिकस्था च विज्ञेया सा गुणातिगा ।
वासुदेवाभिधानोऽसौ निर्ममत्वेन दृश्यते ॥ ५ ॥

रूपवर्णादयस्तस्या न भावाः कल्पनामयाः ।
अस्त्येव सा सदा शुद्धा सुप्रतिष्ठैकरूपिणी ॥ ६ ॥

द्वितीया पृथिवीं मूर्ध्ना शेषाख्या धारयत्यधः ।
तामसी सा समाख्याता तिर्यक्त्वं समुपाश्रिता ॥ ७ ॥

एषा सांकर्षणी मूर्तिः रुद्र इति व्यपदिश्यते ।

तृतीया कर्म कुरुते प्रजापालनतत्परा ।
सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ॥ ८ ॥

---

1 *al* T वासुदेवोऽखिलाधारः सर्वकारणकारणम्.

एषा प्रद्युम्नमूर्तिः विष्णुरिति व्यपदिश्यते ।

चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा ।
रजस्तस्या गुणः सर्वं सा करोति सदैव हि ॥ ९ ॥

एषानिरुद्धमूर्तिः ब्रह्मेति निगद्यते ।

या तृतीया हरेर्मूर्तिः प्रजापालनतत्परा ।
सा तु धर्मव्यवस्थानं करोति नियतं भुवि ॥ १० ॥

प्रोद्धतान्सासुरान्हन्ति धर्मव्युच्छित्तिकारिणः ।
पाति देवान्सतश्चान्यान्धर्मरक्षापरायणान् ॥ ११ ॥

यदा यदा च धर्मस्य ग्लानिः समुपजायते ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजत्यसौ ॥ १२ ॥

[ द्रष्टव्या भगवद्गीता ४ ७ ]

भूत्वा पुरा वराहेण तुण्डेनापो निरस्य च ।
एकया दंष्ट्रयोत्खाता नलिनीव वसुंधरा ॥ १३ ॥

कृत्वा नृसिंहरूपं च हिरण्यकशिपुर्हतः ।
विप्रचित्तिमुखाश्चान्ये दानवा विनिपातिताः ॥ १४ ॥

यथेदानीं तथैवान्यान्न संख्यातुं समुत्सहे ।
अवतारांश्च तस्येमान्माथुरः सांप्रतं त्वयम् ॥ १५ ॥

इति सा सात्त्विकी मूर्तिरवतारं करोति वै ।
प्राद्युम्नेति च सा ख्याता रक्षाकर्मण्यवस्थिता ॥ १६ ॥

देवत्वेऽथ मनुष्यत्वे तिर्यग्योनौ च संस्थिता ।
गृह्णाति तत्स्वभावं च वासुदेवेच्छया सदा ॥ १७ ॥

इत्येतत्ते समाख्यातं कृतकृत्यो जगत्प्रभुः ।
मानुषत्वं गतो विष्णुः शृणुष्वास्योत्तरं पुनः ॥ १८ ॥

[ मार्क० ४ ५१ ५९ ]

इति चतुर्व्यूहावताराः ॥

अत्रायं प्रकरणार्थः—शुद्धस्वरूपी वासुदेवः, ब्रह्मा अनिरुद्धः, विष्णुः प्रद्युम्नः, रुद्रः संकर्षणः । कृष्णावतारे तु कृष्णो वासुदेवः, संकर्षणानिरुद्ध-

---

9 c T सर्गं for सर्वं. 11 a T प्रोद्धतानसुरान् for प्रोद्धतान्सासुरान्, b T °विच्छित्ति for °व्युच्छित्ति 15 a T वामनादींस्तथैवान्यान्, c T तस्येद for तस्येमान् 18 b T कृतकृत्योऽपि यत्प्रभुः.

प्रद्युम्ना मूर्तयश्चेति चतुर्व्यूहावतारः । इतरे मत्स्यकूर्माद्यवताराः प्रद्युम्नस्य । रामस्तु वासुदेवः, लक्ष्मणः संकर्षणः, भरतः प्रद्युम्नः, शत्रुघ्नोऽनिरुद्ध इति चतुर्व्यूहावतारः । उक्तमत्र भगवता भगवद्गीतासु —

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ १९ ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ २० ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ २१ ॥ इति ॥

[ भगवद्गीता ४ ६ ८ ]

[ इत्यवतारसामान्यनिरूपणम् ]

अथ मत्स्यावतारः ॥

तत्र मत्स्यपुराणे सूतं प्रति शौनकादिप्रश्नः—

कस्मात्स भगवान्विष्णुर्मत्स्यरूपत्वमाश्रितः ।

[ मत्स्य० १ ५ ]

सर्वमेतत्समाचक्ष्व सूत विस्तरतः क्रमात् ।
त्वद्वाक्यस्यामृतस्येव न तृप्तिरिह जायते ॥ १ ॥

[ मत्स्य० १ ७ ]

समाचक्ष्व कथय ॥ सूतोक्तिः—

पुण्यं पवित्रमायुष्यमिदानीं शृणुत द्विजाः ।
मात्स्यं पुराणमखिलं यज्जगाद गदाधरः ॥ २ ॥

पुरा राजा मनुर्नाम चीर्णवान्विपुलं तपः ।
पुत्रे राज्यं समारोप्य क्षमावान्रविनन्दनः ॥ ३ ॥

मलयस्यैकदेशे तु सर्वात्मगुणसंयुतः ।
समदुःखसुखो वीरः प्राप्तवान्योगमुत्तमम् ॥ ४ ॥

बभूव वरदश्चास्य वर्षायुतशते गते ।
वरं वृणीष्व प्रोवाच प्रीतः स कमलासनः ॥ ५ ॥

1 *a* B om. portion from अथ upto निष्ठ in 1 *a* 1 *a* T त्वद्वाक्येन for त्वद्वाक्यस्य

एवमुक्तोऽब्रवीद्राजा प्रणम्य स पितामहम् ।
एकमेवाहमिच्छामि त्वत्तो वरमनुत्तमम् ॥ ६ ॥

भूतग्रामस्य सर्वस्य स्थावरस्य चरस्य च ।
भवेयं रक्षणायालं प्रलये समुपस्थिते ॥ ७ ॥

एवमस्त्विति विश्वात्मा तत्रैवान्तरधीयत ।
पुष्पवृष्टिः सुमहती खात्पपात सुरार्पिता ॥ ८ ॥

कदाचिदाश्रमे तस्य कुर्वतः पितृतर्पणम् ।
पपात पाण्योरुपरि शफरी जलसंयुता ॥ ९ ॥

दृष्ट्वा तच्छफरीरूपं स दयालुर्महीपतिः ।
रक्षणायाकरोद्यत्नं स तस्मिन्करकोदरे ॥ १० ॥

अहोरात्रेण चैकेन षोडशाङ्गुलविस्तृतः ।
सोऽभवन्मत्स्यरूपेण पाहि पाहीति चाब्रवीत् ॥ ११ ॥

स तमादाय मणिके प्राक्षिपज्जलचारिणम् ।
तत्रापि चैकरात्रेण हस्तत्रयमवर्धत ॥ १२ ॥

पुनः प्राहार्तनादेन सहस्रकिरणात्मजम् ।
स मत्स्यः पाहि पाहीति त्वामहं शरणं गतः ।
ततः स कूपे तं मत्स्यं प्राहिणोद्रविनन्दनः ॥ १३ ॥

यदा न माति तत्रापि कूपे मत्स्यः सरोवरे ।
क्षिप्तोऽसौ पृथुतामागात्पुनर्योजनसंमिताम् ॥ १४ ॥

तत्राप्याह पुनर्मीनः पाहि पाहि नृपोत्तम ।
ततः स मनुना क्षिप्तो गङ्गायामप्यवर्धत ।
यदा तदा समुद्रे तं प्राक्षिपन्मेदिनीपतिः ॥ १५ ॥

यदा समुद्रमखिलं व्याप्यासौ समुपस्थितः ।
तदा प्राह मनुर्मीनः कोऽपि त्वमसुरेश्वरः ॥ १६ ॥

अथवा वासुदेवस्त्वमन्य ईदृक्कथं भवेत् ।
योजनायुतविंशत्या कस्य तुल्यं भवेद्वपुः ॥ १७ ॥

ज्ञातस्त्वं मत्स्यरूपेण मां खेदयसि केशव ।
हृषीकेश जगन्नाथ जगद्धातर्नमोऽस्तु ते ॥ १८ ॥

---

8 *d* A सु महती for सुमहती    15 *a* T दीन for मीन°. 16 *d* A असुरेश्वर
18 *d* T जगद्धाम for जगद्धात.

एवमुक्तः स भगवान्मत्स्यरूपी जनार्दनः ।
साधु साध्विति चोवाच सम्यग्ज्ञातस्त्वयानघ ॥ १९ ॥

अचिरेणैव कालेन मेदिनी मेदिनीपते ।
भविष्यति जले मग्ना सशैलवनकानना ॥ २० ॥

नौरियं सर्वदेवानां निकायेन विनिर्मिता ।

निकायेन समूहेन ॥

महाजीवनिकायस्य रक्षणार्थं महीपते ॥ २१ ॥
स्वेदजा अण्डजा जीवा उद्भिज्जा ये जरायुजाः ।
अस्यां निधाय सर्वांस्ताननाथान्पाहि सुव्रत ॥ २२ ॥

युगान्तवाताभिहता यदा भवति नौर्नृप ।

महीरूपा नौः ॥

शृङ्गेऽस्मिन्मम राजेन्द्र तदेमां संयमिष्यसि ॥ २३ ॥
ततो लयान्ते सर्वस्य स्थावरस्य चरस्य च ।
प्रजापतिस्त्वं भविता जगतः पृथिवीपते ॥ २४ ॥

एवं कृतयुगस्यादौ सर्वज्ञो धृतिमानृषिः ।
मन्वन्तराधिपश्चापि देवपूज्यो भविष्यसि ॥ २५ ॥

[ मत्स्य० १ ८–१२ ]

एवमुक्तो मनुस्तेन पप्रच्छासुरसूदनम् ।
भगवन्किर्याद्भिर्वर्षैर्भविष्यत्यन्तरक्षयः ॥ २६ ॥

सत्त्वानि च कथं नाथ रक्षिष्ये मधुसूदन ।
त्वया सह पुनर्योगः कथं वा भविता मम ॥ २७ ॥

मत्स्य उवाच—

अद्य प्रभृत्यनावृष्टिर्भविष्यति महीतले ।
यावद्वर्षशतं साग्रं दुर्भिक्षमशुभावहम् ॥ २८ ॥
ततोऽल्पसत्त्वक्षयदा रश्मयः सप्त दारुणाः ।
सप्तसप्तेर्भविष्यन्ति प्रतप्ताङ्गारवर्षिणः ॥ २९ ॥

---

22ab T स्वेदाण्डजोद्भिदो ये वै ये च जीवा जरायुजा 25 b T सूर for धृति॰ 26 b T मधुसूदनं for असुरसूदनं 28 d A मलापावहा (?); B °मलगवहा for अशुभावहं

सप्तसप्तेः सूर्यस्य ॥

और्वानलोऽपि विकृतिं गमिष्यति युगक्षये ।
विषाग्निश्चापि पातालात्संकर्षणमुखाच्च्युतः ॥ ३० ॥

भवस्यापि ललाटोत्थस्तृतीयनयनानलः ।
त्रिजगन्निर्दहन्क्षोभं समेष्यति महामुने ॥ ३१ ॥

एवं दग्धा मही सर्वा यदा स्यात्कूर्मसंनिभा ।
आकाशमूष्मणा तप्तं भविष्यति महामुने ।
ततः सदेवनक्षत्रं जगद्यास्यति संक्षयम् ॥ ३२ ॥

संवर्तो भीमनादश्च द्रोणश्चन्द्रो बलाहकः ।
विद्युत्पताकः शोणस्तु सप्तैते लयवारिदाः ।

लयः प्रलयः ॥

अग्निप्रस्वेदसंभूताः प्लावयिष्यन्ति मेदिनीम् ॥ ३३ ॥

समुद्राः क्षोभमागत्य चैकत्वेन व्यवस्थिताः ।
एतदेकार्णवं सर्वं करिष्यन्ति जगत्त्रयम् ॥ ३४ ॥

वेदनावमिमां गृह्य सत्त्वबीजानि सर्वशः ।
आरोप्य रज्जुयोगेन मत्प्रदत्तेन सुव्रत ॥ ३५ ॥

संयम्य नावं मच्छृङ्गे मत्प्रभावाभिरक्षितः ।
एकः स्थास्यसि देवेषु दग्धेष्वपि परंतप ॥ ३६ ॥

सोमसूर्यावहं ब्रह्म चतुर्लोकसमन्वितः ।
नर्मदा च नदी पुण्या मार्कण्डेयो महानृषिः ॥ ३७ ॥

भवो वेदाः पुराणश्च विद्याभिः सर्वतो वृतम् ।
त्वया सार्धमिदं सर्वं स्थास्यत्यन्तरसंक्षये ॥ ३८ ॥

एवमेकार्णवे जाते चाक्षुषस्यान्तरक्षये ।
वेदान्प्रवर्तयिष्यामि त्वत्सर्गादौ महीपते ।
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ॥ ३९ ॥

---

30 *a* A उर्वानलोऽपि for और्वानलोऽपि, *d* T °मुखच्युत for मुखाच्च्युत 32 *b* T भस्मसंनिभा for कूर्म°, *d* T परंतप for महामुने 35*c* A B रक्षायोगेन for रज्जुयोगेन 38 *b* A तप्त for वृतं 39 *b* T चाक्षुषान्तरसंक्षये.

मनुरप्यास्थितो योगं वासुदेवप्रसादजम् ।
अभ्यसन्यावदाभूतसंप्लवं पूर्वसूचितम् ॥४०॥

काले यथोक्ते संजाते वासुदेवमुखोद्गते ।
शृङ्गी प्रादुर्बभूवाथ मत्स्यरूपी जनार्दनः ।
अनन्तो रज्जुरूपेण मनोः पार्श्वमुपागमत् ॥ ४१ ॥

भूतान्सर्वान्समाकृष्य योगेनारोप्य धर्मवित् ।
भुजङ्गरज्ज्वा मत्स्यस्य शृङ्गे नावमयोजयत् ॥ ४२ ॥

भुजङ्गरज्ज्वा भुजङ्गो रज्जुरिव । भुजङ्गरूपया रज्ज्वेत्यर्थः ॥

उपर्युपस्थितस्तस्याः प्रणिपत्य जनार्दनम् ।
आभूतसंप्लवे तस्मिन्नतीते योगशायिना ।
पृष्टेन मनुना प्रोक्तं पुराणं मत्स्यरूपिणा ॥ ४३ ॥

[ मत्स्य० २ १–२० ]

तस्या नावः उपरि स्थितः ॥

श्रीभागवते ॥ राजोवाच–

भगवञ्छ्रोतुमिच्छामि हरेरद्भुतकर्मणः ।
अवतारकथामाद्यां मायामत्स्यविडम्बनाम् ॥ ४४ ॥

यदर्थमदधाद्रूपं मात्स्यं लोकजुगुप्सितम् ।
तमःप्रकृति दुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ ४५ ॥

एतन्नो भगवन्सर्वं यथावद्वक्तुमर्हसि ।
उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ४६ ॥

इत्युक्ते विष्णुरातेन भगवान्बादरायणिः ।
उवाच चरितं विष्णोः सर्वलोकसुखावहम् ॥ ४७ ॥

श्रीशुक उवाच—

गोविप्रासुरसाधूनां छन्दसामपि चेश्वरः ।
रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ४८ ॥

उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः ।
नोच्चावचत्वं भजते निर्गुणत्वाद्धि यो गुणैः ॥ ४९ ॥

---

40 *d* A सर्वसूचितम् for पूर्व°　41 *c* T भुजंगो for अनन्तो　*47d* T मत्स्यरूपेण यत्कृत　B om 48 *ab*

आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ।
समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ॥ ५० ॥

कालेनागतनिद्रस्य धातुः शिशयिषोर्वली ।
मुखतो निःसृतान्वेदान्हयग्रीवोऽन्तिकेऽहरत् ।

भवो ब्रह्मा ॥

तेनैव तु निमित्तेन जातो नैमित्तिको लय. ॥ ५१ ॥

ज्ञात्वा तद्दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् ।
दधार शफरीरूपं भगवान्हरिरीश्वरः ॥ ५२ ॥

शफरीरूपं मत्स्यरूपम् ॥

तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् ।
नारायणपरोऽतप्यत्तप. स सलिलेशयः ॥ ५३ ॥

योसावस्मिन्महाकल्पे तनयः स विवस्वतः ।
श्राद्धदेव इति ख्यातो मनुत्वे हरिणार्पितः ॥ ५४ ॥

एकदा कृतमालायां कुर्वतो जलतर्पणम् ।
तस्याञ्जल्युदके काचिच्छफर्येकाभ्यपद्यत ॥ ५५ ॥

कृतमालायां नद्याम् ॥

सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत ।
उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः ॥ ५६ ॥
तमाह सातिकरुणं महाकारुणिकं नृपम् ।
यादोभ्यो ज्ञातिघातिभ्यो मां दीनां दीनवत्सल ।
कथं विसृजसे राजन्भीतामस्मिन्सरिज्जले ॥ ५७ ॥
तमात्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम् ।
अजानन्रक्षणार्थाय शफर्या स मनो दधे ॥ ५८ ॥
तस्या दीनतरं वाक्यमाकर्ण्य स महीपति. ।
कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥ ५९ ॥
सा तु तत्रैकरात्रेण वर्धमाना कमण्डलौ ।
अलब्ध्वात्मावकाशं सा इदमाह महीपतिम् ॥ ६० ॥

53 *a* A आसीत् for नाम्ना *d* T सलिलाशन for सलिलेशय 54*a* A यो वा तस्मिन् for योऽसावस्मिन् 59 *b* T आश्रुत्य for आकर्ण्य *c* A कलश्यां हि निधायैनां

नाहं कमण्डलावस्मिन्कृच्छ्रं वस्तुमिहोत्सहे ।
कल्पयौकः सुविमलं यत्राहं निवसे सुखम् ॥ ६१ ॥

ओकः स्थानम् ॥

स एनां तत आदाय न्यधादौदञ्चनोदके ।
तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥ ६२ ॥

औदञ्चनोदके मणिकस्थजले ॥

न म एतदलं राजन्सुखं वस्तुमुदञ्चनम् ।
पृथु देहि पदं मह्यं यत्त्वाहं शरणं गतः ॥ ६३ ॥

तत आदाय सा राज्ञा क्षिप्ता राजन्सरोवरे ।
तदा वृत्त्यात्मना सोऽयं महामीनोऽन्ववर्धत ॥ ६४ ॥

नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः ।
निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥ ६५ ॥

इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि ।
जलाशयैः संमितं तं समुद्रे प्राक्षिपज्झषम् ॥ ६६ ॥

अविदासिनि अनपक्षये ॥ संमितं तुल्यपरिमाणम् ॥

क्षिप्यमाणस्तमाहेदमिह मां मकरादयः ।
अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि ।
एवं विमोहितस्तेन वदता वल्गु भारतीम् ॥ ६७ ॥

तमाह को भवानस्मान्मत्स्यरूपेण मोहयन् ।
नैवंवीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि वा ।
यो भवान्योजनशतमह्नाभिव्यानशे सरः ॥ ६८ ॥

नूनं त्वं भगवान्साक्षाद्धरिर्नारायणोऽव्ययः ।
अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ ६९ ॥

नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ।
भक्तानां नु प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥ ७० ॥

---

61c T सुविपुलं for सुविमल 64c B T तदावृत्त्यात्मना सोऽय, d A अथ वर्धत for अन्ववर्धत B om 67ab 68 c A नैवंवीर्यो for नैवंवीर्यो, f T अभिव्यानशे for अति°

मुख्यः आत्मा गतिश्च । मुख्यः सत्यः, गतिराश्रयः ॥

सर्वे लीलावतारास्ते भूतानां भूतिहेतवः ।
ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥७१॥

न तेऽरविन्दाक्ष पदोपसर्पणं
मृषा भवेत्सर्वसुहृत्प्रियात्मनः ।
यथेतरेषां पृथगात्मनोऽसता-
मदीदृशो यद्वपुरद्भुतं हि नः ॥७२॥

पृथगात्मनो भेददर्शिनः पुंसः । असतां अपरिच्छिन्नानां पदोपसर्पणं यथा मृषेत्यर्थः ॥

इति ब्रुवाणं नृपतिं जगत्पतिः
सत्यव्रतं मत्स्यवपुर्युगक्षये ।
विहर्तुकामः प्रलयार्णवेऽब्रवी-
च्चिकीर्षितं भक्तजनप्रियः प्रभुः ॥७३॥

मत्स्य उवाच ।

सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिंदम ।
चिनंक्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम् ॥७४॥

अप्ययाम्भोधौ प्रलयार्णवे ॥

त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा ।
उपस्थास्यति नौः काचिद्विशाला त्वां मयेरिता ॥७५॥

त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च ।
सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः ॥७६॥

आरुह्य बृहतीं नावं विचरिष्यसि विक्लवः ।
एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥७७॥

दोधूयमानां तां नावं समीरेण बलीयसा ।
उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥७८॥

अहं त्वामृषिभिः साधं सहनावमुदन्वति ।
विकर्षन्विचरिष्यामि यावद्ब्राह्मी निशा प्रभो ॥७९॥

---

72 c T पृथगात्मनां सतां श्रीधर notes *our* reading as a variant and explains it, *d* A ते for नः 73 *d* T चिरीर्षुरेकान्तजनप्रिय प्रियम् 74c T निमङ्क्ष्यति for विनङ्क्ष्यति 75 c T उपगास्यति for उपा० 77 a T महतीं for बृहतीं, *d* T विचरिष्यस्यविक्लव

मदीयं महिमानं च परब्रह्मेति शब्दितम् ।
वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥ ८० ॥

इत्थमादिश्य राजानं हरिरन्तरधीयत ।
सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥ ८१ ॥

आस्तीर्य दर्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः ।
निषसाद हरेः पादौ चिन्तयन्मत्स्यरूपिणः ॥ ८२ ॥

ततः समुद्र उद्वेलः सर्वतः प्लावयन्महीम् ।
वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ८३ ॥

ध्यायन्भगवदादेशं ददृशे नावमागताम् ।
तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥ ८४ ॥

तमूचुर्मुनयः प्रीता राजन्ध्यायस्व केशवम् ।
स वै नः संकटादस्मादविता शं विधास्यति ॥ ८५ ॥

सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे ।
एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥ ८६ ॥

निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा ।
वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ८७ ॥

[ भाग० ८ २४ १–४५ ]

वरत्रेण डोरकरूपेण ॥

सागरं तारयिष्यन्तं तरिष्यन्भवसागरम् ।
सत्यव्रतोऽगुरुत्वेन तुणव हरिमष्टभि ॥ ८८ ॥

[ भागवतीयश्रीधरी ८ २४ ४५ ]

अत्र शङ्कते—ननु कोऽयं प्रलय इति। तत्र यद्यपि महाकल्प इत्यादेर्ब्रह्मणो लय इत्यादेश्च महाप्रलय एवायाति, तथापि तत्र पृथिव्यादीनामोषध्यादीनां चोत्पत्तिरनवगतिरोधः । न हि भवति महाप्रलये तेषां सम्भव इति, धात्रकाली निशेत्यादिविरोधाच्च । न च दैनंदिन एवायमस्तु को विरोध इति वाच्यम् । चाक्षुषमन्वन्तरादैनंदिनस्याप्यभावात् । ब्रह्मणो दिनरूपकल्पावसाने दैनंदिनप्रलयस्य पुराणेषूक्तेः । चतुर्दशमन्वन्तरैरेककल्पत्वात् । तस्मा

---

85*d* A अविनाश विधास्यति　88 is found in श्रीधरी टीका and not in T, for the Com., cf श्रीधरी टीका on above.

द्यमभिप्रायः– नायं महाप्रलयो न वा दैनंदिनः। उभयोरनुपपत्तेः। किं तु वैवस्वताय मनवे करुणावतो भगवतो वैराग्योत्पत्तयेऽकस्मादेव मायया सागरादिदर्शनम्, एतत्परतयैव श्लोका अप्युपपादनीया इत्याहुः॥

अत्रैवं विचार्यते– भगवतः सागरादिप्रदर्शनस्य किं प्रयोजनमिति। न च मनोर्वैराग्योत्पत्तिः, तत्र च करुणैव मूलम्। मनुर्हि साक्षादकस्मादेव जगतो लयमालोक्य ततो विरज्यत इत्यभिप्रायः। यतो मनोः पूर्वमेव प्रजारक्षार्थं राज्याय विहिततपसो वैराग्योत्पादनस्यानुक्तिसंभावितत्वात्। अग्रे विहितप्रजापालनो राजा मनुर्भविष्यसीति स्वयमेव वरदानात्तदपत्याना[मप्यनुवृत्तेरिति। इदमत्रावधेयम्– आदौ तावत्पाथोधिपयश्चारिणा हयग्रीवासुरेण हृतानां वेदाना]मुद्धाराय श्रीभगवता जलचारिमहामीनशरीरं स्वीकृतमिति निर्विवादम्। अथैकार्णवीभूते जगति मनवे त्रैलोक्योद्धाराय प्राचीनवरप्रदानानुसारिणा भक्तानुकम्पिना वेदमयी नौः स्वाधिष्ठिता दर्शिता। तस्यां महर्ष्यादिभिः सह स्थिताय तस्मै सम्यग्वेदार्थोपदेशः कृत इत्युत्तरप्रतीकस्येदमेव तात्पर्यमवधारयामि यदपारे संसारसागरे भगवदधिष्ठितां वेदमयीमेव नावमधिरुह्य वेदोक्तमेव कर्माचरन्भगवद्भक्तिपरायणः पारमुत्तरति नान्यथा। प्रजापालनमप्येतदेव यद्वेदार्थोपदर्शनम्, तेन हि धर्मे प्रवृत्ताः प्रजाः पालिता भवन्तीति॥ अथ मनुस्तुतिवरप्रार्थनानन्तरं श्रीशुक उवाच–

इत्युक्तवन्तं पुरुषं भगवानादिपूरुषः।
मत्स्यरूपी महाम्भोधौ विहरंस्तत्त्वमब्रवीत्॥८९॥

पुराणसंहितां दिव्यां सांख्ययोगक्रियावतीम्।
सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः॥९०॥

पुराणसंहिता मत्स्यपुराणे। अशेषतः अब्रवीदित्यर्थः।

अश्रौषीदृषिभिः साकमात्मतत्त्वमसंशयम्।
नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम्॥९१॥

अतीतप्रलयापाये उत्थिताय स वेधसे।
हत्वासुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः॥९२॥

[ भाग० ८·२४·५४-५७ ]

---

¹ Portion in [ ] om in A. 89 a T नृपतिं for पुरुषं.

अतीतः पूर्वो यः प्रलयस्तस्यापाये अवसाने ॥

स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः।
विष्णोः प्रसादात्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः ॥ ९३ ॥ इति।

[ भाग० ८.२४.५८ ]

* * * *

मायामीनावतारः पयसि जलनिधेर्यो हयग्रीवहत्यां
कृत्वा संतुष्टचेतास्त्रिदशमुनिनुतः सम्यगुद्धृत्य वेदान्।
भूयो मात्स्यीं मुनिभ्यः श्रुतिसदृशपदीं संहितां प्रागवादी-
त्सोऽयं नारायणांशः प्रतिदिशतु मुहुर्मञ्जुमत्याहतं वः ॥ ९४ ॥

पुच्छोत्क्षेपणतुच्छवारिणि पयोराशौ विलासैधिता-
मङ्गन्यासपरंपरामनुपदं संकोचयंल्लीलया।
श्रीमानद्भुतमूर्तिरार्तिशमनः सेवापराणामयं
श्रीमट्टोडरभूपतेरनुदिनं मीनः शिवं यच्छतु ॥ ९५ ॥

[ इत्यवतारसौख्ये मत्स्यावतारो नाम प्रथमो हर्षः। ]

२.२

अथ कूर्मावतारः कूर्मपुराणे ॥ तत्र श्रीभागवते सुरासुरा मन्दर-मुत्पाट्यामृतार्थं क्षीराब्धेर्मथनमारेभिरे इत्युपक्रम्य-

कृतस्थानविभागास्ते एवं कश्यपनन्दनाः।
ममन्थुः परमायत्ता अमृतार्थं पयोनिधिम् ॥ १ ॥

कृतो धारणे स्थानविभागो यैस्ते तथा ॥

मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत्।
ध्रियमाणोऽपि बलिभिर्गौरवात्पाण्डुनन्दन ॥ २ ॥

ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः।
आसन्स्वपौरुषे नष्टे दैवेनातिबलीयसा ॥ ३ ॥

दैवेन हेतुना स्वपौरुषे नष्टे सति ॥

विलोक्य विघ्नेशविधिं तदेश्वरो
दुरन्तवीर्योऽवितथाभिसंधिः।
कृत्वा वपुः काच्छपमद्भुतं मह-
त्प्रविश्य तोयं गिरिमुज्जहार ॥ ४ ॥

---

95*a* B विलासोचितां for विलासैधितां.

विघ्नेशस्य विधिं तेन रचितं विघ्नम् । अवितथः सत्योऽभिसंधिः संकल्पो यस्य ॥

तमुत्थितं वीक्ष्य कुलाचलं पुनः
समुत्थिता निर्मथितुं सुरासुराः ।
दधार पृष्ठेन स लक्षयोजन-
प्रस्तारिणा द्वीप इवापरो महान् ॥ ५ ॥ इति ।

[ भाग० ८ ७ ५–९ ]

कूर्मपुराणे तु-

पुरामृतार्थं दैतेयदानवैः सह देवताः ।
मन्थानं मन्दरं कृत्वा ममन्थुः क्षीरसागरम् ॥ ६ ॥

मथ्यमाने तदा तस्मिन्कूर्मरूपी जनार्दनः ।
बभार मन्दरं देवो लोकानां हितकाम्यया ॥ ७ ॥

देवाश्च तुष्टुवुर्देवं नारदाद्या महर्षयः ।
कूर्मरूपधरं दृष्ट्वा साक्षिणं विष्णुमव्ययम् ॥ ८ ॥

तदन्तरेऽभवद्देवी श्रीर्नारायणवल्लभा ।
जग्राह भगवान्विष्णुस्तामेव पुरुषोत्तमः ॥ ९ ॥

तेजसा विष्णुमव्यक्तं नारदाद्या महर्षयः ।
मोहिताः सह शक्रेण श्रेयोवचनमब्रुवन् ॥ १० ॥

भगवन्देवदेवेश नारायण जगन्मय ।
कैषा देवी विशालाक्षी यथावद् ब्रूहि पृच्छताम् ॥ ११ ॥

श्रुत्वा तेषां तदा वाक्यं विष्णुर्दानवमर्दनः ।
प्रोवाच देवीं सम्प्रेक्ष्य नारदादीनकल्मषान् ॥ १२ ॥

इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी ।
माया मम प्रियानन्ता ययेदं मोहितं जगत् ॥ १३ ॥

अनयैव जगत्सर्वं सदेवासुरमानुषम् ।
मोहयामि द्विजश्रेष्ठा ग्रसामि विसृजामि च ॥ १४ ॥

---

7*d* T देवानां for लोकानां    13*d* T धार्यते for मोहितं

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
[ विद्यया वीक्ष्य चात्मानं तरन्ति विपुलामिमाम् ] ॥ १५ ॥

अस्यास्त्वंशानधिष्ठाय शक्तिमन्तो भवद्विधाः ।
ब्रह्मेशानादयो देवाः सर्वशक्तिरियं मम ॥ १६ ॥

सैषा सर्वजगत्सूतिः प्रकृतिस्त्रिगुणात्मिका ।
प्रागेव मत्तः संजाता श्रीः कल्पे पद्मवासिनी ॥ १७ ॥

चतुर्भुजा शङ्खचक्रपद्महस्तांशुकान्विता ।
कोटिसूर्यप्रतीकाशा मोहिनी सर्वदेहिनाम् ॥ १८ ॥

नालं देवा न पितरो मनवो वसवोऽपि वा ।
मायामेतां समुत्तर्तुं ये चान्ये चैव देहिनः ॥ १९ ॥

इत्युक्ता वासुदेवेन मुनयो विष्णुमब्रुवन् ।
ब्रूहि त्वं पुण्डरीकाक्ष यदि कालक्षयेऽपि च ।
अथोवाच हृषीकेशो मुनीन्मुनिगणान्वितः ॥ २० ॥

आसीद्द्विजातिप्रवर इन्द्रद्युम्न इति श्रुतः ।
पूर्वजन्मनि राजासीदधृष्यः शंकरादिभिः ॥ २१ ॥

दृष्ट्वेमं कूर्मसंस्थानं श्रुत्वा पौराणिकीं स्वयम् ।
संहितां मन्मुखाद्दिव्यां पुरस्कृत्य मुनीश्वरान् ॥ २२ ॥

ब्रह्माणं च महादेवं देवांश्चान्यान्स्वशक्तिभिः ।
मच्छक्तौ संस्थितान्बुद्ध्वा मामेव शरणं गतः ॥ २३ ॥

संभाषितो मया चाथ विप्रयोनिं गमिष्यसि ।
इन्द्रद्युम्न इति ख्यातो जातिं स्मर्तासि पौर्विकीम् ॥ २४ ॥

सर्वेषामेव भूतानां देवानामप्यगोचरम् ।
वक्तव्यं यद्गुह्यतमं दास्ये ज्ञानं तवानघ ॥ २५ ॥

---

15 *cd* om. in A B 16 *b* T अमत्स्वरा for भवद्विधाः, *d* T सर्वे for देवाः 18*b* T स्रगन्विता for अंशुकान्विता, T notes a pāṭha शुभान्विता 19*b* T मानवा याग्वोऽपि च; *d* T भुवि for चैव 21 *b* T °गणार्चित for °गणान्वितः *c* T अस्ति for आसीद् 22 *a* T दृष्ट्वा मां for दृष्ट्वेमं 24 *d* T स्मरसि for स्मर्तासि.

लब्ध्वा तन्मामकं ज्ञानं मामेवान्ते प्रवेक्ष्यसि ।
अंशान्तरेण भूम्यन्तं तावत्तिष्ठ सुनिर्वृतः ।
वैवस्वतेऽन्तरेऽतीते कार्यार्थं मां प्रवेक्ष्यसि ॥ २६ ॥

मां प्रणम्य पुरीं गत्वा पालयामास मेदिनीम् ।
कालधर्मंगतः कालाच्छ्वेतद्वीपे मया सह ॥ २७ ॥

भुक्त्वा तान्वैष्णवान्भोगान्योगिनामप्यगोचरान् ।
मदाज्ञया मुनिश्रेष्ठ जज्ञे विप्रकुले पुनः ॥ २८ ॥

ज्ञात्वा मां वासुदेवाख्यं यत्र द्वे निहितेऽक्षरे ।
विद्याविद्ये गूढरूपे यद्ब्रह्म परमं विदुः ॥ २९ ॥

सोऽर्चयामास भूतानामाश्रयं परमेश्वरम् ।
व्रतोपवासनियमैर्होमैर्ब्राह्मणतर्पणैः ॥ ३० ॥

तदाशीस्तन्नमस्कारस्तन्निष्ठस्तत्परायणः ।
आराधयन्महादेवं योगिनां हृदि संस्थितम् ॥ ३१ ॥

तस्यैवं वर्तमानस्य कदाचित्परमा कला ।
स्वरूपं दर्शयामास दिव्यं विष्णुसमुद्भवम् ॥ ३२ ॥

दृष्ट्वा प्रणम्य शिरसा विष्णोर्भगवतः प्रभाम् ।
संस्तूय विविधैः स्तोत्रैः कृताञ्जलिरभाषत ॥ ३३ ॥

इन्द्रद्युम्न उवाच—

का त्वं देवि विशालाक्षि विष्णुचिह्नाङ्किते शुभे ।
याथातथ्येन वै भावं यतेदानीं ब्रवीहि मे ॥ ३४ ॥

तस्य तद्वाक्यमाकर्ण्य सुप्रसन्ना सुमङ्गला ।
हसन्स संस्मरन्विष्णुं प्रियं ब्राह्मणमब्रवीत् ॥ ३५ ॥

न मां पश्यन्ति मुनयो देवाः शक्रपुरोगमाः ।
नारायणात्मिकामेकां मायाहं तन्मयी परा ॥ ३६ ॥

न मे नारायणाद्भेदो विद्यते हि विचारतः ।
तन्मया परमं ब्रह्म स विष्णुः परमेश्वरः ॥ ३७ ॥

---

26 a T भूम्यां त्व for भूम्यन्त 31a A तदा शान्ततिरस्कार 33b T प्रिया for प्रभां 35b सुप्रसन्न सुमङ्गल, c A हसन्ता T हसन्ती for हसन्स T adds श्रीरुवाच before 36

येऽर्चयन्तीह भूतानामाश्रयं परमेश्वरम्।
ज्ञानेन कर्मयोगेन तेषां न प्रभवाम्यहम्॥ ३८॥

तस्मादनादिनिधनं कर्मयोगपरायणः।
ज्ञानेनाराधयानन्तं ततो मोक्षमवाप्स्यसि॥ ३९॥

इत्युक्तः स मुनिश्रेष्ठ इन्द्रद्युम्नो महामतिः।
प्रणम्य शिरसा देवीं प्राञ्जलिः पुनरब्रवीत्॥ ४०॥

कथं स भगवानीशः श्रूयते निष्कलोऽच्युतः।
ज्ञातुं हि शक्यते देवि ब्रूहि मे परमेश्वरि॥ ४१॥

एवमुक्ताथ विप्रेण देवी कमलवासिनी।
साक्षान्नारायणो ज्ञानं दास्यतीत्याह तं मुनिम्॥ ४२॥

उभाभ्यामथ हस्ताभ्यां संस्पृश्य प्रणतं मुनिम्।
स्मृत्वा परात्परं विष्णुं तत्रैवान्तरधीयत॥ ४३॥

सोऽपि नारायणं द्रष्टुं परमेण समाधिना।
आस्तौषीद्ध हृषीकेशं प्रणतार्तिप्रभञ्जनम्॥ ४४॥

ततो बहुतिथे काले गते नारायणः स्वयम्।
आविरासीन्महायोगी पीतवासा जगन्मयः॥ ४५॥

दृष्ट्वा देवं समायान्तं विष्णुमात्मानमव्ययम्।
जानुभ्यामवनीं गत्वा तुष्टाव गरुडध्वजम्॥ ४६॥

इन्द्रद्युम्न उवाच–

यज्ञेशाच्युत गोविन्द माधवानन्त केशव।
कृष्ण विष्णो हृषीकेश तुभ्यं विश्वात्मने नमः॥ ४७॥

नमस्ते वासुदेवाय विष्णवे विश्वयोनये।
आदिमध्यान्तहीनाय ज्ञानगम्याय ते नमः॥ ४८॥

नमस्ते परमेशाय ब्रह्मणे परमात्मने।
नमोऽस्तु ते सुसूक्ष्माय मायातीताय ते नमः॥ ४९॥

---

38 *b* T पुरुषोत्तमं for परमेश्वरं. 41*b* B ज्ञायते. T शाश्वत for श्रूयते. 44*c* T आराधयद् हृषीकेशं. 45*c* T प्रादुरासीत् for आविरासीत्. 48*c* B आद्य° for आदि°. 49 *d* T महादेवाय for मायातीताय.

नमः शिवाय शुद्धाय मायातीताय ते नमः ।
त्वयैव सृष्टमखिलं त्वमेव परमा गतिः ॥५०॥
त्वं पिता सर्वभूतानां त्वं माता पुरुषोत्तम ।
त्वमक्षरं परं धाम चिन्मात्रं व्योमलक्षणम् ।
सर्वस्याधारमव्यक्तमनन्तं तमसः परम् ॥५१॥
प्रपश्यन्ति यदात्मानं ज्ञानदीपेन केवलम् ।
प्रपद्ये भवतो रूपं तद्विष्णोः परमं पदम् ॥५२॥
एवं स्तुवन्तं भगवान्भूतात्मा भूतभावनः ।
उभाभ्यामथ हस्ताभ्यां पस्पर्श प्रहसन्निव ॥५३॥
स्पृष्टमात्रो भगवता विष्णुना मुनिपुंगवः ।
यथावत्परमं तत्त्वं ज्ञातवांस्तत्प्रसादतः ॥५४॥
ततः प्रहृष्टमनसा प्रणिपत्य जनार्दनम् ।
प्रोवाचोन्निद्रपद्माक्षं पीतवाससमच्युतम् ॥५५॥
त्वत्प्रसादादसंदिग्धमुत्पन्नं पुरुषोत्तम ।
ज्ञानं ब्रह्मैकविषयं परमानन्दसिद्धिदम् ॥५६॥
नमो भगवते नित्यं वासुदेवाय हेतवे ।
किं करिष्यामि योगेन तन्मे वद जगन्मय ॥५७॥
श्रुत्वा नारायणो वाक्यमिन्द्रद्युम्नस्य माधवः ।
उवाच सस्मितं वाक्यमशेषजगतो हितम् ॥५८॥

[ कूर्म० १, पृ० ४१२ ]

इत्यादिप्रसङ्गेन भगवता वर्णाश्रमादिधर्माभिधानमिति कूर्मावतारः ॥

* * * *

पाथोधेः पयसि प्रसर्पति नमो यत्पृष्ठपीठे गिरिं
धृत्वा मन्दरमब्धिमध्यमसुरैः सार्धं ममन्थुः सुराः ।
तस्मादुत्थितया श्रिया मुररिपोराभूष्य वक्षःस्थलं
देव्या विश्वमलङ्कृतं भगवते कूर्माय तस्मै नमः ॥५९॥

[ इत्यवतारसौख्ये कूर्मावतारो नाम द्वितीयो हर्षः । ]

---

50 b T नमस्ते परमेष्ठिने c T त्वया तत्सृष्टमखिलं 51d T व्योम निष्कलं for व्योमलक्षणम् 52 a B प्रविशन्ति for प्रपश्यन्ति T परात्मानं for यदात्मानं 54 d T स्वप्रसादतः for तत्प्रसादतः 55a A प्रविष्टमनसा for प्रहृष्ट°. 57c T तुभ्यं for नित्यं b T वेधसे for हेतवे c T योगेश for योगेन

२.३

अथ वाराहावतारः ॥

आदौ दिग्विजयं विधाय विधिवद्बद्ध्वा भुवं दानवो
दैत्यानाश्वकरोद्धिरण्यनयनो यक्षेषु भागस्पृशः ।
स्थानेभ्योऽपि निराकृता दिविषदो दीना दयावारिधेः
पादाम्भोरुहमेत्य तत्र च भयं प्रोचुर्दितेरात्मजात् ॥ १ ॥

दुष्टानां हृतिहेतवे दिविषदां त्राणाय नारायणो
वाराहं वपुरेत्य यक्षघदितं भक्तानुकम्पावशः ।
हत्वा संगरसीम्नि दैत्यमतुलं बद्धां समुद्धृत्य गां
विश्वोद्वेगमपाकरोत्स भगवान्कल्याणमालम्बताम् ॥ २ ॥

तत्र स्कन्दपुराणे हिरण्याक्षदिग्विजयप्रस्तावे व्यासं प्रति सनत्कुमार उवाच ।

अथालकां समासाद्य धनेशस्य पुरीं शुभाम् ।
अदूरे तस्थुरुद्भूताः संनद्धकवचायुधाः ॥ ३ ॥

अथ स्थितांस्तदा दृष्ट्वा दानवान्बलदर्पितान् ।
अलकावासिनः सर्वे निधिपालास्तथैव च ॥ ४ ॥

निधयः पद्मशङ्खाद्या ऋषयश्च तपोधनाः ।
अर्घ्यं रत्नानि चादाय दानवस्य न्यवेदयन् ॥ ५ ॥

ऊचुश्चैव च दैत्येन्द्रं वयं वश्या न संशयः ।
किंकराश्च प्रशाध्यस्मान्यथा देवो महेश्वरः ॥ ६ ॥

हिरण्याक्ष उवाच ।

मा भीर्भवतु वो यक्षा मम यूयं न संशयः ।
अयं हि राजा वः श्रेष्ठो हिरण्यकशिपोः सुतः ।
प्रह्लादो देवसंघानां सर्वेषां विप्रधावनः ॥ ७ ॥

ततस्तं तत्र संस्थाप्य धनेशं दैत्यपुंगवः ।
अन्येषां दैत्यसंघानां स्थानान्यापूरयद्यतः ॥ ८ ॥

---

1 *d* A शभय for च भयं. 2 *c* A समुद्धृत्य for समुद्धृत्य The passages from the स्कन्दपुराण could not be traced, perhaps they are abridged from some other Purāṇa text 7 *f* A विप्र दानव .

संस्थाप्य सर्वथा स्थाने स्वामिनो दानवेश्वरान् ।
अन्धकं त्वमरावत्यामिन्द्रत्वेनाभ्यषेचयत् ।
भूर्लोकं चाखिलं दैत्यः स्वयमेवान्वशासत ॥ ९ ॥

भूयश्च धनुरादाय सशरं सूर्यसंनिभम् ।
दैत्येन्द्रो मेदिनीं प्राह ममात्मानं विदर्शय ॥ १० ॥

सा भीता तस्य दैत्यस्य वेपमाना कृताञ्जलिः ।
जयेत्युक्त्वाग्रतस्तस्थौ कुले लक्ष्मीरिवापरा ॥ ११ ॥

तां मृगीमिव शार्दूलो भुजङ्गीमिव पक्षिराट् ।
शार्दूलीं सिंहराजेव सिंहीं शरभराडिव ॥ १२ ॥

तथा तां स दितेः पुत्रो जग्राह रुषिताननः ।
उवाच चेदं संरब्धस्तां देवीं भयविह्वलाम् ॥ १३ ॥

ततो रसातलं गत्वा स्वपुरस्य समीपतः ।
बबन्ध नागपाशैस्तां दुष्टामिव यथाङ्गनाम् ॥ १४ ॥

ततो बलेन दैत्येन्द्रः सुखेन स महाबलः ।
ततोऽस्या रक्षणे नित्य नियुक्तान्रक्षिणो ददौ ।
किंकरा नाम दैत्येन्द्रसहस्राणि चतुर्दश ॥ १५ ॥

स तथा तद्विधायैव दैत्येन्द्रस्तुष्टिमान्बभौ ।
कृषीवल इव क्षेत्रं सुनिष्पन्नं समीक्ष्य ह ।
कृतकृत्योऽहमित्येवं मतिं चक्रे स पार्थिवः ॥ १६ ॥

संनियुज्य सुत ज्येष्ठं दारैः साधुरिवात्मवान् ।
धर्ममेव निषेवध्वमिति चाज्ञापयत्तदा ॥ १७ ॥

न स्यादधार्मिकः कश्चिद्दैत्यो वा दानवोऽपि वा ।
राज्येऽभवद्दुराचारस्तस्मिन्राज्यं प्रशासति ॥ १८ ॥

स्वयमेव स वायुश्च चन्द्रमाः सूर्य एव च ।
अभवत्सप्तलोकेषु तपोबलसमन्वितः ॥ १९ ॥

ओषध्यः स्वयमुद्भूतास्तस्मिन्राजनि शासति ।
विना कृष्टिं सम्भवन्ति सर्वलोकस्य साधिकाः ॥ २० ॥

---

9 *a* B स्थाणु for स्थाने  19 c B व्यास लोकेषु for सप्तलोकेषु

न जुह्वते तदा वह्निं विप्रास्तस्मिंस्तु राजनि।
नाधीयन्ते तदा वेदा एकवर्णमभूत्तदा ॥ २१ ॥

भृगवो येऽभवन्विप्रा दानवानां मुदावहाः।
अधीयन्ते यजन्ते च एवमास तु सर्वशः ॥ २२ ॥

हृष्टपुष्टमभूत्सर्वं व्याधिदुःखविवर्जितम्।
वर्णाश्रमपरित्यक्तं स्वर्गलोकसमं जगत् ॥ २३ ॥

तन्नृत्यगीतोत्सवनित्ययुक्त-
सुखप्रसुप्तं रतिकामयुक्तम्।
जगद्बभौ राजनि दैत्यदेवे
हिरण्यनेत्रे दितिदानवेन्द्रे ॥२४॥

अथैवं राजनि हिरण्याक्षे दैत्यैरपहृतेषु यज्ञभागेषु मर्त्येष्विव महीमण्डलमटत्सु दुष्टदैतेयजनितदुःखदूरीकरणोपायं चिन्तयत्सु निरुत्साहेषु दिविषत्सु ब्रह्मणः समीपमागतेषु वेधास्तथाभूतानालोक्य योगर्द्धियुक्ता अपि यूयं कथमकस्मादेवैतादृशीं दुर्दशामापन्नाः, महतां हि विपदि धैर्यमेवोचितमित्यादि व्याजहार। ततश्च–

त एवं ब्रह्मणा प्रोक्ता लब्धयोगाः सुरेश्वराः।
प्रणम्य सर्वभूतानां स्रष्टारमिदमब्रुवन् ॥ २५ ॥

हृतानि नो महायोगस्थानानि दितिनन्दनैः।
क्व तिष्ठामो वयं ब्रूहि आदिश स्थानमव्ययम् ॥ २६ ॥

पितामह उवाच।

हृतानि सर्वस्थानानि युष्माकं विदितं मम।
शृणुध्वं यत्र वस्तव्यं युष्माभिर्योगमायया ॥ २७ ॥

यूयं सर्वशरीरेषु योगाद्वसत सत्तमाः।
प्रजानां सर्वतो देवास्ततो वृत्तिमवाप्स्यथ ॥ २८ ॥

तेषामसितपीतैश्च भास्वरैश्च पृथग्विधैः।
पृथिवी नागवद्धापि युष्मानाप्याययिष्यति ॥ २९ ॥

त एवमुक्ता देवेन सर्वे देवाः सवासवाः।
तथा चक्रुर्यथोवाच ब्रह्मा लोकपितामहः ॥ ३० ॥

---

22 *d* B त एव व्यास सर्वदा। 26 *d* A आदिमस्थानमव्ययं।

ते पर्यन्ततः सततं तत्रस्थाः सुरसत्तमाः ।
चतुर्युगमुपासन्त लोकधातुर्मते स्थिताः ॥ ३१ ॥

अथ कदाचिद्धिरण्याक्षः प्रजादर्शनाय प्रस्थितस्तत्र स्थितान्देवानालोक्यातिकुपितो निरन्तरमवेक्षापरायणानामस्माकं विद्विषो वर्धयन्त्यः प्रजा नूनं दण्डमर्हन्तीत्यभिधाय ताः समुन्मूलयामास । पल्वलादीन्संशोष्य वृक्षलतादीनुच्छिद्योपर्यधश्छास्य महीमण्डलं कूर्मपृष्ठप्रायमकरोत् । ततस्तस्मादतिबलीयसः कुत्रापि स्थानमलभमानाः प्रजा ब्रह्मणो निवेद्य तेन सह नारायणसमीपं श्वेतपर्वतं गताः श्रीपुरुषोत्तमं तुष्टुवुः ॥

नमः साध्याय देवाय नमो धाम्ने सुवेधसे ।
नमोऽजनाय देवाय यज्ञाय च नमो नमः ॥ ३२ ॥

नमोऽस्त्वदितिपुत्राय नरनारायणाय च ।
नमः सुमतये चैव नमस्तेऽस्त्वपि विष्णवे ॥ ३३ ॥

नमो वामनरूपाय कृष्णद्वैपायनाय च ।
नमो रामाय रामाय दत्तात्रेयाय वै नमः ॥ ३४ ॥

नमोऽस्तु नरसिंहाय धाम्ने चैव नमो नमः ।
नमः शत्रुनिहन्त्रे च नमो दामोदराय च ॥ ३५ ॥

सलिले स्वप्यमानाय नागशय्याप्रियाय च ।
नमः कलिलरूपाय महते पुरुषाय च ॥ ३६ ॥

नमो जीमूतरूपाय महादेवप्रियाय च ।
नमो रुद्रार्करूपाय तथोमारूपिणे नमः ॥ ३७ ॥

चक्रमुद्गरहस्ताय महेश्वरगणाय च ।
शिपिविष्टाय च सदा नमः श्रीवत्सधारिणे ॥ ३८ ॥

धुन्धुमारविनाशाय मधुकैटभघातिने ।
चतुर्भुजाय देवाय रत्नकौस्तुभधारिणे ॥ ३९ ॥

त्रिविक्रमवियत्स्थाय पीतवर्णसुवाससे ।
नमोऽसुरविघाताय गदाखड्गोग्रपाणये ॥ ४० ॥

---

36 *a* B तप्यमानाय for स्वप्यमानाय   *c* A किलरूपाय for कलिल°   39 *a* B धुन्धुमाराय शूराय

वृषरूपाय सततमादित्यानां चराय च ।
चेकितानाय दत्ताय शौरिवृष्णिसुबन्धवे ॥ ४१ ॥

पुरा सुग्रीवनाशाय तथैवासुरसादिने ।
नमस्ते शार्ङ्गधनुषे सौभशाल्वविघातिने ॥ ४२ ॥

नमस्ते पद्मनाभाय धर्मदेहप्रवेशिने ।
मैनाके तप्यमानाय शिवभक्ताय सर्वथा ॥ ४३ ॥

नमोऽजयाय सर्वत्र रुद्रान्तरचराय च ।
नमः सर्वेश्वरायैव नष्टधर्मप्रवर्तिने ॥ ४४ ॥

पुरुषाय वरेण्याय नमस्ते शतबाहवे ।
तव प्रसादात्कृच्छ्राद्वै तरेम पुरुषोत्तम ॥ ४५ ॥

हृतराज्या वयं सर्वे न त्वं वेत्सि महाभुज ।
हिरण्याक्षेण वैकुण्ठ तन्नाशाय नमस्तव ॥ ४६ ॥

सनत्कुमार उवाच ।

य इदं वैष्णवं स्तोत्रं भक्त्या परमया युतः ।
कीर्तयेत्तत्प्रयत्नेन विष्णोर्भावं समाश्रितः ॥ ४७ ॥

शिवातः सततं मर्त्यः सर्वपापैः प्रमुच्यते ।
[ मृतश्च सर्वलोकेषु वर्षकोटीश्चतुर्दश ।
पूजितः सर्वदेवैश्च मोदते नात्र संशयः ।
कीर्तयन्नेव य इदं प्राणेभ्यो विप्रमुच्यते । ]
स विष्णुलोकं संप्राप्य चरते दुःखवर्जितः ॥ ४८ ॥

सनत्कुमार उवाच ।

तेषां तद्वचनं श्रुत्वा भगवान्स जगत्पतिः ।
उवाच सुरशार्दूलानिदं संपूजयंस्तदा ॥ ४९ ॥

हतः स दैत्यो दुर्बुद्धिर्देवा बुद्धस्तु कारकाः ।
क्रियतामद्य रूपं मे वाराहं मा विचार्यताम् ॥ ५० ॥

महात्मा स हि दैत्येन्द्रो बलवान्धार्मिकश्च ह ।
न स शक्यो मयैकेन हन्तुं सत्यं ब्रवीमि वः ॥ ५१ ॥

48 Portion in [ ] om. in A.

सर्वदेवमयं रूपं धाराहं तं त्रिदर्धनम् ।
तत्समास्थाय हन्तास्मि दैत्येन्द्रं तं महाबलम् ॥ ५२ ॥

तेन रूपेण सर्वेषां युष्माकं देवसत्तमाः ।
न हि शक्यं पुनस्तस्मादिहानयितुमोजसा ॥ ५३ ॥

युष्मदर्थे तमद्याहं दानवं धर्मशालिनम् ।
वधिष्यामि यथा सिंहं शरभः सुमहाबलम् ॥ ५४ ॥

राजास्माकमयं यष्टा सहस्राक्षः पुरंदरः ।
दीक्षितो दैत्ययज्ञेन होता चास्य बृहस्पतिः ॥ ५५ ॥

ब्रह्मा स्वयं गुरुः स्रष्टा प्रस्तोता यम इत्यपि ।
उद्गाता तत्र वरुणो हिरण्यनयनः पशुः ।
शमिताहं सुरश्रेष्ठाः पशोस्तस्य महात्मनः ॥ ५६ ॥

अद्य पश्यन्तु भूतानि मम तस्यैव चोभयोः ।
विजने धासिताहेतोर्मत्तयोर्गजयोरिव ॥ ५७ ॥

तस्य तद्वचनं श्रुत्वा गर्जितं च महात्मनः ।
हर्षोत्फुल्लेक्षणाः सर्वे निरीक्षन्तः परस्परम् ॥ ५८ ॥

मेनिरे हतमित्येव दैत्येन्द्रं सुमहाबलम् ।
ततस्तत्प्रेक्षमाणानां संप्रहर्षोद्भवो ह्यभूत् ॥ ५९ ॥

हतः स दैत्यो नरसिंहरूपिणा
मया पुरा तस्य गुरुर्महाबलः ॥ ६० ॥

अथैवंवादिनि भगवति दयानिधौ सद्यःसमुद्यदानन्दसंदोहनिमग्नमनसः सर्वलोकमयं शरीरं प्रचक्रिरे । तथाहि—अस्थीनि पर्वताः, नद्यो नाड्यः, रुधिरमर्णवाः, सत्त्वादयस्त्रयो गुणाः कफादीनि, पुरीषमोषधयः, मेढ्रं मूत्रम्, ब्रह्मा शिरः, शिवो मूर्धा, धर्मो ललाटम्, वायवो नासिका, सूर्याचन्द्रमसौ नेत्रे, दिशः श्रोत्रे, तारका भ्रुवौ, अग्निरास्यम्, अन्तरिक्षमोष्ठौ, भुजगाश्च दन्तश्रेणयः, विद्याश्च रसना, ग्रीवा व्योम, कपोलावादित्याः, हस्तौ रुद्राः, कीर्तिः श्रीः सिद्धिर्यशोदयादयः कराङ्गुल्यः, प्रवृत्तिनिवृत्ती नखाः, यमदण्डकालदण्डमृत्युदण्डरुद्रदण्डा बाहुपादाः, हनुः साध्याः, हृदयं सोमः, महाभूतान्युदरम्, अदितिर्नाभिः, शिश्नः प्रजापतिः, मित्रोऽपानम्, वसवः पार्श्वे, अधर्मः पृष्ठम्, मृत्युकालयमास्तत्पादतलानि, लाङ्गूलमश्विनौ, पितरः संधयः, छन्दांसि दृष्टी, यमनियमदानानि अवान्तरस्थानाभिमानिन्यो देवताः, पशवः

पक्षिणश्च सर्वरोमाणि, विश्वेदेवाः पादाङ्गुलयः, इत्यादिसम्यक्संपन्नशरीरो भगवानतिप्रणतान्देवानृषीनालोक्य परमकारुणिकः प्राह–युष्माकमतिविरोधी दैत्यराजोऽयमञ्जसा हत एव मया, भवद्भिर्निश्चिन्तैर्भवितव्यमित्यादि। अथैतदाकर्ण्य सानन्देन वेधसा विहितरक्षो देवैर्नतो मुनिभिः स्तुतो भूतैश्च जयजयेति शब्दैः संभावितः पक्षिभिर्मृगैश्च प्रस्तुतशकुनो भगवान् दुर्विनीतदैतेयदलनाय प्रतस्थे। प्रस्थितश्च कियन्ति वर्त्मान्यतिक्रम्य महोर्मिभिर्मेदुरं, तिमितिमिंगिलप्रभृतिभिर्महामीनैः सिंहव्याघ्रादिमुखैर्मकरैर्हस्तिहयादिभिः पशुभिर्नानाविधैः पक्षिभिरनवरतैः प्राणिभिर्महामूल्यैर्मणिभिः परिपूर्णं, नर्तकमिव नृत्यन्तं, योधमिव युध्यन्तं, नानामण्डलानि चरन्तं, अतिगम्भीरमनतिक्रान्तमर्यादमनन्तं गुणवन्तं पाथोधिमालोकयामास। आलोक्य च सद्यः समुद्यदतिकौतुकाविष्टचेता दूरादुत्प्लुत्यावगाह्य स्वतेजसा विप्लुताञ्जलौकसः समालोक्य प्रदक्षिणमावर्त्य वरुणपुरीं भोगवतीमाजगाम। तत्र चातिप्रणतेन वरुणेन विहितस्तुत्यादिप्रसन्नचेतास्ततः प्रस्थितः पुण्यतमां सुरभीणां पुरीमायातस्तासामतिपवित्रममृतसंमितं पयः पीत्वा ताभिः सम्यक्संपादितसपर्याकलापस्तां रात्रिं तत्रैवाध्युवास। ततः प्रस्थितो दैत्यगुरोर्भार्गवस्य पुरीमतिक्रम्य तत्रस्थैः स्तूयमानः शेषस्य नगरीं स्वर्गादपि रमणीयामायातो नागाधीश्वरेणार्घ्यादिना विहितपूजस्तं सम्यक्संभाष्य हिरण्याक्षनगरनिकटमाजगाम। सविधमुपसर्पति च महावराहे हिरण्यनगरे अट्टालकाः पेतुः, देवमूर्तयो जहसुः, शिवा नेदुः, वृक्षा विना वातं निपेतुरित्याद्युत्पातमालोक्य राजातिविस्मितो दैत्यानाहूय किमिदमकस्मादेव जातमित्यावेदयामास। प्रह्लादश्च सकलमाकर्ण्य ज्ञानचक्षुषा कारणं निर्णीयातिविनीतः पितरं प्रणम्य मयाद्य रात्रौ वराहरूपी कश्चिदुपेत्य भवन्तं बलात्कारेण गृहीतवानित्यादि स्वप्ने दृष्टं, इदं च यथा न तथ्यं स्यात्तथा विधीयतामित्युवाच। हिरण्याक्षश्च मयाप्यद्य स्वप्ने दृष्टमस्मदीयानि भूषणानि शस्त्राणि वासांसि च मत्तः समाकृष्य भगवता शंकरेण महेन्द्राय दत्तानीति प्रोवाच। दैत्या दानवाश्च स्वामिन् स्वप्नदर्शनमिदमतिमिथ्येत्यूचुः॥

तेषां तद्वचनं श्रुत्वा हिरण्याक्षो महासुरः।
प्रहस्य तानिदं सम्यगुवाच वदतां वरः॥ ६१॥

स्रष्टा यः सर्वभूतानां दाता हर्ता तथैव च।
विहितं तेन यत्पूर्वं तत्कुर्यात्कोऽन्यथा पुनः॥ ६२॥

यदि मृत्युरवध्यं मे विहितस्तेन दानवाः ।
अयुध्यमानमासीनमेत्यासौ मां हनिष्यति ॥ ६३ ॥

वीक्षध्वं तन्महत्स्थानं सर्वं यत्नासुरोत्तमाः ।
यत्र तिष्ठन्तमभ्येत्य न मां मृत्युर्नयिष्यति ॥ ६४ ॥

अथवा नैव मृत्युर्मे विहितोऽनेन दानवाः ।
युध्यमानं यथापूर्वं नैव मां स नयिष्यति ॥ ६५ ॥

मादृशः कथमेतद्धि कुर्यात्साधुभिर्विगर्हितम् ।
काले मृत्युं समावेद्य ततः स्वात्माभिरक्षणम् ॥ ६६ ॥

रणे रिपूणां कदनं कृत्वैकश्चाप्यनेकशः ।
पृष्ठं दद्यात्पुनस्तेषां मादृशो दानवेश्वरः ॥ ६७ ॥

विप्रचित्तिरुवाच ।

देवाश्चानेकशः सर्वे गता नष्टाश्च सर्वदा ।
पुनर्नाशं यान्ति यथा वयं सर्वे यतामहे ॥ ६८ ॥

हिरण्याक्ष उवाच ।

अमरं दैवतं ज्ञात्वा स्वमात्मानं सुदुर्बलाः ।
जीवन्तः सुचिरेणापि भूयो लप्स्यामहे वयम् ॥ ६९ ॥

राज्यमेवं विजानन्तो विपलायन्ति नित्यशः ।
अस्माकममरत्वं तु नैवास्त्यसुरपुंगवाः ॥ ७० ॥

नष्टानामप्यतोऽस्माकं जीविताशा न विद्यते ।
तस्मात्प्रयुद्धमानानां यत्प्राप्तं तद्धि नो वरम् ॥ ७१ ॥

मा कृथा नाशने बुद्धिं युद्धे बुद्धिः स्थिरा मम ।
सुयुद्धेन रणे प्राणा यान्तु मा क्लीबबुद्धिता ॥ ७२ ॥

अथ साकारकनामा दानवोऽतिसंभ्रान्तो वराहरूपिणमागतमावेदयामास ॥

सनत्कुमार उवाच ।

ततः स दानवाञ्छूरान्दैत्यांश्च सुमहाबलान् ।
उवाच नाम्ना विख्यातान्किंकरानाम दानवान् ॥ ७३ ॥

65 *cd* om. in A.

दश तानि सहस्राणि गच्छध्वं तं महाबलाः ।
जानीत कोऽयमित्येव ततो यास्याम्यहं स्वयम् ॥ ७४ ॥

ते तथा तु महामाया हृष्टाः सर्वे विनिर्गताः ।
बद्धगोधाङ्गुलित्राणाः संनद्धाः सुपदातयः ॥ ७५ ॥

ते हेमचित्राम्बरहारसूत्रा
महाबला दानवदैत्यपुत्राः ।
विनादयन्तो बहुधा विकोपिता
यथैव नागाः सविषा विनिर्ययुः ॥ ७६ ॥

ते विनिर्गत्य वेगेन दंशिता दैत्यदानवाः ।
वराहं प्रतिसंजग्मुर्मृगाः सिंहमिवान्तिकम् ॥ ७७ ॥

ते वराहदृशा तेन नीयमानासुरेश्वराः ।
आभीतिवशे संवस्राः प्रोक्षिताः पशवो यथा ॥ ७८ ॥

तानिहतान्कृतान्तेन मृत्युना चावपाशितान् ।
निनाय स तदा दैत्यान्पशूनिव यथा नरः ॥ ७९ ॥

गत्वा ते योजनान्यष्टौ उत्तीर्णाः सागराम्भसः ।
वराहं ददृशुः सर्वे सिंहं क्षुद्रमृगा इव ॥ ८० ॥

ते मुहूर्तं निरीक्ष्यैनं परिवव्रुः समन्ततः ।
विस्फारयन्तश्चापानि संक्रुद्धा दैत्यदानवाः ॥ ८१ ॥

तानापतत वरासौ निरीक्ष्य स समन्ततः ।
वाराहेन्द्रस्तदा दैत्यान्प्राहेदं सुमहाबलः ॥ ८२ ॥

श्रीवराह उवाच ।

किं मां यूयं दितेः पुत्रा अभिद्रवत सर्वशः ।
दूषयामि न वः किंचिदसुहृन्न च वो ह्यहम् ॥ ८३ ॥

अथैवंवादिनं दैत्या वराहं तं सुविस्मिताः ।
पप्रच्छुः परिवार्यैवं सर्वे दितिसुतास्तदा ॥ ८४ ॥

कस्त्वं वराहरूपीह तीर्त्वा सागरमूर्जितः ।
इहागतः किमर्थं वा क च गन्तव्यमित्यतः ॥ ८५ ॥

सनत्कुमार उवाच ।

तेषां तद्वचनं श्रुत्वा वराहोऽसौ महामनाः ।
उवाच दानवान्सर्वांस्तदा जलदनिस्वनः ॥ ८६ ॥

वराहोऽहं यथा दैत्यास्तादृग्रूपं च पश्यत ।
प्रचारार्थमिमं देशमागतोऽस्मि न संशयः ॥ ८७ ॥

हृतभार्योऽहमन्येन विमानो दितिपुंगवाः ।
पर्यटंस्तस्य दैत्यस्य चिन्तयामि च निग्रहम् ॥ ८८ ॥

दानवा ऊचुः ।

नायं प्रचारो युष्माकं दैत्यानामयमालय ।
अनादृत्य कथं दैत्यानिमं देशं त्वमागतः ॥ ८९ ॥

एवं त्वाद्य वधिष्यामः सर्वे मृगकुलाधम ।
हत्वा च त्वां नयिष्यामः सर्वे दैत्येश्वरं प्रति ॥ ९० ॥

ततस्ते दानवाः सर्वे तमायुधवरैर्भृशम् ।
निजघ्नुः पार्वतं शुद्धं मेघा वृष्ट्या समुन्नताः ॥ ९१ ॥

बलवान्सोऽपि देवात्मा वराहः सुमहाबलः ।
वध्यमानोऽपि तान्दैत्यानिदं वचनमब्रवीत् ॥ ९२ ॥

न ह्यभ्रमयतां कांचिदल्पमप्यसुरोत्तमाः ।
अपराधं चकाराहं न करिष्ये करोमि न ॥ ९३ ॥

किमर्थं निशितैः शस्त्रैस्ततः सर्वे यथापरम् ।
न हि मे वैरमस्तीह न च कार्यं मया हि वः ॥ ९४ ॥

ततः स भगवान्व्यास शक्रध्वजनिभौ भुजौ ।
प्रसार्य तस्थावुद्यन्वै भगवानिव भास्करः ॥ ९५ ॥

तेऽपि तद्वचनं श्रुत्वा दानवाः क्रोधमूर्छिताः ।
निजघ्नुर्भृशमायस्ता नानाशस्त्रास्त्रपाणयः ॥ ९६ ॥

मेघैरिव महावायुरिभैः सिंहशिशुर्यथा ।
हविषेवानलो दीप्तो गजो गोमायुभिर्यथा ॥ ९७ ॥

तथा स भगवान्विप्र वराहो नन्दिवर्धनः ।
तैरर्द्यमानोऽगणयंस्तस्थावचलसंनिभः ॥ ९८ ॥

स यदा तैः शरैश्चैव गदामुशलकम्पनैः ।
भिण्डिमालैर्भुसुण्डिभिः करवालैरयोमुखैः ॥ ९९ ॥

एतैश्चान्यैश्च बहुभिर्हन्यमानो मृगेश्वरः ।
अदृश्यो विबभौ सर्वे तदा ते दुःखिता भृशम् ॥ १०० ॥

---

94 *d* A न च कार्यो महादेव

सनत्कुमार उवाच ।

तेषां निनदतां व्यास वराहो नन्दिवर्धनः ।
शस्त्रकूटाद्विनिष्क्रम्य शिरांसि समपोथयत् ॥ १०१ ॥

कराभ्यां चरणाभ्यां च दंष्ट्राभिश्च विदारयन् ।
तन्मुक्तैरायुधैश्चैव चिच्छेदाम्याश्वशरानथ ॥ १०२ ॥

ते सर्वे करचरणैरमुक्तशस्त्रै-
र्दंष्ट्राभिर्मुखनखदारितास्तथैव ।
संक्षीणा बहुभिरिवोपभुज्यमाना
द्रव्याणामतिनिचयाः सदा महान्तः ॥ १०३ ॥

सनत्कुमार उवाच ।

ततः स राजा दैत्यानां सर्वानेव समादिशत् ।
काले तु जलदानिन्द्रो यथा भिन्नाञ्जनत्विषः ॥ १०४ ॥

आज्ञां तस्य गृहीत्वैव तेऽपि दैत्या मुदान्विताः ।
संनह्यन्त महामाया वाहनानि च भेजिरे ॥ १०५ ॥

प्रह्लादश्चानुह्लादश्च शिबिर्बाष्कल एव च ।
जम्भः कुजम्भो वातापी इल्वलोऽथ विरोचनः ॥ १०६ ॥

बलिर्बाणश्च वातश्च शंभुः कश्यप एव च ।
शंबरश्च महामायः कालशंबर एव च ॥ १०७ ॥

प्रदीप्तश्चासिलोमा च शिष्टिकश्चेति दानवाः ।
शलभः शकलश्चैव मयो ह्यालश्च विश्रुतः ॥ १०८ ॥

अजैको नमुचिश्चैव ध्वंसकर्ता खलः शुभः ।
इल्वलः पिच्छिलश्चैव विपाकः पाक एव च ॥ १०९ ॥

हस्ती दुर्योधनश्चैव विप्रचित्तिश्च दानवः ।
हयग्रीवो मुरश्चैव नरकः कुण्ड एव च ॥ ११० ॥

शकुनिर्वृषपर्वा च शतकेतुर्महाबलः ।
मकरश्चैव राहुश्च स्वर्भानुः काल एव च ॥ १११ ॥

विविधश्च कबन्धश्च धुन्धुमारश्च दुन्दुभिः ।
शाल्वो द्रुमश्च शार्वतो मयूरग्रीव एव च ॥ ११२ ॥

---

107 c A शंबरश्च for शंबरश्च.  108 a A असुरोमा.

कालनेमिर्महानादो महावीर्यः स चान्धकः ।
जग्मुर्यत्राह्वं तं विप्र हन्तुं देवा ह्यपरान् ॥ ११३ ॥

अथ भगवता शस्त्रवतां भवतां शस्त्रहीनेन मया समं युद्धे लज्जा नोदेति कथमित्युक्ते अन्धकेन तथास्त्विति स्वीकृतं ब्रह्मा 'देव नायं प्राकृतो मृगः' इत्याद्युक्त्वाभिवादित इति । ततश्च–

ततस्तं बलवान्क्रुद्धो धनुषा सोऽसुरेश्वरः ।
शरैरभ्यकिरद्व्यास बहुभिर्विररास सः ॥ ११४ ॥

अन्धको विप्रचित्तिश्च सर्वे ते दैत्यदानवाः ।
अवाकिरञ्शरैः शस्त्रैः शतशोऽथ सहस्रशः ॥ ११५ ॥

अथ देवस्तु संरब्धो विद्धस्तैर्दानवैर्भृशम् ।
शुशुभे भास्करकरैः समिद्धो भगवानिव ॥ ११६ ॥

स वेगं बलवत्कृत्वा विधमन्वा शिरोधराम् ।
सलिलं प्रययौ देवः प्रह्लादं प्रति दानवम् ॥ ११७ ॥

स गत्वा तस्य सहसा सारथिं रथमेव च ।
दंष्ट्राभिश्च कराभ्यां च नामशेषं चकार ह ॥ ११८ ॥

ततो रथादवप्लुत्य हन्यमानोऽपि दानवैः ।
रथध्वजेन तं दैत्यं मूर्ध्नि देवो विजघ्निवान् ॥ ११९ ॥

प्रह्लादोऽपि ततो दैत्यो गदया भीमरूपया ।
आजघानोरसि क्रुद्धो विप्रो धर्मे यथा स्थितम् ॥ १२० ॥

स तेनापि हतो देवो मुक्त्वा तस्य रथं तदा ।
तमेव देशमायातः पूर्वं यत्राहवे स्थितः ॥ १२१ ॥

ततोऽन्धको विप्रचित्तिः संवरः कालसंवरः ।
शरत्राशीविषाकारैर्विव्यधुर्नन्दिवर्धनम् ॥ १२२ ॥

संभिन्नस्तैस्तदा व्यास शरैः संनतपर्वभिः ।
भिद्यमानश्च बहुधा मण्डलानि चकार ह ॥ १२३ ॥

कदाचित्सिंहवच्चापि प्लवते नर्दतेऽपि च ।
शार्दूलवत्कदाचिच्च भूमावात्मानमाहवे ॥ १२४ ॥

पततः स महावीर्यस्तिष्ठते सायकान्सहन् ।
पादेन तत उत्थाय अवतीर्य वृषो यथा ॥ १२५ ॥

पक्षिवच्च स चाकाशे मण्डलानि मृगेश्वरः ।
भ्रमित्वा निश्चलं तस्थौ वराहः पर्वतो यथा ॥ १२६ ॥

एवं बहुविधान्मार्गान्विचरन्स महाबलः ।
वेगेनैव कराभ्यां स रथं जग्राह नादयन् ॥ १२७ ॥

विप्रचित्तेश्च बलवानन्धकस्य च स प्रभोः ।
भ्रामयित्वा मुहूर्तं च सहाश्वैः सहयन्तृभिः ॥ १२८ ॥

ऊर्ध्वमुत्क्षिप्य चिक्षेप बभञ्ज च पुनस्तदा ।
रथस्थितौ च तौ दैत्यौ पुनर्मूर्धन्यताडयत् ॥ १२९ ॥

तौ हताविति संक्रुद्धौ गदे चोद्यम्य वेगितौ ।
वराहं मूर्ध्नि युगपत्समाहत्य विनेदतुः ॥ १३० ॥

ताभ्यां स भगवान्क्रुद्धो हस्ताभ्यां रक्तलोचनः ।
गदे जग्राह यत्नाभ्यां बलादेव मृगेश्वरः ॥ १३१ ॥

ततश्चरन्मण्डलानि विविधानि जनार्दनः ।
गदाविशारदः सम्यग्विचित्राणि बहूनि च ॥ १३२ ॥

आक्षिप्तमथ विक्षिप्तमथाक्षिप्तं च मण्डलम् ।
उत्क्षिप्तमथ निक्षिप्तं विसृष्टं धावितं तथा ॥ १३३ ॥

परावृत्तं निवृत्तं च अर्धचन्द्रमथापि च ।
पिष्टवधं चोद्यतं चैव हंसभ्रामणमेव च ॥ १३४ ॥

गदाविशारदः सम्यग्भ्रमित्वा मण्डलानि च ।
गदामुपरि चिक्षेप सोऽन्धकाय निनादयन् ।
अपरां विप्रचित्तेश्च बलवान्नन्दिवर्धनः ॥ १३५ ॥

ते गदे तौ महावेगौ दानवौ सुदुरासदौ ।
वञ्चयित्वा रणे भूयो वराहं प्रति दानवौ ।
आधावितौ यथादेशं मुख्यौ तौ वेगिताविह ॥ १३६ ॥

तयोरापततोरेवं वराहोऽसौ महाबलः ।
मुष्टिनान्धकमाहत्य विप्रचित्तिं तथावधीत् ॥ १३७ ॥

अन्धकस्तस्य मुष्टिं तु विप्रचित्तिः पदं च ह ।
क्रुद्धौ जगृहतुर्दैत्यौ तावुभौ भुजगाविव ॥ १३८ ॥
तौ क्षिप्तौ पेततुर्भूम्यां दानवौ युद्धदुर्मदौ ।
दारयाणौ महीं घोरौ वाच्च्युतौ नारदाविव ॥ १३९ ॥

असावपि च देवेशो वराहो नन्दिवर्धनः ।
रथान्वै सर्वदैत्यानां चूर्णयामास वीर्यवान् ॥ १४० ॥

गृहीत्वा कूबरे कांश्चित्स चिक्षेप महार्णवे ।
कांश्चित्पदा समाहत्य पांशुसायुज्यमानयत् ॥ १४१ ॥

कंचिद्रथं रथेनैव पदातिं च पदातिना ।
गजं गजेन चाहत्य स निन्ये यमसादनम् ॥ १४२ ॥

अथ ते तं मृगं व्यास दानवा भीमगर्जिताः ।
आयुधैः समभिक्रुद्धास्ततक्षुस्तं तदा भृशम् ॥ १४३ ॥

तेनाथ सर्वे विजितासुरेन्द्राः
परस्परं वीक्ष्य मुखानि शूराः ।
व्रीडान्वितास्ते पुनरेव देवं
वराहदेवं परिवार्य तस्थुः ॥ १४४ ॥

सनत्कुमार उवाच ।

अथ ते तं मृगं व्यास परिवार्योपतस्थिरे ।
ते मृगा इव शार्दूलं सिंहपोतं यथा गजाः ।
आजघ्नुर्दानवाः क्रुद्धा वराहं शस्त्रवृष्टिभिः ॥ १४५ ॥

स चापि मृगशार्दूल उपविश्य महोदधिम् ।
अपोऽपिवत्समाविश्य वह्निर्वै वडवामुखः ॥ १४६ ॥

तथा तानीरितानि दैत्यैरायुधानि सहस्रशः ।
व्यादायास्त्रमहन्वक्त्रे जग्राह च ग्रास च ॥ १४७ ॥

ग्रसित्वा तानि शस्त्राणि सर्वाणि सुमहाबलः ।
दानवान्प्रति संचक्रे वेग सिन्धुरिवापरः ॥ १४८ ॥

गजान्प्रति यथा सिंहः सिंहान्शरभराडिव ।
गरुत्मान्भुजगान्यद्वच्छार्दूलश्च मृगानिव ॥ १४९ ॥

मेघवृन्दं यथा वायुः कपोतानिव पक्षिराट् ।
तथा स भगवान्व्यास दानवान्प्रति लोडयत् ॥ १५० ॥

वेग चक्रे यथा क्षिप्रमिन्द्रियान्प्रति वै मनः ।
आसादयन्स तान्दैत्यान्महाजलदनिस्वनः ।
सर्वान्विद्रावयामास रुद्रः पशुगणानिव ॥ १५१ ॥

काश्चित्पद्भ्यां स संक्रुद्धो हस्ताभ्यामपरानपि ।
अपराम्द्रंष्ट्रया तत्र ह्यप्रैषीद्यमसादनम् ॥ १५२ ॥

तलेन शम्बरं भूमौ कालसंवरमेव च ।
नरकं पादघातेन हयग्रीवं च मुष्टिना ॥ १५३ ॥

उरसा नमुचिं चापि महामायं च सुव्रत ।
आहत्याहत्य संक्रुद्धः पातयामास देवप ॥ १५४ ॥

तं तथा द्रावयाणं च गर्जमानं च सिंहवत् ।
विप्रचित्तिर्वराहं च मुष्टिनोरस्यताडयत् ॥ १५५ ॥

विप्रचित्तिं जघानोग्रं पार्श्वदेशे स मुष्टिना ।
स आहतो वराहेण वराहं क्रोधमूर्छितः ।
पुनर्जघान वेगेन वक्षस्येनं विनादयन् ॥ १५६ ॥

अमृष्यमाणस्तं घातं वराहः स महाबलः ।
मुष्टिनोद्यम्य तं दैत्यं वज्राभेन व्यताडयत् ॥ १५७ ॥

स दैत्यस्तेन घातेन भ्रमित्वा चक्रवत्तदा ।
पपात भूमौ वेगेन वाताहत इव द्रुमः ॥ १५८ ॥

पतितं तं तदाभ्येत्य विप्रचित्तिं मृगेश्वरः ।
पादे जग्राह देवोऽसौ द्रावयाणो दितेः सुतम् ॥ १५९ ॥

स तं च भ्रामयित्वाथ नर्दित्वा चासकृद्बली ।
पुरं प्रति चिक्षेप महात्मा नन्दिवर्धनः ॥ १६० ॥

स तेन क्षिप्तो विभ्रमौ दानवाधिपतिर्बली ।
सवलाकतडिज्जालपरिच्छिन्न इवाम्बुदः ॥ १६१ ॥

त्रस्तहाराम्बरधरश्च्युतमालाविभूषणः ।
पपातोपरि वेगेन हिरण्याक्षस्य वेश्मनः ।
सौधमट्टालकं तस्य विमानमिव संस्थितः ॥ १६२ ॥

सोऽपि दानवशार्दूलो वराहेणावताडितः ।
तेन चैव हि घातेन मुहूर्तमभवज्जडः ॥ १६३ ॥

तं समाश्वासयद्राजा तदा शीतेन वारिणा ।
तालवृन्तैश्च बहुभिर्मणिभिश्च दितेः सुतः ॥ १६४ ॥

समाश्वास्योत्थितश्चैव उपविष्टो वरासने ।
राजा पप्रच्छ तं दैत्यं परं विस्मयमागतः ॥ १६५ ॥

राजोवाच ।

केनाद्य हिमवान्दैत्य पृथिवीयंससागरा ।
सहामरैर्महादैत्यैश्चलिता विश्वकर्मणा ॥ १६६ ॥

केनाद्य मन्दरो ग्रस्तो मृत्युः केन पराजितः ।
केन त्वं दानवेशानः क्षिप्तः को बलवान्कन्निः ॥ १६७ ॥

पृथिव्यास्तुलनं यादृङ् मन्दरस्य च चालनम् ।
मृत्योश्च ग्रथनं यादृक्तद्देवं क्षेपणं महत् ॥ १६८ ॥

रुद्रेन्द्रप्रतिमो वीरो लोकपालभयंकरः ।
केन त्वं तुलितः संख्ये बलवान्बलिना बलात् ॥ १६९ ॥

कस्येदं बलमक्षोभ्यं कस्य बाह्वोर्बलं महत् ।
ख्यापितं त्रिषु लोकेषु दानवेश्वर कथ्यताम् ॥ १७० ॥

सनत्कुमार उवाच ।

तस्य तद्वचनं श्रुत्वा दानवः सुमहाबलः ।
नत्वाह दीर्घं निश्वस्य निरीक्ष्य च पुनः पुनः ॥ १७१ ॥

विप्रचित्तिरुवाच ।

अमानुषमिदं राजन्नतिदैवं तथापि च ।
अतिदैत्यं च दैत्येषु न दृष्टं न श्रुतं मया ॥ १७२ ॥

यादृशं तु वराहस्य तादृगस्य न तत्क्वचित् ।
न हि तुल्यं प्रपश्यामि तस्य राजन्महात्मनः ॥ १७३ ॥

अस्त्रैः शस्त्रैश्च बहुभिस्तक्षमाणस्य संयुगे ।
नार्तिर्दुःखं च संज्ञा च प्रज्ञा चैव न हीयते ॥ १७४ ॥

भवेत्तदानीं दृष्टस्य मम तेन न निर्वृतिः ।
न दैत्यदानवे राजन्सुतोऽहं भयमित्युत ॥ १७५ ॥

यथा क्षुद्रमृगान्सिंहो मण्डूकानिव चोरगः ।
तथा स कलयामास सर्वान्दैत्येन्द्रदानवान् ॥ १७६ ॥

न तं मृगमहं मन्ये न देवं नापि चासुरम् ।
कोऽप्यसौ दितिपुत्राणामनर्थः समुपस्थितः ॥ १७७ ॥

---

176 B om 155 *c*—177 *d*.

तेनास्मि मुष्टिना मूर्ध्नि ताडितो भूतलं गतः ।
गृहीत्वा सहसा क्षिप्तः पातितस्त्वद्गृहोपरि ॥ १७८ ॥

दानवानां च दैत्यानामितरेषां च दानव ।
न जाने समरस्थानं मन्येऽहं सर्वथा हितम् ॥ १७९ ॥

अवध्यः स महातेजा बलवान्दुर्बला वयम् ।
श्रुत्वैवं दितिपुत्राणां हितं यत्तत्समाचर ॥ १८० ॥

तस्याङ्के मुनयः सर्वे दृश्यन्ते सह दैवतैः ।
कृत्या सेति मतं दैत्य तवार्थे दितिनन्दन ॥ १८१ ॥

मतिश्च तव दैत्येन्द्र युद्धार्थं कृतनिश्चया ।
निवर्तस्वेति युद्धाद्वै दैत्यानां हितमाचर ॥ १८२ ॥

अजय्योऽसौ जिता दैत्या मा नो युद्धे नियोजय ।
हित्वास्माकं पुरं सर्वे समुद्राम्भः समास्थिताः ॥ १८३ ॥

तिष्ठेम राजन्मा युद्धे तेन सार्धं मनः कृथाः ।
मावमंस्था मृगं दैत्यं मृगोऽसाविति सर्वतः ।
नरसिंहो ह्यभूत्पूर्वं मृगोऽभूद्बाधितुं हि नः ॥ १८४ ॥

यावत्त्वं भ्रियसे दैत्य दानवानां सुखावहः ।
तावत्सर्वे नृप भीता भविष्यन्ति न संशयः ॥ १८५ ॥

मा नश्यन्तु दितेः पुत्रा दनोश्चैव सुपालिताः ।
अथ याम पुरादस्मादसुरेश्वर सर्वतः ॥ १८६ ॥

तस्य तद्वचनं श्रुत्वा हिरण्याक्षः प्रतापवान् ।
उवाच दानवेन्द्रं तं भीतं तस्य महात्मनः ॥ १८७ ॥

असंशयं महात्मासौ मृगो दानवसत्तम ।
येन मन्दरकल्पस्त्वं तुलितोऽसि महाबलः ॥ १८८ ॥

अद्य वर्षसहस्राणि दिव्यान्यसुरपुंगव ।
चत्वारि भुञ्जता राज्यं गतानि सुमहान्ति मे ॥ १८९ ॥

प्रथमं चात्र संप्राप्तं तावद्देवाश्च नाशिताः ।
सबला बाहुभिर्घोरैः संग्रामे त्वबलाः कृताः ॥ १९० ॥

सोऽहं तथा बलोपेतो भुक्त्वा राज्यमकण्टकम् ।
भीतः प्रविश्य सलिलं कथं स्थास्ये भुजङ्गवत् १९१ ॥

मृगरूपी स विष्णुश्च यथाहं रूपमास्थितः ।
ममाग्रतो यदि स्यात्तमेकृत्य दानवेश्वर ॥ १९२ ॥

ममापि बलमक्षुण्णं तस्माच्च बलवानहम् ।
यो मे भयात्परित्यज्य स्वरूपं मृगतां गतः ॥ १९३ ॥

यो हन्याद्धस्तिनं संख्ये सिंहं शरभमेव च ।
तस्य कथं भवेद्भीतिर्मृगे ह्यस्मिन्महाबल ॥ १९४ ॥

मद्भयाच्च वराहश्च सर्वैर्देवैरधिष्ठितः ।
समाह्वयति दैत्येन्द्र जय एवं ततो हि मे ॥ १९५ ॥

भवानेव हि मे दैत्य तेन दूतः प्रचोदितः ।
त्वरितो मृत्युकालेन गत्वा दानवपुंगव ॥ १९६ ॥

अद्य त भ्रातृहन्तारं दानवानां भयंकरम् ।
अहत्वा न निवर्तिष्ये शपे सत्येन दानव ॥ १९७ ॥

सूतं ततः समादिश्य रथ सज्जमचीकरत् ।
समाश्वासयितुं पत्नीः प्रविवेश पुनर्गृहम् ॥ १९८ ॥

स तत्र ताभि. कृतमङ्गलस्तदा
दिते सुतस्तास्तु निरीक्ष्य सर्वतः ।
जग्राह सर्वं रणयोग्यमुद्गलं
महाबलः शत्रुनिवारणक्षम. ॥ १९९ ॥

सनत्कुमार उवाच ।

स धन्वी कवची भूत्वा बद्धगोधाङ्गुलित्रवान् ।
बद्धपृष्ठोऽशुचिश्चैव शरहस्तो महाबल' ॥ २०० ॥

हरिश्मश्रुश्चतुर्दंष्ट्र शङ्कुकर्णो महाहनु. ।
आजानुबाहु. सुश्यामो न्यग्रोधपरिमण्डल' ॥ २०१ ॥

हस्तयो. पद्मशङ्खौ च चक्रमत्स्यौ च पादयो' ।
महाहनुर्जालपादो जालहस्तोऽश्वमेहनः ॥ २०२ ॥

लोलादित्यनिभाक्षश्च अञ्जनाचलसंनिभ. ।
स निर्ययौ तदा व्यास भ्रुकुटीदूषितानन ॥ २०३ ॥

थारादपदस्यत्सूतेन रथ समुपकल्पितम् ।
सहस्रनल्वमात्रं च हयैर्दिव्यैः समन्वितम् ॥ २०४ ॥

सहस्रैर्दशभिर्व्यास सर्वोपकरणान्वितम्।
सर्वाङ्गेन सुसंयुक्तं ध्वजेनादित्यवर्चसा ॥ २०५ ॥
आरुरोह जयेत्युक्तो दानवैर्बहुभिस्तदा।
दिवाकरो रथं यद्वद्भगवांस्तेजसां पतिः ॥ २०६ ॥
विबभौ स तदारूढो रथस्थो दितिनन्दनः।
सौवर्णे भाजने यद्वदिन्द्रनील समन्वितम् ॥ २०७ ॥
किरीटं त्वावभौ तस्य शिरस्थं तु महाद्युतेः।
यथाञ्जनगिरेः शृङ्गे दावाग्निश्च समास्थितः ॥ २०८ ॥
संतुतोदाथ यन्तारं स दैत्यो गमनं प्रति।
तस्य पार्श्वेऽभवद्व्यास विप्रचित्तेरवस्थितिः ॥ २०९ ॥
शङ्खभेरीमृदङ्गैश्च मुरजैर्वेणुभिस्तथा।
वाद्यमानैर्ययौ राजा हिरण्याक्षः स्वकात्पुरात् ॥ २१० ॥
अग्रतः पृष्ठतश्चैव पार्श्वयोरुभयोरपि।
जग्मुः सर्वेऽसुरा व्यास भास्करस्य यथा ग्रहाः।
केतोरिव यथान्यो हि प्रतिकेतुरवस्थितः ॥ २११ ॥
निर्गच्छमानः स्वपुरादुत्पातान्भयशंसिनः।
अपश्यद्व्यास दैत्येन्द्रो न च तानकरोद्धृदि ॥ २१२ ॥
अच्छिनत्तस्य पन्थानं भुजङ्गः कृष्णदेहवान्।
गृध्रश्च रक्तवर्णोऽस्य विलिल्ये ध्वजमूर्धनि ॥ २१३ ॥
गृध्रश्चक्रायते चास्य रथोपरि च गच्छतः।
ध्वजश्चाच्छिद्यत महान्रथस्य तु महाप्रभः ॥ २१४ ॥
वामं चाङ्गं स्फुरत्तस्य शरीरस्य मुहुर्मुहुः।
ह्रेषन्ते च हया दीना हस्तिनो विमदा बभुः ॥ २१५ ॥
एतांश्चान्यांश्च सुबहून्स दैत्यो मुनिसत्तम।
अवैक्षत निमित्तानि भयदान्यात्मनोऽसकृत् ॥ २१६ ॥
नातिदूरे स निष्क्रम्य नगरान्तं मृगेश्वरम्।
अपश्यद्दानवः सख्ये युध्यमानमभीतवत् ॥ २१७ ॥

---

205 c B रुद्वाङ्गेन for सर्वाङ्गेन

सोऽपि दैत्यवरः सम्यक् क्रोधात्संरक्तलोचनः ।
विस्फारयन्महच्चापं रथेनाभ्यपतद्बली ॥ २१८ ॥

वराहोऽपि महाबाहुर्विदित्वा दितिनन्दनम् ।
सुवर्णाक्षं प्रति रुषा स वेगेनाभ्यधावत ॥ २१९ ॥

तस्यापतत एवाशु दानवः सुमहाबलः ।
सर्वसंधिषु तीक्ष्णाग्रान्निचखान बहूञ्शरान् ॥ २२० ॥

सायकैस्तैर्विनिर्भिन्नः सर्वसंधिषु सुव्रत ।
न चचाल मृगेन्द्रोऽसौ विष्टब्धः समतिष्ठत ॥ २२१ ॥

ततस्तु ते तदा व्यास दृष्ट्वा देवं महाभयम् ।
विशल्यकरणैर्मन्त्रैर्विशल्यं चैव चक्रिरे ॥ २२२ ॥

स विशल्यस्तदा देवैः कृतो मृगपतिर्महान् ।
पुनर्वेगं महत्कृत्वा जगाम दितिजान्प्रति ॥ २२३ ॥

स वध्यमानो बहुभिः शरैर्मृगपतिर्महान् ।
दैत्येन्द्ररथमास्थाय इयेष रथमव्ययः ॥ २२४ ॥

ग्रहीतुं नादयन्व्यास बहुधा विश्वरूपधृक् ।
यन्ता च मण्डलं कृत्वा भ्रामयामास तं रथम् ॥ २२५ ॥

प्रसारितकरं दैत्यो मृगं त सुमहाबलम् ।
बबन्धास्त्रेण नागेन स बद्धो न्यपतद्भुवि ॥ २२६ ॥

पतितं तं च दैत्येन्द्रा विविधायुधपाणयः ।
निजघ्नुर्भृशमायस्ता बहुधा क्रोधमूर्छिताः ॥ २२७ ॥

अवध्यं वध्यमानं च पतितं नन्दिवर्धनम् ।
गरुत्मान्भुजगेन्द्रेभ्यः क्षिप्रमेव व्यमोचयत् ॥ २२८ ॥

मुक्तश्च भुजगेन्द्रेभ्यो द्रावयाणो दितेः सुतान् ।
हिरण्याक्षरथं तूर्णमभ्यधावन्महामनाः २२९ ॥

तं धावन्तं पुनर्दैत्यः शरेणानतपर्वणा ।
विव्याध हृदये व्यास नर्दमानो यथाम्बुदः ॥ २३० ॥

मृगेन्द्रश्च विभिन्नोऽसौ हृदये मोहमास्थितः ।
पपात भूमौ निर्वृत्ते शक्रध्वज इवोत्सवे ॥ २३१ ॥

ततो हाहाकृतं सर्वैः संमूढैर्देवपुंगवैः ।
ऋषयस्तुष्टुवुश्चैनं भास्करश्चाप्रभोऽभवत् ॥ २३२ ॥

अथ सोऽऽप्यायितस्तत्र ऋषिभिर्ब्रह्मसत्तमैः ।
प्रतिपद्य तदा संज्ञामिदं वचनमब्रवीत् ॥ २३३ ॥

आप्याययध्वं मां क्षिप्रं मूढोऽहं सर्वतः सुराः ।
नाल्पवीर्येण शक्योऽयं दैत्यो बाधयितुं रणे ॥ २३४ ॥

ततस्ता देवताः सर्वे ऋषयश्च तपोधनाः ।
तपसा स्वेन तं देवं सर्वे एवाभ्यपूरयन् ॥ २३५ ॥

तस्य चाप्यायमानस्य ऋषिभिर्दैवतैः सह ।
ततो रूपं युगान्ताग्निकालमृत्युसमं बभौ ॥ २३६॥

स दीप्यमानो विबभौ महात्मा
देवैश्च सर्वैर्ऋषिभिः स्तुतश्च ।
दीप्तस्तदा भास्करस्तुल्यकल्पो
लोकान्दहिष्यन्निव देवदेवः ॥ २३७ ॥

सनत्कुमार उवाच ।

स तथाप्यायितो देवैर्बलवान्भास्करद्युतिः ।
चित्रं बहुविधं शीघ्रं मण्डलानि परिभ्रमत् ॥ २३८ ॥

क्रुतादि सिंहवत्कृत्वा सोऽवलोकयत प्रभुः ।
पृष्ठतश्चाग्रतश्चापि पुनर्गजवदाचरत् ॥ २३९ ॥

पुनर्व्यात्ताननो भूत्वा शस्त्राण्यग्रसत प्रभुः ।
पुनर्वृक्षैः शिलाभिश्च दानवान्समचूर्णयत् ॥ २४० ॥

पुनराकाशगो भूत्वा पक्षिराडिव खाद् भ्रमत् ।
पुनर्जहास संक्रुद्ध अशनीपातसंनिभम् ।
पुनश्च सूक्ष्ममात्मानं कृत्वा तस्थावतोऽग्रतः ॥ २४१ ॥

एवं त वल्गमानं च नर्दमानं च दानवः ।
उवाच भ्रुकुटीवक्त्रो हिरण्याक्षोऽभिनादयन् ॥ २४२ ॥

भोः क्षुद्रमृग दुर्बुद्धे न त्वं मोक्षमवाप्स्यसि ।
हत्वा च त्वां प्रदास्यामि रुद्राय बलिमोजसा ॥ २४३ ॥

त्वया हतश्छद्मना मे भ्राता ज्येष्ठो दुरात्मना ।
तस्याद्य कर्मणः प्राप्तं फलं दुष्टात्मनस्तथा ॥ २४४ ॥

तस्य तद्वचनं श्रुत्वा हिरण्याक्षस्य संयुगे ।
उवाच भगवान्विष्णुः क्रोधयानो दितेः सुतम् ॥ २४५ ॥

हतोऽसौ नरसिंहेन मया दैत्यः प्रतापवान् ।
विक्रम्य संयुगे तत्र भवतोऽपि वधो ध्रुवः ॥ २४६ ॥

यदि त्वं गच्छसे खं वा पातालं वा ततोऽपरम् ।
पर्वतं वोदधिं वापि न तथापि विमोक्ष्यसे ॥ २४७ ॥

यत्ते बलं तपो यच्च या च माया तवासुर ।
तत्सर्वं निर्दहाम्यद्य तव देहं सजीवितम् ॥ २४८ ॥

हिरण्याक्ष उवाच ।

त्वं मया शरविध्वस्तो देवैर्मन्त्रैर्विमोचितः ।
बद्धं त्वक्षेण भूयस्त्वां पक्षिराजो ह्यमोचयत् २४९ ॥

भूयो मृतश्च दुर्बुद्धे देवैर्द्विर्जीवितोऽभवात ।
भूयश्चाहं वधिष्यामि सिंहो मृगमिवाजने ॥ २५० ॥

तव का शक्तिरद्येह माहेश्वरमृते वरम् ।
तत्त्वावयोरेतदेव ह्यन्तरं सुमहद्धरम् ॥ २५१ ॥

यः स्यात्कुलीनो विद्वान्वा सतां मार्गे व्यवस्थितः ।
सोऽन्येनैव जितं मत्वा आत्मानं संयुगे नमेत ॥ २५२ ॥

निर्घृणश्चासत्कुलश्च छिद्रघाती दुरात्मवान् ।
त्वदन्यः को भवेत्तिर्यग्योनौ दैत्यस्य विद्यते ।
न त्वं मम कृतो मृत्युरहं तु तव संयुगे ॥ २५३ ॥

एते सिद्धाः प्रपश्यन्ति चारणाश्चापि सर्वशः ।
आवयोरन्तरं संख्ये बहुधा युध्यमानयोः ॥ २५४ ॥

सनत्कुमार उवाच ।

तमापतन्तं वेगेन सशूलं दृष्टवान्मृगः ।
दैत्यसंघैः समासक्तं सर्वप्राणिभयंकरम् ॥ २५५ ॥

अलक्षितेन शूलेन तमहन्दितिनन्दनः ।
विभिन्नो हृदये व्यास मृतकल्पः पपात च ॥ २५६ ॥

---

249 *d* B धर्मराजो for पक्षि°.

ततो हाहाकृतैर्भूतैरदृश्यैर्मुनिसत्तम ।
उद्वेलाः सागराश्चासन्भास्करश्चाप्रभोऽभवत् ॥ २५७ ॥

उल्काः पेतुश्च सर्वत्र म्लानमाल्याः सुराऽभवन् ।
ग्रहाणामभवद्युद्धं विमानानि च पेतिरे ॥ २५८ ॥

जजपुर्मुनयः सर्वे वराहे पतिते तदा ।
महादेवं नमस्कृत्य ब्रह्मा सस्मार तं तदा ॥ २५९ ॥

ततो वितिमिरं सर्वमभवत्पूर्ववच्छुभम् ।
प्रकृतिस्थं जगच्चाभूद्वराहश्चोदतिष्ठत ।
तेजो माहेश्वरं दिव्यं विवेश मधुसूदनम् ॥ २६० ॥

सोऽऽप्यायितस्ततः शूलं स्थूलं निष्कृष्य माधवः ।
सहस्रानलसंकाशो बभूव सुमहाबलः ॥ २६१ ॥

ततस्तेनैव शूलेन तं दैत्यं देवनन्दनः ।
[ ] ॥ २६२ ॥

मध्ये भिन्नः स तं शूलं निष्कृत्य च विसृज्य च ।
खड्गं निष्कृष्य वेगेन वराहं मूर्ध्न्यताडयत् ॥ २६३ ॥

स तेन सुप्रहारेण वराहो नन्दिवर्धनः ।
नार्तिमानभवद्व्यास बभूव रुधिरप्लुतः ॥ २६४ ॥

नानाधातुविचित्रोऽसौ हिमवानिव पर्वतः ।
बभौ वराहो देवात्मा सर्वासुरविमर्दनः ॥ २६५ ॥

पुनराहन्तुकामस्य तस्य दैत्यस्य सुव्रत ।
अथ हस्तप्रहारेण खड्गं हस्तादपातयत् ॥ २६६ ॥

शरभाविव चायस्तौ शार्दूलाविव निर्घृणौ ।
परस्परमयुध्येतां परस्परजयैषिणौ ॥ २६७ ॥

अङ्कुशैर्व्योमहस्तैश्च क्षेपणैरपसर्पणैः ।
मण्डलैश्च पुनश्चित्रैः कर्षणैरपकर्षणैः ॥ २६८ ॥

तलैश्च मुष्टिभिश्चैव भुजैः सचरणैरपि ।
नखैश्च दशनैश्चैव तथान्यैश्च महाबलैः ॥ २६९ ॥

---

262 *cd* are wanting in AB.

तयोरेवाभवद्युद्धमुभयोर्देवदैत्ययोः ।
अहानि दश चाष्टौ च तथान्यानि चतुर्दश ॥ २७० ॥

अन्यत्सहस्रमेवादिपर्यन्तं दिव्यमानुषम् ।
एष कालोऽभवत्तत्र ततो दैत्योऽचलोऽभवत् ॥ २७१ ॥

तं हीयमानमालोक्य दैत्याधिपतिमूर्जितम् ।
आकाशे वागुवाचेदमशरीरा च सुस्वरा ॥ २७२ ॥

शृणु देव वराहेदं श्रुत्वा चैतत्समाचर ।
अशक्योऽयं त्वया ह्येवं हन्तुं दैत्यो महाबलः ॥ २७३ ॥

अबलोऽयं कृतः शूरो ध्रुवं माहेश्वरेण हि ।
तेजसा चैव जहीनमेष कालोऽस्य वर्तते ॥ २७४ ॥

मुक्त्वैवं दैत्यराजानं चक्रेण विनिषूदय ।
माहेश्वरेण कालेन ततो मृत्युमवाप्स्यति ॥ २७५ ॥

सनत्कुमार उवाच ।

ततस्तदभिसंश्रुत्य भगवान्नन्दिवर्धनः ।
मुमोच दैत्यराजानं पदेनाहत्य वक्षसि ॥ २७६ ॥

स मुक्तस्तेन कालेन विबभौ दैत्यपुंगवः ।
मुक्तमुक्तो यथा सूर्यः सैंहिकेयेन राहुणा ॥ २७७ ॥

भगवानपि दीप्यन्तं श्रिया दैत्यं समीक्ष्य तम् ।
सस्मार तत्तदा चक्रं नमस्कृत्वा पिनाकिनम् ॥ २७८ ॥

ततः सर्वा दिशो व्याप्त वह्निपुञ्जनिभा बभुः ।
शब्दश्च सुमहानासीद्युगान्ताम्बुदसंनिभः ॥ २७९ ॥

सिद्धाः पेतुश्च मेदिन्यां देवांश्च भयमाविशत् ।
स्वस्त्यस्तु सर्वभूतानामित्यूचुर्मुनयस्तदा ॥ २८० ॥

सागराश्चावक्षुभ्यन्त विनेशुर्नागपक्षिणः ।
दैत्याश्च दानवाश्चैव सर्वे ते विविशुः पुरम् ॥ २८१ ॥

भयत्रस्तानि भूतानि उल्काः पेतुर्नभस्तलात् ।
आगच्छंश्च युगान्तानि कालचक्रे सुभास्वरे ॥ २८२ ॥

क्षणान्तं तन्महाचक्रं प्रजज्वाल नरान्तकम् ।
दुर्निरीक्ष्यं हि जन्तूनां सर्वदा सर्वघाति च ॥ २८३ ॥

283 ॥ B क्षुरान्त for क्षणान्तं.

तथाप्रतिहतं दिव्यं मोहनं सर्वदेहिनाम् ।
करभागाद्वराहस्य शतारमतिनिस्वनम् ॥ २८४ ॥

तमापतन्तं संवीक्ष्य सर्वभूतानि सर्वशः ।
पेतुर्भूमौ महाघोरमपश्यंश्च च किंचन ॥ २८५ ॥

सोऽपि देवस्तदा कृत्वा रूपं सुमहदव्ययम् ।
त्रैलोक्यव्यापि निक्षिप्य दानवं प्रति नोदयत् ॥ २८६ ॥

तद्युगान्तानलप्रख्यं क्षुरान्तं स्फोटयन्नभः ।
जगाम दानवं क्षिप्रं दिशः सर्वा दहन्निव ॥ २८७ ॥

तं तु दानवशार्दूलमुपजातमहारवम् ।
जघानास्त्रैर्बहुविधैरव्यथद् द्विजसत्तम ।
चकार भस्मसाच्छिप्रं जगाम च विनादयन् ॥ २८८ ॥

अथ मायां तु ससृजे तैजसीं पार्थिवीमपि ।
वायवीं वारुणीं चैव तामसीमिन्द्रियामिकाम् ॥ २८९ ॥

तथैव योगिनीं मायां मोहनीं स्तम्भनीमपि ।
निवर्तनीं जम्भनीं च चकारान्याश्च संयुगे ॥ २९० ॥

तास्ताः सर्वास्तदा चक्रं सुमहद्भीमनादवत् ।
भित्वा तस्य शिरः कायादुन्ममाथ यथाबलम् ॥ २९१ ॥

तत्ते निकृत्तं सुमहच्छिरोऽग्र्यं
व्यात्ताननाग्निप्रतिमोग्रनेत्रम् ।
दंष्ट्राकपालाङ्कितभीमनादं
पपात मेरोरिव शृङ्गमुच्चम् ॥ २९२ ॥

रथाङ्गनिष्पीतवपुर्वराङ्गं
न भाति तद्वक्त्रमतीव दीनम् ।
निशाप्रहाणे विनिवृत्तरश्मि
बिम्बं यथा चन्द्रमसो न शोभते ॥ २९३ ॥

तद्रक्तपङ्क्तिच्छदमाननं मुहु-
र्मुहुश्च दन्तानपि संदशानम् ।
पपात दैत्यस्य शिरो निकृत्तं
यथा गिरेः शृङ्गमिवातिवृद्धम् ॥ २९४ ॥

---

294 *ab* A तद्रक्तपङ्क्तिच्छदनं मुहुश्च दन्ता... दशानाम् ( ? )

सनत्कुमार उवाच ।

तस्मिन्विनिहते दैत्ये सुराः सर्वे हि तुष्टुवुः ।
ऋषयश्च तपोयुक्ताः पुष्पवृष्टिं पपातिरे ॥ २९५ ॥

देवदुन्दुभयो नेदुरदृश्यास्तु महास्वनाः ।
भूतानामभवच्छर्म प्रकृतिस्थं जगद्बभौ ॥ २९६ ॥

जगामादृश्यतां चक्रं ततः स्वस्था ययुः सुराः ।
ऋषयश्चैव लोकाश्च तं दैत्यं ददृशुर्हतम् ॥ २९७ ॥

असुरा अपि ते सर्वे पुरद्वाराणि सर्वशः ।
पिधाय यत्नात्संनद्धाः प्राकारेष्ववतस्थिरे ॥ २९८ ॥

ते भीता मुक्तकेशाश्च रजोध्वस्ता भयार्दिताः ।
जीवितं स्वं परीप्सन्तः प्राकारस्थाः स्थितास्तदा ॥ २९९ ॥

भगवानपि दीप्तार्चिर्हविषेव हुताशनः ।
भीषयाणोऽसुरान्सर्वान्पृथिवीमुद्वहत्तदा ॥ ३०० ॥

स महीं सर्वतो क्षिप्य उत्पाट्य च महीरुहान् ।
प्रवाहानपि गङ्गायाः समन्तादभ्यभिन्दत ॥ ३०१ ॥

पर्वतान्स तदोत्पाट्य दैत्योद्यानान्यचूर्णयत् ।
आरामान्सतडागांश्च बभञ्ज च ररास च ॥ ३०२ ॥

ततो दक्षिणतो गत्वा मुहूर्तं देवसत्तमः ।
शङ्खपर्वतमासाद्य ननर्द जलदो यथा ॥ ३०३ ॥

असुरा अपि ते भीताः प्राकारान्तरमास्थिताः ।
जगाम दैत्यान्संत्रास्य रत्नान्यादाय सर्वशः ॥ ३०४ ॥

स तां दंष्ट्राङ्कुरालग्नां वहन्भाति मृगेश्वरः ।
[ विषाणलग्नां लम्बन्तीं मृणालीं गजराडिव ॥

स तां सागरमध्येन वहन्भाति मृगेश्वरः । ]
वराहरूपी कालान्ते ब्रह्मेव वसुधां पुरा ॥ ३०५ ॥

ससागरां तामुत्तीर्णो भगवान्नन्दिवर्धन. ।
स्वस्थाने स्थापयामास महीं तां पुनरेव हि ॥ ३०६ ॥

---

305 Portion in [ ] om. in A.

ततः शक्राय लोकांस्त्रीन्दत्त्वा च मधुसूदनः ।
उवाच मित्र मित्रेति मित्रश्चाहं तवानघः ॥ ३०७ ॥

येऽपि तेऽन्येऽरयः केचिद्भविष्यन्त्यसुरेश्वराः ।
तेषामपि वधं घोरं करिष्यामि न संशयः ॥ ३०८ ॥

ततस्ते ऋषयः सर्वे देवताश्च सवासवाः ।
ऊचुः स्वां मूर्तिमास्थाय यथा पूर्वं तथा वभुः ॥ ३०९ ॥

श्रीवराह उवाच ।

इयं मूर्तिर्मया देवाः प्राप्ता परमवर्चसा ।
न चानया गतिः काचित्प्राप्ता मे सदृशी भुवि ॥ ३१० ॥

सोऽहं किंचिद्विहृत्येह कालं मूर्त्यानया सुखम् ।
भविष्यामि पुनर्देवः सत्यमेतद्ब्रवीमि वः ॥ ३११ ॥ इति ॥

*　*　*　।　*

उद्धृत्य क्षितिमश्रमेण जलधेर्देवान्स्वभागाशिनः
कृत्वा दुःखमपाचकार जगतः कोलावतारो हरिः ।
लोकानां हितकाम्यया वसुधया पृष्टः प्रणम्यादरा-
त्तांस्ताः करुणाभरेण भगवानूचे पुराणोद्भवाः ॥ ३१२ ॥

आदौ सर्गमुदाजहार नवधा देवो व्रतानां विधिं
भूमीभूधरखण्डमानमतुलं तत्र व्यवस्थामपि ।
स्नानानां च विधीन्फलानि विधिवद्वर्णेषु पूजां हरे-
र्भक्ष्याभक्ष्यनिरूपणं भगवतः पूजापराधानपि ॥ ३१३ ॥

पूजायामुचितोपचाररचनं विप्रादिदीक्षाक्रमं
प्रायश्चित्तविधानविश्रुतकुरुक्षेत्रादितीर्थस्थितिम् ।
माहात्म्यं किल माथुरं च मथुरातीर्थेषु तीर्थान्तरं
प्रायश्चित्तमुवाच दैवतमणि पूजापराधे हरेः ॥ ३१४ ॥

मार्दादिप्रतिमार्चनाविधिरथ श्राद्धीयविप्रादिकं
गार्हस्थ्याश्रमनिर्णयश्च निखिलं कर्मान्तराशान्तिकम् ।
नानापुण्यकथा यमस्य सदसो रूपं द्विरूपं यथा
भूयो रौरवकादिकानि नरकान्येतेषु या यातनाः ॥ ३१५ ॥

भोगानन्तरलक्षणानि वपुषां जन्मानि धर्मस्तुतिः
धर्मेणाथ पतिव्रतास्तुतिरथो शंभोः स्तुतिर्वेधसा ।
नन्दीशस्य विलोकनं शिवकथास्तस्मात्पुराणे फलं
वाराहेण वसुंधरां प्रति पुरा प्रोक्तानि सूचीक्रमः ॥ ३१६ ॥

वाराहे करुणावता भगवता प्रोक्तानि भूमेः पुरो
वाक्यानि ध्रुवमत्र विस्तरभिया संक्षिप्य शुभ्यालिखत्।
राजा टोडरमल्ल एष विदुषामादाय तत्तन्मतं
सर्वेषां विधयः स्फुरन्ति सुधियः पश्यन्तु तत्रैव तान्॥ २१७॥

[ अवतारसौख्ये वराहावतारवर्णनं नाम तृतीयो हर्षः। ]

२. ४

अथ नृसिंहावतारः॥

श्रीभागवते श्रीनारदो युधिष्ठिरं प्रति। हिरण्यकशिपुः ब्रह्मा च। तयोः संवादानन्तरम्-

श्रुत्वा तदप्रियं दैत्यो दुःसहं तनयानयम्।
कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे॥ १॥

कोपावेशेन कोपोद्रेकेण चलद्गात्रं वपुर्यस्य॥

क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम्।

क्षिप्त्वा तिरस्कृत्य॥

आहेक्षमाणः पापेन तिरश्चीनेन चक्षुषा॥ २॥

पापेन सरोषेण। तिरश्चीनेन वक्रेण॥

प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम्।
सर्पः पदाहत इव श्वसन्प्रकृतिदारुणः॥ ३॥

रे दुर्विनीत मन्दात्मन्कुलभेदकराधम।
स्तब्धं मच्छासनोद्धूतं नेष्ये त्वाहं यमक्षयम्॥ ४॥

मन्दात्मन् अल्पबुद्धे। ममाज्ञातिलङ्घिनं त्वामद्य यमालयं नेष्यामीत्यर्थः॥

क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः।
तस्य मेऽभीतवन्मूढ शासनं किंबलोऽत्यगाः॥ ५॥

[ भाग० ७ ८. २-५ ]

---

4 *a* T हे for रे. *d* BT त्वाय for त्वाह

किं बलं यस्य सः किंबलः ॥

नारद उवाच ।

इतीरितं वचः श्रुत्वा पितुर्धीमान्हरेः प्रियः ।
प्रह्लादः प्रणतः प्राह गतभीः प्रहसन्निव ॥ ६ ॥

[ चूर्णि[1] ]

प्रह्लाद उवाच ।

न केवलं मे भवतश्च राज-
न्स वै बलं बलिनां चापरेषाम् ।
परेऽवरेऽमी स्थिरजङ्गमा ये
ब्रह्मादयो येन वशं प्रणीताः ॥ ७ ॥

स ईश्वरः काल उरुक्रमोऽसा-
वोजः सहः सत्त्वबलेन्द्रियात्मा ।
स एव विश्वं परमः स्वशक्तिभिः
सृजत्यवत्यत्ति गुणत्रयेशः ॥ ८ ॥

ओजः आदित्यरुपः । सत्त्वं धैर्यं बुद्धिर्वा ॥

जह्यासुरं भावमिमं त्वमात्मनः
समं मनो धत्स्व न सन्ति विद्विषः ।
ऋतेऽजितादात्मन उत्पथस्थिता-
त्तद्धि ह्यनन्तस्य महत्समर्हणम् ॥ ९ ॥

अजितादात्मनो मनस ऋते विना अन्ये विद्विषो न सन्ति ॥

दस्यून्पुरा षण्णविजित्य लुम्पतोऽ-
मन्यन्त एके स्वजिता दिशो दश ।
जितात्मनो ज्ञस्य समस्य देहिनः
साधोः स्वमोहप्रभवाः कुतः परे ॥ १० ॥

जितात्मनो जितचित्तस्य । ज्ञस्य विदुषः । स्वाज्ञानकल्पिता' परे शत्रवः कुतः स्युः ॥

---

8 com. B आदित्य for आदित्यरूप 9 b A यस्य for धत्स्व 10 com. quoted from श्रीधर on the भागवतपुराण

हिरण्यकशिपुरुवाच ।

व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे ।
मुमूर्षूणां हि मन्दात्मन्ननु स्युर्विप्लवा गिरः ॥ ११ ॥

विप्लवा अनन्विताः ॥

यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।
क्वासौ यदि स सर्वत्र कस्मात्स्तम्भे न दृश्यते ॥ १२ ॥

प्रह्लादस्तु तं स्तम्भं निरीक्षमाणो नमस्यन्नाह । दृश्यत इति आवृत्तिः ॥

सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ।
गोपायेत हरिस्त्वाद्य यस्ते शरणमीप्सितम् ॥ १३ ॥

श्रीनारद उवाच ।

एवं दुरुक्तैर्मुहुरर्दयन्रुषा
सुतं महाभागवतं महासुरः ।
खड्गं प्रगृह्योत्पतितो वरासना-
त्स्तम्भं तताडातिबलः स्वमुष्टिना ॥ १४ ॥

[भाग० ७.८.८–१५]

स विक्रमन्पुत्रवधेप्सुरोजसा
निशम्य निर्ह्रादमपूर्वमद्भुतम् ।
अन्तःसभायां न ददर्श तत्पदं
वितत्रसुर्येन सुरारियूथपाः ॥ १५ ॥

तत्पदं तस्य ध्वनेराश्रयम् ॥

सत्यं विधातुं निजभृत्यभाषितं
व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।
अदृश्यतात्यद्भुतरूपमुद्वह-
न्स्तम्भे सभायां न मृगं न मानुषम् ॥ १६ ॥

स तत्त्वमेवं परितो विमृश्य-
न्स्तम्भस्य मध्यादनु निर्जिहानम् ।
नायं मृगो नापि नरो विचित्र-
महो किमेतन्नृमृगेन्द्ररूपम् ॥ १७ ॥

---

11 *d* A विह्वला for विप्लवा, *com* from श्रीधर  17 *a* T सत्त्वमेव for तत्त्वमेव, T विपश्यन् for विमृश्यन्

मीमांसमानस्य समुत्थितोऽग्रतो
नृसिंहरूपं तदलं भयानकम् ।
प्रतप्तचामीकरचण्डलोचनं
स्फुरत्सटाकेसरजृम्भिताननम् ॥ १८ ॥

करालदंष्ट्रं करवालचञ्चल-
क्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम् ।
स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुत-
व्यात्तास्यनासं हनुभेदभीषणम् ॥ १९ ॥

हनू कपोलप्रान्तौ तयोर्भेदेन विदारणेन भीषणम् ॥

दिविस्पृशत्कायमदीर्घपीवर-
ग्रीवोरुवक्षःस्थलमल्पमध्यमम् ।
चन्द्रांशुगौरैश्छुरितं तनूरुहै-
र्विष्वग्भुजानीकशतं नखायुधम् ॥ २० ॥

छुरितं व्याप्तम् । विष्वञ्चः सर्वत्र प्रसृताः भुजास्त एवानीकानि स्तोमास्तेषां शतानि यस्मिन् ॥

दुरासदं सर्वनिजेतरायुध-
प्रवेकविद्रावितदैत्यदानवम् ।
प्रायेण मेऽयं हरिणोरुमायिना
वधः स्मृतोऽनेन समुद्यतेन किम् ॥ २१ ॥

सर्वाणि च निजानि चक्रादीनि इतराणि वज्रादीनि त एवायुधप्रवेकाः शस्त्रोत्तमास्तैः विद्राविता दैत्यदानवा येन । प्रायेण महामायाविना हरिणा मे एवंभूतो वधो मृत्युहेतुश्चिन्तित , तथाप्यनेन समुद्यतेन किम्, न किंचित्स्यात् ॥

एवं ब्रुवंस्त्वभ्यपतद्गदायुधो
नदन्नृसिंहं प्रति दैत्यकुञ्जरः ।
अलक्षितोऽग्नौ पतितः पतंगमो
यथा नृसिंहौजसि सोऽसुरस्तदा ॥ २२ ॥

तदा सोऽसुरो नृसिंहौजसि दीप्तौ पतितः सन् अलक्षितः अदृश्योऽभूत् ॥

---

19 *c* A स्तम्भोच्चकर्णं for स्तब्धोर्ध्वं°.　　20 *b* T °मध्य for मध्यमं

न तद्विचित्रं खलु सत्त्वधामनि
स्वतेजसा योऽनु पुरापिबत्तमः ।
ततोऽभिपद्याभ्यहनन्महासुरो
रुषा नृसिंहं गदयोरुवेगया ॥ २३ ॥

सत्त्वधामनि सत्त्वप्रकाशे हरौ पतितस्य तमोमयस्यादर्शनं तद्विचित्रं न भवति ॥

तं विक्रमन्तं सगदं गदाधरो
महोरगं तार्क्ष्यसुतो यथाग्रहीत् ।
स तस्य हस्तोत्कलितस्तदासुरो
विक्रीडतो यद्वदहिर्गरुत्मतः ॥ २४ ॥

हस्तादुत्कलितः निःसृतः ॥

असाध्वमन्यन्त हृतौकसोऽमरा
घनच्छदा भारत सर्वधिष्ण्यपाः ।
तं मन्यमानो निजवीर्यशङ्कितं
यद्धस्तमुक्तो नृहरिं महासुरः ॥ २५ ॥

तद्भिया घनच्छदाः मेघान्तरिताः । यस्य हस्तात्स्वयं मुक्तः तं नृहरिं स्ववीर्याच्छङ्कितं मन्यमानः ॥

पुनस्तमासज्जत खड्गचर्मणी
प्रगृह्य वेगेन जितश्रमो मृधे ।
तं श्येनवेगं शतचन्द्रवर्त्मभि-
श्चरन्तमच्छिद्रमुपर्यधो हरिः ॥ २६ ॥

खड्गचर्ममार्गैः अच्छिद्रं यथा भवत्येवम् ॥

कृत्वाट्टहासं खरमुत्स्वनोल्बणं
निमीलिताक्षं जगृहे महाबलः ।
विष्वक्स्फुरन्तं जगृहे नु तं हरि-
र्व्यालो यथाखुं कुलिशाक्षतत्वचम् ॥ २७ ॥

खरं तीव्रम्, उत्स्वनेन महाशब्देनोल्बणं भयंकरम् । तद्भयेन हरेस्तेजसा च निमीलिते अक्षिणी यस्य । कुलिशाक्षतत्वचं इन्द्रेण सह युद्धे तत्प्रयुक्तेन कुलिशेन न क्षता त्वगपि यस्य ॥

---

25 a AB असुरा for अमरा  27 b T महाजवः for महाबलः, c T मद्गणातुर B जगृहेतु तं for जगृहे नु तं

द्वार्यूर आपात्य ददार लीलया
नखैर्यथाहिं गरुडो महाविषम् ।
संरम्भदुष्प्रेक्ष्यकरालकोचनो
व्यात्ताननान्तं विलिहन्स्वजिह्वया ॥ २८ ॥

द्वारि सभायां नान्तर्न बहिः । ऊरे ऊरौ निपात्य न भूमौ न चाम्बरे । नखैः न तु व्यसुभिरनुमार्द्रैर्वा ॥

अस्रग्लवाक्तारुणकेसराननो
यथान्त्रमाली द्विपहत्यया हरिः ।
नखाङ्कुरोत्पाटितहृत्सरोरुहं
विसृज्य तस्यानुचरानुदायुधान् ॥ २९ ॥

असृजाक्ताः रक्तसिक्ता अत एवारुणाः केसराः आननं च यस्य सः ॥

अहन्समस्तान्नखशस्त्रपाणिभि-
र्दोर्दण्डयूथोऽनुपथान्सहस्रशः ।
सटावधूता जलदाः परापतन्
ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः ॥ ३० ॥

तस्य दृष्ट्या विमुष्टं रोचिर्येषां ते ॥

अम्भोधयः श्वासहता विचुक्षुभु-
र्निर्ह्रादभीता दिगिभा विचुक्रुशुः ।
द्यौस्तत्सटोत्क्षिप्तविमानसंकुला
प्रोत्सर्पत क्ष्मा च पदातिपीडिता ॥ ३१ ॥

दिगिभा दिग्गजाः । प्रोत्सर्पत स्वस्थानात्प्रकर्षेणोदसर्पत् ॥

शैलाः समुत्पेतुरमुष्य रंहसा
तत्तेजसा खं ककुभो न रेजिरे ।
ततः सभायामुपविष्टमुत्तमे
नृपासने संभृततेजसं विभुम् ॥ ३२ ॥

[ भाग० ७ ८ १७–३४ ]

---

29, b T अन्त्रमाली for अन्त्रमालो　　32, d T संभृततेजसं for संहृत°.

देवा ऊचुः ।

अद्यैतन्नरहरिरूपमद्भुतं ते
दृष्टं नः शरणद सर्वलोकशर्म ।
सोऽयं ते विधिकर ईश विप्रशप्त-
स्तस्येदं निधनमनुग्रहाय विद्मः ॥ ३३ ॥

[ भाग० ७ ८.५६ ]

नारद उवाच ।

एवं सुरादयः सर्वे ब्रह्मरुद्रपुरःसराः ।
नोपैतुमशकन्मन्युसंरम्भं तं दुरासदम् ॥ ३४ ॥

मन्युना संरम्भ आवेशो यस्य तम् ।

साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ।
अदृष्टाश्रुतपूर्वत्वात्सा नोपेयाय शङ्किता ॥ ३५ ॥

[ भाग० ७ ९ १-२ ]

तावत्तद्दुन्दुभिरवा पुष्पवृष्टि भिया सुराः ।
नोत्साहलक्ष्मणां चक्रुरप्रसाद्य महाहरिम् ।
सर्वत्रैलोक्यनेतारो दिव्यसिंहं सुराद्यपः ।
दूरात्प्राञ्जलयस्तस्थुर्नमन्तो युद्धभैरवम् ॥ ३७ ॥
अनुगृहीष्व नः साधो त्वं हि नाथस्य वल्लभ ।
त्रैलोक्यस्यामय दद्याद्यथा स्वामी तथा कुरु ॥ ३८ ॥

[ चूर्णि १ ]

प्रह्लादं प्रेषयामास ब्रह्मावस्थितमन्तिके ।
तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३९ ॥

[ भाग० ७ ९ ३ ]

उपेहि उपगच्छ ॥

तथेति शनकै राजन्महाभागवतोऽर्भकः ।
[ शनैरुपससारेशं प्रसीदेति वदन्नमन् ] ॥ ४० ॥
उपेत्य भुवि कायेन ननाम च धृताञ्जलिः ।

[ भाग० ७ ९ ४ ]

[ स्ववद्धर्पोऽस्तु दत्तार्घे स पपाताथ दण्डवत् ] ॥ ४१ ॥

---

34 *d* T सुदुरासद for तं दुरा° 40 *cd* not found in T, taken probably from चूर्णि. 41 *cd* not found in T, taken probably from चूर्णि.

स्वपादमूले पतितं तमर्भकं
विलोक्य देवः कृपया परिप्लुतः ।
उत्थाप्य तच्छीर्ष्ण्यदधात्कराम्बुजं
कालाहिवित्रस्तधियां कृताभयम् ॥ ४२ ॥

[ भाग० ७ ९.५ ]

काल एवाहिस्तस्माद्वित्रस्ता धीर्येषाम् ॥

उत्थाप्याश्वास्य तं भक्तं पार्श्वतस्तत्प्रदर्शितवान् ।
सुरान्भुवि सुदूरस्थानालुलोके सुधार्द्रदृक् ॥ ४३ ॥

ततो जयजयेत्युच्चैः स्तुवतां नमतां सताम् ।
तद्दयादृष्टिदृष्टानां सानन्दः संभ्रमोऽभवत् ॥ ४४ ॥

यत्पादसंमार्जनलालिताया
लक्ष्म्याः कटाक्षाञ्चलमात्रदृष्टाः ।
हृष्यन्ति देवाः सततं कृतार्था-
स्तेनैव साक्षात्किमु चारुदृष्टाः ॥ ४५ ॥

तं तुष्टुवुस्तेऽभ्युपगम्य भक्ताः
प्रसीद गोविन्द जगन्निवास ।
द्रष्टुं महौजस्तव रूपमीदृक्
शक्ता वयं नेश विभो बिभीमः ॥ ४६ ॥

इत्यर्थितस्तैः प्रणतो वरेण्य-
स्तेजो जगद्व्यापि तदैव नैवम् ।
नवाभ्युदीर्णामलचन्द्रिकाभ-
माह्लादिनं सर्वमयश्चकार ॥ ४७ ॥

[ १ ]

श्रीशुक उवाच ।

स तत्करस्पर्शधुताखिलाशुभः
सपद्यभिव्यक्तपरात्मदर्शनः ।
तत्पादपद्मं हृदि निर्वृतो दधौ
हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥ ४८ ॥

[ भाग० ७ ९.६ ]

सपदि तत्क्षणमेवाभिव्यक्तं अपरोक्षीभूतं परात्मदर्शनं प्रह्लादनं यस्य ॥

अस्तौषीद्धरिमेकाग्रमनसा सुसमाहितः ।
प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥ ४९ ॥

[ भाग० ७.९.७ ]

स्वास्मिन्निव समस्तेषु तत्कृपामृतवृष्टये ।
प्रह्लादः स्तौति सत्पद्यैर्द्विचत्वारिंशता हरिम् ॥ ५० ॥

[ भागवते श्रीधरटीकायाम् ]

अथ प्रह्लादस्तुत्यनन्तरं नारद उवाच ।

एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः ।
प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत ॥ ५१ ॥

श्रीभगवानुवाच ।

प्रह्लाद भद्र भद्रं ते प्रीतोऽहं तेऽसुरोत्तम ।
वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ५२ ॥
मामप्रीणत आयुष्मन्दर्शनं दुर्लभं हि मे ।
दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति ॥ ५३ ॥

[ भाग० ७.९.५१–५३ ]

अप्रीणत अप्रीणयतः । तप्तुं अपूर्णकामत्वेन शोचितुम् ॥

प्रीणन्ति ह्यथ मां धीराः सर्वभावेन साधवः ।
श्रेयस्कामा महाभाग सर्वासामाशिषां प्रभुम् ॥ ५४ ॥

प्रीणन्ति तर्पयन्ति ॥

एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ।
एकान्तित्वाद्भगवति नैच्छत्तानसुरोत्तमः ॥ ५५ ॥

[ भाग० ७.९.५४–५५ ]

नारद उवाच ।

भक्तियोगस्य तत्सर्वमन्तरायतयात्मनः ।
मन्यमानो हृषीकेशं स्मयमानमुवाच ह ॥ ५६ ॥

तत्सर्वं वरजातम् ॥

---

50 Found in चूर्णि, *cf* श्रीधरी टीका. 54 *d* T पतिं for प्रभुं 56 *b* T अर्भक for आत्मन..

मा मां प्रलोभयोत्पत्त्या सक्तं कामेषु तैर्वरैः।
तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः ॥ ५७ ॥

भृत्यलक्षणजिज्ञासुर्भृत्यं कामेषु नोदयन्।
भवान्संसारबीजेषु हृदयग्रन्थिषु प्रभो ॥ ५८ ॥

हृदयस्य ग्रन्थिवद्भेदकेषु ॥

नान्यथा तेऽखिलगुरो घटेत करुणात्मनः।
यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ॥ ५९ ॥

आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः।
न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिषः ॥ ६० ॥

अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ६१ ॥

[ भाग० ७.१०.१–६ ]

अनपाश्रयो निरभिसंधिः निष्कामः। अन्यथा कामाद्यनभिसंधिं विना अर्थः प्रयोजनं नास्ति। ननु तथापि परमोदारस्य मम संतोषार्थं किमपि वृणीष्वेति।

१ यदि रासीश मे कामान्वरांस्त्वं वरदर्षभ।
कामानां हृद्यसंरोहं भवतस्तु वृणे वरम् ॥ ६२ ॥

रासि ददासि। असंरोहं अनुत्पत्तिम् ॥

इन्द्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः।
ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यन्ति जन्मना ॥ ६३ ॥

आत्मा देहः। यस्य कामस्य जन्मना एतानि नश्यन्ति ॥

विमुञ्चति यदा कामान्मानवो मनसि स्थितान्।
तर्ह्येव पुण्डरीकाक्ष भगवत्त्वाय कल्पते ॥ ६४ ॥

[ भाग० ७.१०.७–९ ]

भगवत्त्वाय त्वत्समानैश्वर्याय ॥

58 b T भक्तं कामेष्वनोदयन् 60 a T स्वाम्यं for सेवां 64 b T स्थितान् for स्रितान्.

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ ६५ ॥

[ कठोपनिषद् ६.१४ ]

ॐनमो भगवते तुभ्यं पुरुषाय महात्मने ।
हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ ६६ ॥

श्रीभगवानुवाच ।

नैकान्तिनो मे मयि जात्विहाशिष
आशासतेऽमुत्र च ये भवद्विधाः ।
अथापि मन्वन्तरमेतदत्र
दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ ६७ ॥

कथा मदीया जुषमाणः प्रियास्त्व-
मावेश्य मामात्मनि सन्तमेकम् ।
सर्वेषु भूतेष्वधियज्ञमीशं
यजस्व योगेन च कर्म हिन्वन् ॥ ६८ ॥

[ भाग० ७ १०.१०-१२ ]

योगेन मय्यर्पणेन कर्म हिन्वन् त्यजन् यजस्व इत्यादि भागवते भागवतोत्तमायातिप्रणताय प्रह्लादाय संसारिणामज्ञानतिमिरापहारकाणि निखिलोपनिषत्सारभूतानि सुधासमानानि वचनानीति ॥

* * * *

नाकं व्याकुलयन्महीं तरलयन्पातालमान्दोलयन्
सिन्धूनुत्पथयन्स्खलद्गुणगणान्दिग्दन्तिनो द्रावयन् ।
मर्माणि श्लथयन्हिरण्यकशिपोः श्रोत्रं विधेर्मुद्रयन्
कल्याणानि करोतु कण्ठनिनदो लीलानृसिंहस्य वः ॥ ६९ ॥

दैतेयेन दुरात्मना भगवति द्वेषात्स्वनूजन्मने
प्रह्लादाय मुकुन्दमग्नमनसे हन्तुं नियुक्ता भटाः ।
जाताः कुण्ठितपाणयो गतमदा दन्तैर्विना दन्तिनो
नागा निर्विषतां गता भगवति प्रह्लादरक्षापरे ॥ ७० ॥

ज्वालाभिर्ज्वलनस्य दन्तनिर्वधैर्मत्तद्विपानां गिरे-
र्मज्जा सर्पविषै [ स्वं शत शिशुं दैत्येश्वरे जल्पति ।
प्रह्लादेन पुरंदरादिविविपद्वन्द्ये गुणानां निधौ
विश्वव्यापिनि विश्व ] धामनि हरौ चेतश्चिरं योजितम् ॥ ७१ ॥

भूयो भ्रामनोरथे बलवतामानीय पुत्रं पुरः
कस्त्वां रक्षति कुत्र चास्ति कतमो रे मूढ तं दर्शय ।
इत्थं जल्पपरे हिरण्यकशिपौ स्तम्भेऽप्यदृभ्योद्वते
निष्क्राम गुणाभिराममतुलं श्रीनारसिंहं महः ॥ ७२ ॥

निष्क्रम्य स्फुरता विशालदशनव्यावीतदिङ्मण्डलं
दैतेयं पुरतोऽवलोक्य विसरद्रोचिष्णुना विष्णुना ।
सद्यः कोपभरात्करेण नरारभ्यान्तेन दीर्णं च सत्
वक्षो येन हिताय सोऽस्तु भवतांलीलानृसिंहाकृतिः ॥ ७३ ॥

इति नरसिंहावतारः ॥

[ अवतारसौख्ये नरसिंहावतारवर्णनं नाम चतुर्थो हर्षः । ]

२·५

अथ वामनावतारः ॥

तत्र वामनपुराणे बलिना पराजितेन शक्रेण पुलस्त्यनामाकुलया आदित्या महाविष्णोः प्रसादनम् । प्रसन्नेन भगवता च बलेरवनमाय अदितिगर्भसंभवो वामनरूपेण स्वीकृत इत्याद्यभिधाय बलिना विहितायां भगवन्निन्दायां असहिष्णुतया प्रह्लादस्य तीर्थयात्रानन्तरम्—

शुक्रस्तु भार्गवास्तयोस्मिन्ये यज्ञविधौ मुने ।
अधिष्ठिते भार्गवैस्तु महायज्ञेऽमितद्युतौ ।
यज्ञदीक्षां बलेः शुक्रश्चकार विधिना स्वयम् ॥ १ ॥

श्वेताम्बरधरो दैत्यः श्वेतमाल्यानुलेपनः ।
मृगाजिनयुतश्चित्रबर्हिपत्रविनिर्मितः ॥ २ ॥

---

71 b–d om. in A.

1 c T अधिष्ठितो भार्गवेण; d T अमितद्युतेः for °द्युतौ. 2 cd T मृगाजिना-स्तृतपृष्ठो बर्हपत्रविनिर्मितः.

समास्ते वितते यज्ञे सदस्यैरभिसंवृतः ।
हयग्रीवक्षुराद्यैस्तु मयबाणपुरोगमैः ॥ ३ ॥

पत्नी विन्ध्यावली चास्य दीक्षिता यज्ञकर्मणि ।
ललनानां सहस्रस्य प्रधानमृषिकन्यका ॥ ४ ॥

शुक्रेणाश्वः श्वेतवर्णः सर्वलक्षणलक्षितः ।
महीं विहर्तुमुत्सृष्टस्तारकाख्योऽन्वगात्स्वयम् ॥ ५ ॥

एवमश्वे समुत्सृष्टे वितते यज्ञकर्मणि ।
गते च मासत्रितये ह्रियमाणे च पावके ॥ ६ ॥

पूज्यमानेषु देवेषु मिथुनस्थे दिवाकरे ।
सुषुवे देवजननी माधवं वामनाकृतिम् ॥ ७ ॥

तं जातमात्रं भगवन्तमीशं
नारायणं लोकपतिं पुराणम् ।
ब्रह्मा समभ्येत्य महर्षिभिस्तैः
स्तोत्रं जगादाथ विभोर्महर्षे ॥ ८ ॥

नमोऽस्तु ते माधव विश्वमूर्ते
नमोऽस्तु ते माधव विश्वरूप ।

विश्वेषां मूर्तिः विश्वं रूप यस्य ॥

नमोऽस्तु ते शत्रुबलेन्धनाग्ने
नमोऽस्तु ते पापमहादवाग्ने ॥ ९ ॥

नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्ते जगदाधार नमस्ते पुरुषोत्तम ॥ १० ॥

नारायण जगन्मूर्ते जगन्नाथ गदाधर ।
पीतवासः श्रियः कान्त जनार्दन नमोऽस्तु ते ॥ ११ ॥

भवांस्त्राता च गोप्ता च विश्वात्मा सर्वगोऽव्ययः ।
सर्वधारिन्धराधारिन्धराधारिन्नमोऽस्तु ते ॥ १२ ॥

---

3 *a* AB ततोस्मिन् for समास्ते  4 *a* T तस्य for चास्य.  5 *b* T मधुमासे सुलक्षण ; *c* T चरितुं for विहर्तुं. *d* B तारकाख्योऽन्वगाद्धय; T तारका॰ क्षस्त्वगाच्च तं.  8 *a* T संजातमात्रं for तं जात॰; *c* T समं महर्षिभि॰ for महर्षिभिस्तैः; *d* T समं for विभो.  9 *a* T सत्त्वमूर्ते for विश्व॰, *b* T सात्वत for माधव. *c* T शत्रुवनेन्धनाग्ने for शत्रुबलेन्ध॰  10 *a* T नमोऽस्तु for नमस्ते.

वर्धस्व वर्धिताशेषत्रैलोक्य सुरपूजित ।
कुरुष्व त्वं देवपते मघोनोऽश्रुप्रमार्जनम् ॥ १३ ॥

त्वं धाता च विधाता च संहर्ता त्वं नरेश्वर ।
[ महालयो महायोगी योगशायी नमोऽस्तु ते ] ॥ १४ ॥

इत्थं स्तुतो जगन्नाथः सर्वात्मा सर्वपालकः ।
प्रोवाच भगवान्मह्यं कुरूपनयनं विभो ॥ १५ ॥

ततश्चकार देवस्य जातकर्मादिकाः क्रियाः ।
भारद्वाजो महातेजा बार्हस्पत्यस्तपोधनः ।
व्रतबन्धं तथैवास्य कृतवान्सर्वशास्त्रवित् ॥ १६ ॥

ततो ददुः प्रीतियुताः सर्व एव यथाक्रमम् ।
यज्ञोपवीतं पुलहः स्वयं च सितवाससी ॥ १७ ॥

मृगाजिनं कुत्समुनिर्भरद्वाजस्तु मेखलाम् ।
[ पालाशमददाद्दण्डं मरीचिर्ब्रह्मणः सुतः ] ॥ १८ ॥

अक्षसूत्रं वारुणिस्तु कौलं वेदमथाङ्गिराः ।
छत्रं प्रादाद्रुहो राजा उपानद्युगलं नृगः ।
कमण्डलुं बृहत्तेजाः प्रादाद्विष्णो बृहस्पतिः ॥ १९ ॥

एवं कृतोपनयनो भगवान्भूतभावनः ।
संस्तूयमानो मुनिभिः साङ्गं वेदमधीयत ॥ २० ॥

भारद्वाजादाङ्गिरसात्सामवेदं महामतिः ।
महदाख्यानसंयुक्तं गान्धर्वसहितं मुने ॥ २१ ॥

मासेनैकेन भगवाञ्ज्ञातश्रुतिमहानिधिः ।
लोकाचारप्रवृत्त्यर्थमभूच्छ्रुतविशारदः ॥ २२ ॥

सर्वशास्त्रेषु नैपुण्यं गत्वा देवोऽक्षयोऽव्ययः ।
प्रोवाच ब्राह्मणश्रेष्ठं भारद्वाजमिदं वचः ॥ २३ ॥

---

13 a T वर्धिष्णो for वर्धस्व; b A °त्रैलोक्यस्थासुराजितः c A कुरुष्व दैवतपते d A अश्रुविमार्जनं for अश्रुप्रमा°. 14 cd om in AB. 15 b T सर्वगो हरिः. 16 c T तथैवास्य for तथैवास्य. 17 d T पुलस्त्य for स्वयं च. 18 a T कुम्भयोनिः for कुत्समुनि°, cd om. in AB. 19 b T कौशचीरं for कौलं वेदं, c T छत्रं ददौ द्रुराजस्तु, d T भृगु for नृग°. 20 a T ऋषिभि. for मुनिभि; d T वेदान्साङ्गानधीतवान्. 21 b T महाम्बर for महामति. 22 b T °महार्णवः for °महानिधि°; d B श्रुति॰ विशारद. T स तु विशारदः

ब्रह्मन्प्रयामि देशाज्ञां कुरुक्षेत्रं महोदयम् ।
तत्र दैत्यपतेः पुण्यो हयमेधः प्रवर्तते ॥ २४ ॥

समाविष्टानि यस्याद्य तेजांसि पृथिवीतले ।
तेनाहं प्रतिजानामि कुरुक्षेत्रं गतो बलिः ॥ २५ ॥

भारद्वाज उवाच ।

स्वयं वा गच्छ वा तिष्ठ नाहमाज्ञां ददामि ते ।
गमिष्यामो वयं विष्णो बलेरध्वरमादृताः ॥ २६ ॥

[ वामन० ८९.२४–५४ ]

अथ भारद्वाजप्रश्नानुसारेण भगवता स्वकीयालयान्युक्तानि ।
ततश्च—

इत्येवमुक्त्वा वचनं महर्षे
विष्णुर्भरद्वाजमृषिं महात्मा ।
विलासलीलागमनो गिरीन्द्रा-
त्स चाभ्यगच्छत्कुरुजाङ्गलं हि ॥ २७ ॥

[ वामन० ९०.४८ ]

ततः समागच्छति वासुदेवे
मही चकम्पे गिरयश्च चेलुः ।
क्षुब्धाः समुद्रा दिवि चर्क्षमण्डलं
वातैर्विपर्यस्तगतिर्महर्षे ॥ २८ ॥

यज्ञः समागत्य समाकुलोऽभू-
न्न वेद्मि किं मे मधुहा करिष्यति ।
यथा प्रदग्धोऽस्मि महेश्वरेण
किं मां न वा धक्ष्यति वासुदेवः ॥ २९ ॥

[ वामन० ९१.१–२ ]

अथवा घोररूपं तमुत्पातं दानवेश्वरः ।
पप्रच्छौशनसं शुक्रं प्रणिपत्य कृताञ्जलिः ॥ ३० ॥

---

24 *a* T व्रजामि for प्रयामि AB वेदाज्ञा for देशाज्ञा, *b* B कुरुक्षेत्रान्महोदय 26 *a* T स्वेच्छया तिष्ठ गच्छामो, *d* A आहृता , T आश्रित for आदृता 27 *d* A समावगच्छत् for स चाभ्य° 28 c A कृच्छ्रा for क्षुब्धा , T सर्वलोको for चर्क्षमण्डल, *d* T वयौ विपर्यस्त° for वातैर्विपर्यस्त°. 29 *a* T यज्ञ समागात्परमाकुल न 30 *a* T त दृष्ट्वा for अथवा *b* T तु निमित्त for तमुत्पात.

किमर्थमाचार्य मही सशैला
रम्भेव वाताभिहता चचाल ।
किं वासुराः स्वान्सुहुतानपीह
भागान्न गृह्णन्ति हुताशने मे ।
क्षुब्धाः किमर्थं मकरालयाश्च
महा न मे किं प्रचरन्ति पूर्ववत् ॥ ३१ ॥

[ वामन० ६१·४–६ ]

शुक्र उवाच ।

शृणुष्व दैत्येश्वर येन नामी
[ भागान्प्रयच्छन्ति महासुरेभ्यः ।
हुताशना मन्त्रहुतास्त्वमीभि- ]
नूनं समागच्छति वासुदेवः ॥ ३२ ॥

तदङ्घ्रिविक्षेपमपारयन्ती
मही सशैला चलिता क्षितीश ।
तस्यां चलन्त्यां मकरालयाश्च
उद्वृत्तवेला दितिजाश्च जाताः ॥ ३३ ॥

[ पुलस्त्य उवाच । ]

शुक्रस्य वचनं श्रुत्वा बलिर्भार्गवमब्रवीत् ।
धर्म्यं सत्यं च पथ्यं च महोत्साहसमीरितम् ॥ ३४ ॥

बलिरुवाच ।

आयाते वासुदेवे वद मम भगवन्धर्मकामार्थतत्त्वं
किं कार्यं किं च देयं मणिकनकमथो भूगजाश्वादिकं वा ।
किं वा वाच्यं मुरारेर्निजहितमथवा तद्धितं वा प्रभुज्ञे
पथ्यं तथ्यं प्रियं भो मम वद शुभदं तत्करिष्ये न चान्यत् ॥ ३५ ॥

[ पुलस्त्य उवाच । ]

तद्वाक्यं भार्गवः श्रुत्वा दैत्यनाथेरितं वरम् ।
विचिन्त्य नारदः प्राह भूतं भावि बलेः पुरः ॥ ३६ ॥

---

31 c T निमाहुरीयाश्च हुतानपीह. d T हुताशनाश्च for हुताशने मे. e T मकरालया विशो for °लयाश्च. f T कक्षाणि मे नेव चरन्ति पूर्ववत्. 32 b c om. in A 33 b T दिशश्च for क्षितीश 34 AB om पुलस्त्य उवाच d T सत्योत्साहसमन्वितं. 35 a T धर्मकामार्थयुक्त for °कामार्थतत्त्वं. b T राज्यमुर्वी धनं वा for भूगजाश्वादिकं वा. 36 b T महत् for वर, c AB भार्गव for नारद d T भूतमव्या प्रमीश्वर .

[ शुक्र उवाच । ]

त्वया कृता यज्ञभुजोऽसुरेन्द्रा
बहिष्कृते च श्रुतिदृष्टमार्गे ।
श्रुतिप्रमाणा मखभोजिनो वहिः
सुरास्तदर्थं [ हरिरभ्युपैति ] ॥ ३७ ॥

[ वामन० ९१ ७–११ ]

[ तस्याध्वरे दैत्य समागतस्य
कार्यं हि किं मां परिपृच्छसे यत् ।
वाच्य त्वया देव निरर्थ]क भो॰
कस्त्वां वरं दातुमलं प्रशक्नुयात् ।
यस्योदरे भूर्भुवनादिलोका
रसातला वा निवसन्ति नित्यश ॥ ३८ ॥

बलिरुवाच ।

मया तवोक्तं वचन हि भार्गव
न चास्ति मह्य न च दातुमुत्सहे ।
समागतेऽप्यर्थिनि हीनवृत्ते
[ तद्वद्धि देवे कथमागते हि । ]
जनार्दने लोकपतौ [ महर्षे
समागते नास्ति ] कथ नु [ वच्मि ] ॥ ३९ ॥

एव च श्रूयते लोके सता कथयता विभो ।
सद्भावो ब्राह्मणेष्वेव कर्तव्यो भूतिमिच्छता ।
दृश्यते हि तथा तच्च सत्य ब्राह्मणसत्तम ॥ ४० ॥

पूर्वाभ्यासेन कर्माणि सभवन्ति नृणां स्फुटम् ।
वाक्कायमानसानीह योन्यन्तरगतान्यपि ॥ ४१ ॥

[ वामन० ९१ १५–१९ ]

---

37 *d* 38 *c* Portion in [ ] om in A 38 c T वाच्य तथा साम for वाच्य त्वया देव *cd* T भूर्भुवनारपातरसातलैशा निवसति नित्यश 39 Portion in [ ] om. in A *b* T न चार्थिने किमन दातुमुत्सहे 40 *f* T ब्राह्मणपुगव for ब्राह्मणसत्तम

अथान्योऽपि बलिशुक्रसंवादः । ततश्च—

इत्येवमुक्तो बलवान्स शुक्रं
दैत्येश्वरः स्वं गुरुमीशितारम् ।
ध्यायंस्तदा तं मधुकैटभारिं
नारायणं चक्रगदासिपाणिम् ॥ ४२ ॥

[ वामन० ११.११५ ]

[ पुलस्त्य उवाच । ]

एतस्मिन्नन्तरे प्राप्तो भगवान्वामनाकृतिः ।
यज्ञवाटमुपाश्रित्य उच्चैर्वचनमब्रवीत् ॥ ४३ ॥

ओंकारपूर्वाः श्रुतयो मखेऽस्मिं-
स्तिष्ठन्ति रूपेण तपोधनानाम् ।
यज्ञोऽश्वमेधः प्रवरः क्रतूनां
मुख्यस्तथा यष्टृषु दैत्यनाथः ॥ ४४ ॥

इत्थं वचनमाकर्ण्य दानवाधिपतिर्वशी ।
समभ्यगात्स्वयं तत्र यत्र देवः स्थितोऽभवत् ॥ ४५ ॥

ततोऽर्घ्यं देवदेवेशमर्घ्यमर्घादिनासुरः ।
भारद्वाजर्षिणा सार्धं यज्ञवाटं न्यवेशयत् ॥ ४६ ॥

प्रविष्टमात्रं तं देवं प्रतिपूज्य विधानतः ।
प्रोवाच भगवन्ब्रूहि दयितं किं तवानघ ॥ ४७ ॥

ततोऽब्रवीत्सुरश्रेष्ठो दैत्यराजानमव्ययः ।
विहस्य सुचिरं कालं भारद्वाजमवेक्ष्य च ॥ ४८ ॥

गुरोर्मदीयस्यैतस्य अस्त्येवाग्निपरिग्रहः ।
न स धारयते भूम्यां पारक्यां जातवेदसम् ॥ ४९ ॥

तदर्थमभियाच्येयं मम दानवनन्दन ।
मच्छरीरप्रमाणेन देहि राजन्पदत्रयम् ॥ ५० ॥

---

43 *c* T यज्ञवाटसमीपे स   44 *d* T युक्त यथाम्यात्कुरु दैत्यनाथ   45 *c* T सार्घ्यपात्र समभ्यागाद्   46 *a* T तत स for ततोऽर्घ्यं *b* T पूजयित्वा विधानत, *cd* not found in T   47 *ab* not found in T   48 T *a* मधुरिपु for सुरश्रेष्ठो, *b* T दैत्यराज तमव्यय   49 *ab* T गुरोर्मदीयस्य गुरुस्तस्यास्त्यग्निपरिग्रह *d* T पारक्यायां च पावकम्   50 *b* T दानवपार्थिव for दानवनन्दन, *d* T क्रमत्रयं for पदत्रय

मुरारेर्वचनं श्रुत्वा बलिर्भार्यामवेक्ष्य च ।
धार्णं च तनयं वीक्ष्य इदं वचनमब्रवीत् ॥ ५१ ॥

न केवलं प्रमाणेन वामनोऽयं लघुः प्रिये ।
येन क्रमत्रयं भूमिं याचते बुद्धितोऽपि च ॥ ५२ ॥

प्रायो विधाताल्पधियां नराणां
बहिष्कृतानां च महानुभावैः ।
धनादिकं भूरि न वै ददाति
यस्येह विष्णोर्न बहुप्रयासः ॥ ५३ ॥

न ददाति विधिस्तस्य यस्य भाग्यविपर्ययः ।
मयि दातरि यश्चायं याचते हि पदत्रयम् ॥ ५४ ॥

इत्येवमुक्त्वा वचनं महात्मा
भूयोऽप्युवाचारिविदारणोऽयम् ।
याचस्व विष्णो गजवाजिभूमि-
दारान्हिरण्यं यदभीप्सितं ते ॥ ५५ ॥

भवान्याचयिता विष्णो अहं दाता जगत्पतिः ।
दातुर्याचयितुर्लज्जा कथं न स्यात्पदत्रये ॥ ५६ ॥

रसातलं च पृथिवीं विष्णो नाकमथापि च ।
एतेभ्यः कतमं दिव्यं स्थानं याचस्व वामन ॥ ५७ ॥

श्रीवामन उवाच ।

गजाश्वं भूहिरण्यादि तदर्थिभ्यः प्रदीयताम् ।
यस्याहमर्थी दैत्येन्द्र देहि राजन्पदत्रयम् ॥ ५८ ॥

इत्येवमुक्ते वचने वामनेन महासुरः ।
बलिर्भृङ्गारमादाय ददौ विष्णौ क्रमत्रयम् ॥ ५९ ॥

---

52 *b* T लघुप्रिय , *cd* T येन क्रमत्रयं चोक्तं याचते मद्विधेऽपि च. 53 *b* T खलु दिव्यपुण्यै for च महानुभावै ; *d* T तथैव विष्णु for यस्येह विष्णोः. 54 *d* T क्रमत्रयं for पदत्रयं 55 *b* T भूयोऽप्युवाचाथ हरिं सुरारिः, c A त्वया च for याचस्व; *d* T दासी° for दारान् ; T यदपीप्सित for यदभीप्सितं. 56 *a* T भवांश्च याचिता for भवान्याचयिता, c T दातुर्वै मम लज्जेयं 57 *a* T स्वां for च, *b* T भुवं for विष्णोः c T द्या for दिव्यं, *d* T स्वस्थो for स्थान. 58 c T एतावदेव संप्रार्थी. 59 *b* T महात्मना for महासुर .

पाणौ तु पतिते तोये दिव्यं रूपं चकार ह ।
त्रैलोक्यक्रमणार्थाय बहुरूपं जगन्मयः ॥ ६० ॥

पद्भ्यां भूमिस्तथा जङ्घे नभस्त्रैलोक्यवन्दिते ।
सत्यं तपो जानुयुग्मे ऊरुभ्यां मेरुमन्दरौ ॥ ६१ ॥

विश्वेदेवाः कटीभागे मरुतो वस्तिशीर्षगाः ।
लिङ्गे स्थितो मन्मथश्च वृषणाभ्यां प्रजापतिः ॥ ६२ ॥

कुक्षिभ्यामर्णवाः सप्त जठरे भुवनानि च ।
वलिसंधिषु नद्यश्च यज्ञास्तु जठरे स्थिताः ।
इष्टापूर्तादयः सर्वाः क्रियास्तत्र सुसंस्थिताः ॥ ६३ ॥

[ वामा० १२ १–२१ ]

मुखे तु साग्नयो विप्राः संस्कारा दशनच्छदाः ।
धर्मकामार्थमोक्षाद्याः शास्त्रशौचसमन्विताः ॥ ६४ ॥

लक्ष्म्या सह ललाटस्थौ श्रवणाभ्यामथाश्विनौ ।
श्वासस्थो मातरिश्वा च मरुतः सर्वसंधिषु ॥ ६५ ॥

सर्वसूक्तानि दशना जिह्वा देवी सरस्वती ।
चन्द्रादित्यौ च नयने पक्ष्मस्थाः कृत्तिकादयः ॥ ६६ ॥

[ शिखायां देवदेवस्य भ्रुवोर्मध्ये व्यवस्थिताः । ]
तारका रोमकूपाणि रोमाणि च महर्षयः ॥ ६७ ॥

गुणैः सर्वमयो भूत्वा भगवान्भूतभावनः ।
क्रमेणैकेन धरणीं चक्राम सचराचराम् ॥ ६८ ॥

ऊर्ध्वं विक्रममाणस्य महारूपस्य तस्य वै ।
दक्षिणोऽभूत्स्तनश्चन्द्रः सूर्योऽभूदथ चोत्तरः ।
नभश्चङ्क्रमतो नाभी सूर्येन्दू सव्यदक्षिणौ ॥ ६९ ॥

तृतीयेन क्रमेणाथ स्वर्महर्जनतापसाः ।
क्रान्ताऽर्धार्धेन वै राजन्नर्धेनापूर्यताम्बरम् ॥ ७० ॥

---

60 *d* T वज्ररूप जगन्मय   62 *d* T वृषणस्थ for वृषणाभ्या   63 *a* T कुक्षिस्था अर्णवा सप्त *c* T वलिषु त्रिषु for वलिसंधिषु *d* T यज्ञोऽन्तर्जठरे स्थित. *f* T क्रिया मन्त्राश्च संस्थिता   64 *d* T शास्त्रैश्चैव for शास्त्रशौच°   67 *ab* om in AB   68 *c* T जगतीं for धरणीं, *d* T जहार for चक्राम   69 *ef* not found in T

ततः प्रवर्धितो ब्रह्मन्विष्णुर्वै दक्षिणान्तरे ।
ब्रह्माण्डोदरमाहत्य निरालोकं जगाम ह ।
विश्वाङ्घ्रिणा प्रसरता कटाहो भेदितो बलात् ॥ ७१ ॥

[ वामन० ९२·२४–३२ ]

भगवानप्यसंपूर्णे तृतीये तु क्रमे विभुः ।
समभ्येत्य बलिं प्राह ईषत्प्रस्फुरिताधरः ॥ ७२ ॥

ऋणाद्भवति दैत्येन्द्र बन्धनं घोरदर्शनम् ।
त्वं पूरयस्व कामान्मे नो चेद्बन्धं प्रतीच्छ मे ॥ ७३ ॥

तन्मुरारिवचः श्रुत्वा विहस्याथ बलेः सुतः ।
बाणः प्राहामरपतिं वचनं हेतुसंयुतम् ॥ ७४ ॥

बाण उवाच ।

हत्वा महीमल्पतरां जगत्पते
स्वयं भुवादिं भुवनानि वै पद् ।
कथं बलिं प्रार्थयसे सुविस्तृतां
यां प्राग्भवान्नो विपुलामकार्षीत् ॥ ७५ ॥

विभो मही यावतीयं त्वया हि
सृष्टा समेता भुवनान्तपालैः ।
दत्ता च तातेन हि तावतीयं
किं वा छलेनैव निबध्यतेऽद्य ॥ ७६ ॥

या नैव शक्या भवतापि पूरितुं
कथं वितन्याद्दितिजेश्वरोऽसौ ।
शक्तस्तु संपूजयितुं मुरारे
प्रसीद मा बन्धनमादिशस्व ॥ ७७ ॥

प्रोक्तं श्रुतं भवतापीश वाक्यं
दानं पात्रे भवते सौख्यदायि ।
देशे पुण्ये वरदे यच्च काले
तच्चाशेषं दृश्यते चक्रपाणौ ॥ ७८ ॥

---

71 *b* A ब्रह्माण्डपवक्षिणान्तरे    73 *c* T त्वं पूरय पदं तन्मे    75 *a* T कृत्वा for हत्वा, *b* T स्वयं विधाता भुवनेश्वराणां, *d* T विपुलां चकार for विपुलामकार्षीत्
78 *b* T जायते for भवते *c* T तद्वदेवापि for वरदे यच्च

दानं भूमिः सर्वकामप्रदाता
भवान्पात्रं देवदेवो जितात्मा।
कालो ज्येष्ठामूलयोगे मृगाङ्के
कुरुक्षेत्रं पुण्यदेशः प्रसिद्धः ॥ ७९ ॥

किं वा देवः परमो नैव देव
किं वा देवोऽस्मद्विधैर्बुद्धिहीनैः।
[ स्वयं श्रुतीनामपि चादिकर्ता
व्यवस्थितः सदसच्चो जगद्वै ] ॥ ८० ॥

कृत्वा प्रमाणं स्वयमेव हीनं
पदत्रयं याचितवान्भुवश्च।
किं त्वं न गृह्णासि जगत्रयं भो
रूपेण लोकत्रयवन्दितेन ॥ ८१ ॥

नात्राश्चर्यं यज्जगत्यां समग्रं
पदत्रयं नैव पूर्णं तवाद्य।
क्रमेण त्वं लङ्घयितुं समर्थो
लीलामेतां कृतवांल्लोकनाथ ॥ ८२ ॥

[वामन० १२ ३३-४३]

इत्येवमुक्ते वचने बाणेन बलिसूनुना।
प्रोवाच भगवान्वाक्यमादिकर्ता जनार्दनः ॥ ८३ ॥

त्रिविक्रम उवाच।

यान्युक्तानि वचांस्यत्र त्वया बालेन सांप्रतम्।
तेषां वै हेतुसंयुक्तं शृणु प्रत्युत्तरं मम ॥ ८४ ॥

पूर्वमुक्तस्तव पिता मया राजन्पदत्रयम्।
देहि मह्यं प्रमाणेन तदेतत्समुपस्थितम् ॥ ८५ ॥

किं न वेत्ति प्रमाणं मे बलिस्तव पितासुरः।
प्रायच्छयेन निःशङ्कममानं तत्क्रमत्रयम् ॥ ८६ ॥

[ सत्यं क्रमेण चैकेन क्रमेयं भूर्भुवादिकम् ]।
बलेरपि हितार्थाय कृतमेतत्पदत्रयम् ॥ ८७ ॥

---

80 *ab* T किं वा देवैर्मद्विधैर्बुद्धिहीनै शिक्षा नेय' साधु वासाधु चैव' *cd* om in AB
82 *a* T जगद्वै for जगत्या *b* T क्रमत्रयेणैव पूर्णं तवाद्य. *d* T मही मममा ननु लोकनाथ.
86 *d* T पदत्रय for क्रमत्रय *87 ab* om in AB

तस्माद्यम्मम बालेय त्वत्पित्राम्बु करे महत्।
दत्तं दैत्यपुरे राज्यं कल्पं यावद्भविष्यति ॥ ८८ ॥

[ वामन० ९२.४५–५० ]

गते मन्वन्तरे बाण श्राद्धदेवस्य सांप्रतम्।
सावर्णिके च संप्राप्ते बलिरिन्द्रो भविष्यति ॥ ८९ ॥

इत्थं प्रोक्त्वा बलिसुत बाणं देवस्त्रिविक्रमः।
प्रोवाच बलिमभ्येत्य वचनं मधुराक्षरम् ॥ ९० ॥

[ वामन० ९२.५१ ]

श्रीभगवानुवाच।

आपूरणाद्दक्षिणाया गच्छ राजन्महाफलम्।
सुतलं नाम पातालं वस तत्र निरामयः ॥ ९१ ॥

बलिरुवाच।

सुतले वसतो नाथ मम भोगाः कुतोऽव्ययाः।
भविष्यन्ति तु येनाहं निवसामि निरामयः ॥ ९२ ॥

श्रीत्रिविक्रम उवाच।

सुतलस्थस्य दैत्येन्द्र यानि भोग्यानि तेऽधुना।
भविष्यन्ति महार्हाणि तानि वक्ष्यामि सर्वशः ॥ ९३ ॥

दानान्यविधिदत्तानि श्राद्धान्यश्रोत्रियाणि च।
तथाधीतान्यव्रतिभिर्दास्यन्ति भवतः फलम् ॥ ९४ ॥

[ वामन० ९२.५२–५५ ]

इत्येवमुक्त्वा मधुहा दितीश्वरं
विसृज्य तं दैत्यपतिं महर्षे।
सपश्यतामेव सुराधिपाना
मन्तर्हितः स्वर्गमुपाजगाम ॥ ९५ ॥

[ वामन० ९२.५६ ]

---

88 ■ T दत्त तेनायुरेतस्य  89 Not found in T  90 *a* T इदमुक्त्वा for इत्थं प्रोक्त्वा  92 *d* T वसिष्यामि for निवसामि  95 *b* T विसर्जयित्वा समुतं सभार्यं *cd* T उर्वीं समादाय जगाम तूर्णं स शक्रनामामरमघजुष्

एवं पुरा चक्रधरेण विष्णुना
बद्धो बलिर्वामनरूपधारिणा ।
शक्रप्रियार्थं सुरकार्यसिद्ध्ये
हिताय विप्रर्षभगोद्विजानाम् ॥ ९६ ॥

प्रादुर्भवस्ते कथितो [ महर्षे
पुण्यः शुचिर्वामनस्याघहारी ।
श्रुते यस्मिन्कीर्तिते संस्मृते च
पापं याति प्रक्ष]यं पुण्यमेति ॥ ९७ ॥

[ वामन० १२.६४–६५ ]

नरसिंहपुराणे–

इत्युक्तो देवदेवेन प्रसन्नेन नृपो बलिः ।
तं प्रणम्य ततो गत्वा सुतलं भोगमाप्तवान् ॥ ९८ ॥
शक्रोऽपि स्वर्गमागत्य प्रसादाद्वामनस्य वै ।
शशास सकलं राज्यं सर्वदेवसमन्वितम् ॥ ९९ ॥
शुक्रोऽपि विष्णुमाराध्य भक्त्या स्तोत्रेण चानघ ।
लब्धवान्गतमप्येकं नेत्रं कृष्णप्रसादतः ॥ १०० ॥
यः स्मरेत्प्रातरुत्थाय वामनस्य कथामिमाम् ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ १०१ ॥ इति ॥

[ नृसिंह० ? ]

* * * *

दैतेयेन बलोत्कटेन बलिना देवाः ससुरत्सारिताः
स्वर्लोकाद् भुवनत्रयस्य निखिलं साम्राज्यमङ्गीकृतम् ।
देवेभ्यः करुणावता भगवता दैतेयदैन्यक्षमा
मूर्तिः कापि जगत्क्रमाय विहिता गर्भेऽदितेर्वामनी ॥ १०२ ॥
आविर्भूय विधाय विप्रविहितं नानामुनिभ्यो विभुः
भारद्वाजमुनीश्वरेण सहितः प्राप्तो बलेराश्रमम् ।
याचित्वा च बलेः पदत्रयपदं क्रान्त्वा जगन्मण्डलं
यः पातालतले बबन्ध च बलिं पायात्स वो वामनः ॥ १०३ ॥

---

97 Portion in [ ] om. In A 98 Quotation from नरसिंहपुराण could not be traced.

देवानामुपकारिणाथ हरिणा दैत्यद्रुहा स्वेच्छयै-
वायातं बलिबन्धनाय बलिना निर्णीतमेतत्पुरः।
यद्दत्तश्चरणत्रयक्षितिमियादात्मैव तेऽनादरा-
दर्थिभ्यः किल यज्ञकर्मणि सतां धर्मोऽयमाजानिकः ॥ १०४॥

श्रीदाम्ने येन मुष्टित्रयमितपृथुकग्रासितुष्टेन दत्तं
त्रैलोक्यस्याधिपत्यं तदनु कमलया दातुकामो निरुद्धः।
तेन श्रीविष्णुपादागमजनितमुदा स्वात्मनोऽपि प्रदाता
पाताले यन्निरुद्धो बलिरिति भगवन्कोऽयमीदृग्विचारः॥ १०५॥

तुष्टेनापि कृपावतापि करुणापाथोधिना विष्णुना
यद्दत्तं चरणारविन्दमतुलं मौलौ बलेरादरात्।
अन्यत्तुच्छमतश्चिरंतनतपोगम्ये महायोगिनि
विश्वास्मिन्नविनश्वरे बलिरसौ पादाम्बुजे स्थापितः॥ १०६॥

इति वामनावतारः॥

[ श्रीटोडरानन्दे अवतारसौख्ये वामनावतारो नाम पञ्चमो हर्षः॥ ]

२.६

अथ परशुरामावतारः॥

राजन्यरुधिरवारिधिमध्यकलालोलकीर्तिकलहंसे।
जमदग्निकुमुदचन्द्रे महसि मुनीन्द्रे मनो विशतु॥ १॥

तत्र स्कन्दपुराणे रेणुकाखण्डे स्कन्दं प्रति ऋषयः।
का चैकवीरा सा देवी जमदग्निश्च को विभो।
यस्य गर्भे समुत्पन्नः स रामः क्षत्रियान्तकः॥ २॥

जमदग्निः क संभूतः को धेनुं तस्य चाहरत्।
कार्तवीर्यः स रामेण कथयस्व कथं हतः॥ ३॥

स्कन्द उवाच।
देवानां दानवानां च संग्रामोऽभूत्सुदारुणः।
ते देवानजयन्दैत्या मायया बलिनः पुरा॥ ४॥

---

106 c B महायोगिनां for महायोगिनि

2 The quotations from स्कन्दपुराण could not be traced to T.

ततः शक्रादयो देवा निर्जितास्ते महासुरैः।
निराकृतास्ते त्रिदशा गोविन्दं शरणं ययुः ॥ ५ ॥

क्षीरार्णवमथागत्य शेषशय्यास्थितं हरिम्।
तुष्टुवुस्तं प्रणम्यादौ कृतप्राञ्जलयः सुराः ॥ ६ ॥

देवा ऊचुः।

स्वामिन्मत्स्यादिरूपैः स्वैर्हरे विश्वं त्वयोद्धृतम्।
राक्षसेभ्योऽसुरेभ्यश्च सर्वांस्त्रातुमर्हसि ॥ ७ ॥

त्वं नरत्राता जगत्कर्ता दैत्यशमकरः प्रभो।
लवणान्तकरः श्रीमान्देवदेव नमोऽस्तु ते ॥ ८ ॥

त्वमेकः पुरुषो नित्यः शर्मदः परमेश्वरः।
एकस्त्वनन्तरूपोऽसि विश्वरूप नमोऽस्तु ते ॥ ९ ॥

इत्येवं संस्तुतो देवैर्भगवान्गरुडध्वजः।
प्रहस्य विकसद्वक्त्रसरोजः प्राह तानिदम् ॥ १० ॥

श्रीभगवानुवाच।

कस्माद्भयमनुप्राप्ताः सर्वे दुःखं सुरोत्तमाः।
ख्यायतामधुनैवाहं नाशयिष्यामि तद् द्रुतम् ॥ ११ ॥

देवा ऊचुः।

निर्जिताः स्मो वयं दैत्यैरभिभूय त्रिविष्टपात्।
निराकृताः शरण्यं त्वं हन्तुमर्हसि तान्प्रभो ॥ १२ ॥

श्रीभगवानुवाच।

अदितेः संभविष्यामि यदंशेन सुरोत्तमाः।
तदाहं द्विजरूपेण घातयिष्यामि दानवान् ॥ १३ ॥

त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियामहम्।
ब्राह्मणेभ्यः प्रदास्यामि दक्षिणार्थं मखे शुभे ॥ १४ ॥

एकवीरेति विख्याता सर्वकामप्रदायिनी।
अदितिर्या महाभागा संभविष्यति भूतले ॥ १५ ॥

तथापि तां प्रार्थयत गच्छध्वमधुना सुराः।
ततस्तस्यां भविष्यामि यदि सा प्रभविष्यति ॥ १६ ॥

स्कन्द उवाच।

इत्युक्तास्ते ततो देवाः सर्वे संहृष्टमानसाः।
तं प्रणम्य जगन्नाथमदितेः स्थानमागमन् ॥ १७ ॥

ते प्रणामं ततस्तस्यै कृत्वा देव्यै मुदा युताः ।
स्तुत्वाभ्यर्च्य जगद्धात्रा तामूचुः प्रणताः स्थिराः ॥ १८ ॥

देवानामसि मातस्त्वं सर्वकामप्रदायिनी ।
निर्जिताः स्मो वयं दैत्यैः सर्वांस्त्रातुमर्हसि ॥ १९ ॥

विष्णुस्त्वदुदरे देवि संभविष्यति नान्यथा ।
विष्णुं त्वदुदरे देवि धृत्वा त्राहि जगत्त्रयम् ।
हतेषु दुष्टदैत्येषु त्वमेका वै भविष्यसि ॥ २० ॥

अदितिरुवाच ।

न शक्तास्मि हृषीकेशं तं धर्तुं तपसा विना ।
विना बलेन वीर्येण स्वगर्भे गरुडध्वजम् ॥ २१ ॥

अतर्क्यस्त्वप्रमेयश्च पद्मनाभः सुरारिहा ।
यस्योदरे कृत्स्नमिदं ह्यस्तीदमखिलात्मनः ॥ २२ ॥

विश्वाधारः परोऽनन्तः अकल्पः परमेश्वरः ।
त्रैलोक्यधर्ता भगवान्स हरिः केन धार्यते ॥ २३ ॥

देवा ऊचुः ।

गच्छ देवि तपः कर्तुं सुरगन्धर्वकिंनराः ।
[ दास्यन्ति तव तेजांसि महात्मानो महर्षयः ॥

स्कन्द उवाच ।

इत्युक्त्वा सुरगन्धर्वाः सिद्धविद्याधरोरगाः । ]
रुद्राश्च ऋषयः सर्वे तेजांसि प्रददुस्तदा ॥ २४ ॥

सुरतेजोमयी देवी सादितिर्मुनिसत्तमाः ।
कैलासाद्रिं तपः कर्तुं जगाम त्रिदशैर्वृता ॥ २५ ॥

स्कन्द उवाच ।

ततो ब्रह्मादिभिर्देवैर्ऋषिभिः सिद्धचारणैः ।
पत्कर्यीरति तस्यास्तैर्नाम सर्वैः प्रतिष्ठितम् ॥ २६ ॥

यस्याः संदर्शनादेव सर्वमन्त्रफलं भवेत् ।
सर्वयज्ञफलं चैव सर्वतीर्थाभिषेचनम् ॥ २७ ॥

ततः कैलासमागम्य सुरमाता शुभानना ।
अदितिस्तपसा देवं हरमाराधयत्तदा ॥ २८ ॥

---

24 *ab* Portion in [ ] om. in A.

अनेककुसुमैर्दिव्यैश्चन्दनैश्च सुगन्धिभिः ।
फलैश्च विविधाकारैस्तोषयामास शंकरम् ।
कराञ्जलिपुटं कृत्वा तुष्टाव वृषभध्वजम् ॥ २९ ॥

अदितिरुवाच ।

प्रसीद देवदेवेश त्रिपुरान्तकर प्रभो ।
नमस्ते चलरूपाय विश्वरूपाय मीढुषे ॥ ३० ॥

नमः शिवाय शान्ताय गुह्याय परमात्मने ।
विश्वेश्वराय सिद्धाय भूताधिपतये नमः ॥ ३१ ॥

इति स्तुत्वा शिवं देवीं पार्वतीं लोकमातरम् ।
तुष्टाव परया भक्त्या सादितिः सुरसंवृता ॥ ३२ ॥

देवि पार्वति ते रूपमचिन्त्यं देवमानवैः ।
प्रसादं कुरु मे भक्त्या प्रसीद परमेश्वरि ॥ ३३ ॥

स्कन्द उवाच ।

पार्वत्या सहितस्त्वेवं संस्तुतो वृषभध्वजः ।
तामुवाच ततो देवीमदितिं मुनिसत्तमाः ॥ ३४ ॥

ईश्वर उवाच ।

किं प्रार्थयसि देवि त्वं मत्तो वै सुरवन्दिनि ।
वरं दास्यामि ते प्रीत्या ब्रूहि यत्तेऽभिवाञ्छितम् ॥ ३५ ॥

अदितिरुवाच ।

अयोनिसंभवं देहं देहि मे भक्तवत्सल ।
त्वं कश्यपान्वितो भर्ता तुष्टो भवितुमर्हसि ॥ ३६ ॥

सुराणां रक्षणार्थाय धर्मसंरक्षणाय च ।
उत्पत्स्यामि सुरश्रेष्ठ पुत्रप्राणरीप्सया ॥ ३७ ॥

संभविष्यति मे गर्भे हरिस्त्रिभुवनेश्वरः ।
तुष्टिं दास्यति देवेशः कृत्वा निःक्षत्रियां महीम् ॥ ३८ ॥

स्कन्द उवाच ।

तयैवं प्रार्थितो देवः शंकरः प्राह पार्वतीम् ।
तस्यास्तु वरदानाय वचनं शशिशेखरः ॥ ३९ ॥

---

35 *b* A सुखनन्दिनि for सुरवन्दिनि

ईश्वर उवाच ।

देवि त्वमात्मनो रूपमदित्यै सर्वकामिकम् ।
देहि देवि प्रसन्ना त्वं मनसा वरवर्णिनि ॥ ४० ॥

स्कन्द उवाच ।

इत्युक्ता तु मुदा युक्ता हरेण गिरिजा शुभा ।
तस्यै तुष्टा वरं प्रादाद्दत्वा तेजस्तदात्मनः ॥ ४१ ॥

पार्वत्युवाच ।

सर्वलक्षणसंपन्ना सर्वकामधुगुत्तमा ।
ईश्वरस्य प्रिया भार्या मद्रूपा त्वं भविष्यसि ॥ ४२ ॥
दर्शनेन च लोकानां भुक्तिं मुक्तिं प्रदास्यसि ।
सत्यं मद्वचनाद्देवि संभविष्यसि भूतले ॥ ४३ ॥
गच्छ त्वं भवनं देवि पुत्रार्थं चाथ चामले ।
संभविष्यन्ति ते पुत्रा देवा अग्निपुरोगमाः ॥ ४४ ॥

स्कन्द उवाच ।

ततः प्रसन्नवदनः शंकरो मुनिसत्तमाः ।
अदित्यैवं वरं प्रोक्तं यथाभिलषितं तदा ॥ ४५ ॥

ईश्वर उवाच ।

भविष्यामि न संदेहो भर्ताहं सुरवन्दिनि ।
देहमन्यद्गतायास्ते देहमन्यद्गतो ह्यहम् ॥ ४६ ॥
सर्वलक्षणसंपन्नान् सर्वशास्त्रविशारदान् ।
पुत्रानुत्पादयिष्यामि वस्वादीनमितप्रभान् ॥ ४७ ॥
एकवीरेति नाम्ना त्वं मत्प्रसादाद्भविष्यसि ।
जनयिष्यसि न संदेहः पञ्च पुत्रान्मनोरमान् ॥ ४८ ॥
प्रयत्नं च समुत्पत्तिं कुरुष्व कमलानने ।
भर्तारं यदि मां कर्तुमिच्छसि त्वं सुरप्रभम् ॥ ४९ ॥

स्कन्द उवाच ।

इत्युक्ता शंकरेणाथ सा तु लब्धवरा शुभा ।
तं प्रणम्यादितिर्हृष्टा तत्रैवान्तर्हिता बभौ ॥ ५० ॥

ऋषय ऊचुः ।

सुरमातादितिः स्कन्द यथोत्पन्ना वरानना ।
एकवीरेति नाम्ना सा एतद्याख्यातुमर्हसि ॥ ५१ ॥

तस्याः प्रभावमाचक्ष्व कथं सा मुक्तिदा नृणाम् ।
कर्मबुद्धि (बन्धं ?) समुच्छिद्य कौतुकं परमं हि नः ॥ ५२ ॥

स्कन्द उवाच ।

यस्याः प्रभावकथने शक्तोऽभून्न चतुर्मुखः ।
महेश्वरस्तथाप्यत्र मुक्तिदं त्वं वदामि वः ॥ ५३ ॥

यस्या गर्भात्समुत्पन्नो ज्ञानरूपः परः पुमान् ।
तस्याः संदर्शनादेव ज्ञानमुत्पद्यते नृणाम् ॥ ५४ ॥

कर्मबन्धसमुच्छेदो दर्शनादेव जायते ।
तस्मात्तद्दर्शनान्मोक्षः कौतुके नात्र कारणम् ॥ ५५ ॥

कन्याकुब्जेति विख्याता पुरी पुण्यजनाकुला ।
रम्ये भागीरथीतीरे सुरसिद्धनिषेविता ॥ ५६ ॥

तस्यामासीन्नृपः कश्चिद्धार्मिकः सत्यसंगरः ।
इक्ष्वाकुरिति विख्यातः सर्वशास्त्रविशारदः ॥ ५७ ॥

तस्य पुत्रो गुणैर्ज्येष्ठः सर्वधर्मभृतां वरः ।
रेणुर्नामाभवद्विप्रा इक्ष्वाकुकुलवर्धनः ॥ ५८ ॥

सर्वलक्षणसंपन्नो देवद्विजहितो भृशम् ।
वीरो ह्यनुग्रहे शक्तः क्षमया पृथिवीसमः ॥ ५९ ॥

बृहस्पतिसमो बुद्ध्या तेजसा च रविप्रभः ।
सर्वशास्त्रार्थकुशलो विष्णुभक्तिपरायणः ॥ ६० ॥

राज्ञा तेनाधिभूतेशः कन्यार्थं तपसा पुरा ।
भार्यया सहितेनैव तपसाराधितः प्रभुः ॥ ६१ ॥

तस्मै तुष्टो वरं प्रादादीशानस्तूमया सह ।
प्रहस्य विकसद्वक्त्रसरोजः प्राह सस्थितः ॥ ६२ ॥

ईश्वर उवाच ।

वरं वरय राजेन्द्र यथाभिलषितं शुभम् ।
प्रार्थितं ते प्रदास्यामि यद्यपि स्यात्सुदुर्लभम् ॥ ६३ ॥

राजोवाच ।

कन्यां मे रूपसंपन्नां सर्वलक्षणलक्षिताम् ।
एकां देहि जगत्स्वामिन्पुत्रीं विश्वहितां प्रभो ॥ ६४ ॥

ईश्वर उवाच ।

भविष्यति न संदेहः कन्या रूपवती तव ।
सर्वकामप्रदा नृणां मत्प्रसादाद्भविष्यति ।
शूरसेन इति ख्यातस्तव पुत्रो भविष्यति ॥ ६५ ॥

कन्यार्थमिष्टिं कुरु गच्छ सादरं
यदीच्छसि त्वं सुरविप्रपूजनम् ।
सुराङ्गनाभिः सह राज्यमुत्तमं
यशः प्रियं प्राप्स्यसि राजसत्तम ॥ ६६ ॥

स्कन्द उवाच ।

ततः प्रणम्य भूतेशं राजा लब्धवरो महान् ।
औदार्यो रेणुको यागं कन्यार्थमकरोत्तदा ॥ ६७ ॥

ततः क्रतुवरः पुण्यो विशिष्टवरदक्षिणः ।
राज्ञा भागीरथीतीरे प्रारब्धः सुरवल्लभः ॥ ६८ ॥

वर्तमाने ततो यज्ञे तस्मिन्गङ्गातटे शुभे ।
आययुः सुरगन्धर्वाः सोमपाः संशितव्रताः ॥ ६९ ॥

नागा यक्षाश्च देवाश्च मुनयः संशितव्रताः ।
अत्रिर्वसिष्ठो भगवान्गालवो जैमिनिस्तथा ॥ ७० ॥

जाबालिर्गौतमः कौत्स कौण्डिण्यो गार्ग्य एव च ।
भारद्वाजः शतानन्दो विद्वान्पाराशरो मुनिः ॥ ७१ ॥

असितो देवलः कण्वो विदर्भोऽथ सहस्रपात् ।
मार्कण्डेयः शमीकश्च सर्वशास्त्रविशारदः ॥ ७२ ॥

एते चान्ये च बहवो ऋषयः संशितव्रताः ।
तथा राजर्षयः सर्वे त यज्ञमगमंस्तदा ॥ ७३ ॥

तद्यज्ञमण्डपस्थानं होमधूमसमाकुलम् ।
ऋग्यजुःसामनिर्घोषैः स्वर्गोपममभूत्सुहृत् ॥ ७४ ॥

एतस्मिन्नन्तरे यज्ञे वह्निकुण्डाग्निरेद्विजाः ।
दिव्यरूपान्विता देवी दिव्याम्बरधरा शुभा ॥ ७५ ॥

---

69 *d* A संशितमता for संशित° 70 *b* B संशितमता for संशित°.

रत्नकुण्डलघृणाङ्गी श्रीरिवायतलोचना ।
रूपेणाप्रतिमा गङ्गागौरीतेजःसमन्विता ।
वह्नेः शीतांशुबिम्बास्या सहसैवादितिर्निरैत् ॥ ७६ ॥

तां दृष्ट्वा चारुसर्वाङ्गीं ऋषयः सुरचारणाः ।
पुष्पवर्षं तदा चक्रुः स्तुवन्तोऽम्बरमूर्धनि ॥ ७७ ॥

सुरदुन्दुभयो नेदुर्मृदङ्गपणवादयः ।
तस्यां देव्यां च जातायां वीणावेणुकलस्वनाः ॥ ७८ ॥

एकवीरादितिश्चैवा गौरी गङ्गेति चाब्रवीत् ।
ऋषिभिर्देवगन्धर्वैर्वन्द्यमाना मुनीश्वरैः ॥ ७९ ॥

ततस्तु वरणं कृत्वा पूजयित्वा सुरद्विजान् ।
राजा सत्कारयामास रेणुकामघनाशिनीम् ॥ ८० ॥

एकवीरेयमुत्पन्ना रेणुकस्य गृहे शुभा ।
सर्वलक्षणसंपन्ना वह्निकुण्डादयोनिजा ॥ ८१ ॥

तस्याः प्रभावं नो वक्तुं शक्तोऽहं षण्मुखोऽपि सन् ।
नान्ये ब्रह्मादयो देवाः स्वयं च शशिशेखरः ॥ ८२ ॥

यस्याः संदर्शनादेव माहात्म्यश्रवणान्मुदा ।
विपाप्मानो नरा नार्यः सर्वान्कामानवाप्नुयुः ॥ ८३ ॥

ततो निवृत्ते यज्ञे तु ऋषयः सुरपन्नगाः ।
प्रणम्य रेणुकां भक्त्या यथास्थानं ययुर्मुदा ॥ ८४ ॥

अथ कथं जमदग्निरुत्पन्न इत्यादिप्रश्ने ब्रह्मणो भृगुर्भृगोश्च्यवनश्च्यवनादृचीकस्तस्य सत्यवती कौशिकस्य गाधेः कन्या भार्येत्युपक्रम्य—

तस्याः प्रीतः स वै भर्ता भार्गवो भृगुनन्दनः ।
पुत्रार्थे साधयामास चरुं गाधेस्तथैव च ॥ ८५ ॥

उवाचाहूय तां भार्यामृचीको भार्गवस्तदा ।
उपभोज्यश्चरुरयं त्वया मात्रा वरानने ॥ ८६ ॥

तस्यां जनिष्यते पुत्रो दीप्तिमान्क्षत्रियर्षभः ।
अजेयः क्षत्रियैर्लोके क्षत्रियाणां च भञ्जनः ॥ ८७ ॥

तवापि पुत्रं कल्याणि धृतिमन्तं तपोधनम् ।
शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति ॥ ८८ ॥

स्कन्द उवाच ।

एवमुक्त्वा तु तां भार्यामृचीको भृगुनन्दनः ।
तपस्यभिरतो नित्यं तस्थौ गोदावरीतटे ॥ ८९ ॥

स्कन्द उवाच ।

तीर्थयात्राप्रसङ्गेन सुतां द्रष्टुं नरेश्वरः ।
गाधिः सदारस्तु तदा ऋचीकाश्रममभ्यगात् ॥ ९० ॥

चरुद्वयं गृहीत्वाथ ऋचीकस्य प्रिया शुभा ।
भर्तुर्वचनमव्यग्रा मात्रे हृष्टा न्यवेदयत् ॥ ९१ ॥

माता तस्यै तु दैवेन दुहित्रेऽन्यं चरुं ददौ ।
तस्याश्चरुमथाज्ञानादात्मसंस्थं चकार सा ॥ ९२ ॥

अथ सत्यवती गर्भं क्षत्रियान्तकरं द्विजाः ।
धारयामास दीप्तेन वपुषा घोरदर्शनम् ॥ ९३ ॥

तामृचीकस्ततो दृष्ट्वा योगेनाभ्यनुसृत्य च ।
वचोऽब्रवीन्मुनिश्रेष्ठः स्वभार्यां वरवर्णिनीम् ॥ ९४ ॥

ऋचीक उवाच ।

मात्रासि वञ्चिता भद्रे चरुव्यत्यासहेतुना ।
तज्जनिष्यति ते पुत्रः क्रूरकर्मातिदारुणः ।
माता जनिष्यते पुत्रं ब्रह्मभूतं तपोधनम् ॥ ९५ ॥

[ एवमुक्ता महाभागा भर्त्रा सत्यवती शुभा ।
तदा प्रसादयामास सुतो मे नेदृशो भवेत् ।
ब्रह्मणा सदृशः स्वामिन्श्रुत्वा तु मुनिरब्रवीत् ॥

ऋषिरुवाच ।

नैष संकल्पितः कामो मया भद्रे तथा त्वया ।
उग्रकर्मा भवेत्पुत्रः पितुर्मातुश्च कारणात् ॥ ]

स्कन्द उवाच ।

ततः सत्यवती वाक्यमेवं श्रुत्वाब्रवीत्पतिम् ।
दृष्टा लोकानपि स्वामिन्सृजेथाः किं पुनः सुतम् ॥ ९६ ॥

---

95 Portion in [ ] om. in A.

शमात्मकमृजुं शान्तं पुत्रं दातुं त्वमर्हसि ।
काममेवंविधः पौत्रो मम स्यात्तव च प्रभो ।
यद्यन्यथा न शक्यं वै कर्तुमेतन्मुनीश्वर ॥ ९७ ॥

ततः प्रसादमकरोत्तस्यास्तु तपसो बलात् ।
पुत्रे नास्ति विशेषो मे पौत्रे वा वरवर्णिनि ।
त्वया यथोक्तं वचनं तथा भद्रे भविष्यति ॥ ९८ ॥

ततः सत्यवती पुत्रं जनयामास भार्गवम् ।
तपस्यभिरतं दान्तं जमदग्निं शमात्मकम् ॥ ९९ ॥

गाधिश्चरुविपर्यासाद्रौद्रवैष्णवयोः सुतम् ।
प्राप्य ब्रह्मर्षिसमतां जगाम ब्राह्मणैर्वृतः ॥ १०० ॥

परिस्तुता महाभागा पुण्यातोया मुनीश्वराः ।
कौशिकी स्वेच्छया गङ्गा सर्वपापौघनाशिनी ॥ १०१ ॥

स्कन्द उवाच ।

अतः परमृचीकस्य जमदग्निः सुतो द्विजाः ।
पतिर्भविष्यति श्रीमान्रेणुकायाः स्वयंवरे ॥ १०२ ॥

जामदग्न्यमिति ख्यातं हरिं त्रिभुवनेश्वरम् ।
मुनिः परशुरामं तं रेणुकायां जनिष्यति ।
विष्णुं पुराणपुरुषं दुष्टानां विनिवारकम् ॥ १०३ ॥

अथ रेणुका कथं जमदग्नेर्भार्या इति प्रश्ने–

ततो भागीरथीं गङ्गां द्रष्टुं गङ्गातटाश्रितैः ।
ऋषिः परमतत्त्वज्ञः पित्रा सह मुनीश्वराः ॥ १०४ ॥

रम्ये भागीरथीतीरे तीर्थयात्रार्थमागतौ ।
ददर्श रेणुको धीमान्रूपेणाप्रतिमौ मुनी ॥ १०५ ॥

तौ दृष्ट्वा गृहमानीय ताभ्यां स्वागतमादरात् ।
पाद्यार्घ्याचमनीयाद्यै रेणुश्चक्रे महायशाः ॥ १०६ ॥

जमदग्निऋचीकौ तावथाभ्यर्च्य च रेणुकः ।
उवाच वचनं तत्र इदं मधुरया गिरा ॥ १०७ ॥

---

101 *a* A परिस्रुता for परिस्तुता, MS B breaks off at कौशिकी स्वे° in 101 *c*.

राजोवाच ।

कौ भवन्तावनुप्राप्तौ विश्वमोहनरूपिणौ ।
क्षीरार्णवसमुद्रौ च किं चन्द्रार्कौ सुरोत्तमौ ।
किमग्निवरुणौ देवौ किं भवन्तौ सुरात्मकौ ॥ १०८॥

जमदग्निरुवाच ।

भार्गवाविति जानीहि पुण्याद्गोदावरीतटात् ।
आगताविह राजर्षे दर्शनार्थं तवानघ ॥ १०९ ॥

अयं मे जनको राजन्नृचीको नाम नामतः ।
निग्रहानुग्रहे शक्तो ऋषिः परमतत्त्ववित्॥ ११० ॥

भार्गवाच्च्यवनाज्जातः सर्वशास्त्रविशारदः ।
यस्य शापभयाद्भीता द्विधा गोदावरी बभौ ॥ १११ ॥

रेणुरुवाच ।

धन्योऽस्म्यनुगृहीतोऽस्मि कृतकृत्योऽस्मि दर्शनात् ।
द्वयोः पूतोऽस्मि पुण्येन महता नात्र संशयः ॥ ११२ ॥

इयं मम सुता देवी रूपेणाप्रतिमा भुवि ।
कस्मै यत्नेन दातव्या तं जानामि न तत्त्वतः ॥ ११३ ॥

ऋचीक उवाच ।

स्वयंवरं त्वया कार्यमेष धर्मविनिश्चयः ।
राजन्रूपवती कन्या यतो गुणवती तव ॥ ११४ ॥

राजानो राजपुत्राश्च स्वयंवरदिदृक्षवः ।
आगमिष्यन्ति मुनयो रूपेणाप्रतिमाः शुभाः ॥ ११५ ॥

स्कन्द उवाच ।

तत्र सर्वान्नृपान्प्राज्ञः परित्यज्य शुभानना ।
एकवीरा स्वयं वव्रे जमदग्निं मुनीश्वरम् ॥ ११६ ॥

पित्रा सैवमनुज्ञाता रेणुका स्वयमादरात् ।
प्राक्षिपद्दलपुष्पाढ्यां मालां नु जमदग्नये ॥ ११७ ॥

ततो हाहारताः सर्वे समुत्पेतुः सहस्रशः ।
राजानमृषयः केचिद्धर्मेण प्रणोदिताः ॥ ११८ ॥

अथ रेणुकायाः स्वयंवरोपकरणानि रेणुना जमदग्नये दत्त्वा सत्कृत्य प्रस्थापितो जमदग्निः स्वाश्रमं प्राप्तो निजधर्मं पालयामासेत्याद्यनन्तरम्—

जमदग्नेस्ततस्तस्यां रेणुकायां सुरोत्तमाः ।
बभूवुः पञ्च पुत्रास्ते वह्नीन्द्रार्कानिलाच्युताः ॥ ११९ ॥

वसुर्नामानलो जज्ञे वायुर्विश्वावसुः स्मृतः ।
बृहद्भानुर्दिनकरो बृहत्कर्णः शतक्रतुः ।
इति नामानि पुत्राणां रेणुकायाः शुभानि च ॥ १२० ॥

अथाच्युतांशोत्पत्तिः ।

चिन्तयित्वा स्वयं विष्णुर्मत्वा तां विश्वमातरम् ।
स रेणुकायास्तत्पुण्यमुदरं प्राविशन्मुदा ॥ १२१ ॥

स्वयं प्रकाशयद्विश्वं हरिस्त्रिभुवनेश्वरः ।
यदा मातुः स्थितो गर्भे तदा कौतूहलं महत् ॥ १२२ ॥

यस्याङ्गलोमसंलग्नाः श्रयन्ते ब्रह्मगोलकाः ।
कुक्ष्येकं कोणमाश्रित्य स रामो ववृधे शनैः ॥ १२३ ॥

ततस्त्वदितिनक्षत्रे तृतीयायां तु माधवे ।
रेणुकायास्तदा गर्भादुदितः स हरिर्बभौ ॥ १२४ ॥

पुष्पवर्षोऽभवत्तत्र रामदेवस्य मूर्धनि ।
सुरदुन्दुभयो नेदुर्मृदङ्गपणवादयः ॥ १२५ ॥

शङ्खतालनिनादाश्च वीणावेणुकलस्वनाः ।
बभूवुः सहसा तत्र गन्धर्वाश्च जगुर्हरिम् ॥ १२६ ॥

सहस्रमेकं बाहूनामर्जुनस्य चचाल ह ।
जाते रामे प्रचण्डेन वातेनेव वनं महत् ॥ १२७ ॥

तस्मिञ्जाते तदा रामे जमदग्निर्मुनीश्वरः ।
ब्राह्मणेभ्योऽददाद्धेनू रत्नानि विविधानि च ॥ १२८ ॥

अथ रामः क्रमेण वर्धमानः पित्रा कृतोपनयनो वेदसंपन्नः शिवसकाशाद्धनुर्विद्याध्ययनाय कैलासं गन्तुं मय्यनुज्ञां देहीति पितरौ ज्ञापयामास । ताभ्यामनुज्ञातः प्रणम्य प्रतस्थे । कैलासं प्राप्तो भगवतो महादेवस्य भक्त्या धनुर्विद्यामशेषामाससाद महेश्वराच्च परशुमित्यादि । अन्तरा च कुबेरोऽप्सरोभिः सह जमदग्नेराश्रमसमीपे भागीरथीजलविहारार्थमागतः । तस्य

जलविहारवर्णनम् । ततश्च–

स्कन्द उवाच ।

कैलासाद्रिं गते रामे जमदग्नेर्वराश्रमे ।
विश्वक्षोभकरं घोरमभवत्कौतुकं महत् ॥ १२९ ॥

ऋषय ऊचुः ।

कीदृशं तु भवेत्स्वामिन्परं कौतूहलं प्रभो ।
ब्रूहि तज्ज्ञातुमिच्छामो रेणुकायाः कथामृतम् ॥ १३० ॥

स्कन्द उवाच ।

ततः कालेन महता रेणुकाघविनाशिनी ।
जाता रजस्वला साम्बा रामदेवस्य वै शुभा ॥ १३१ ॥

ततो दिनत्रयस्यान्ते गङ्गायामुदिते रवौ ।
रेणुका स्नातुमगमत्सा दिव्याम्बरधारिणी ॥ १३२ ॥

दिव्यचन्दनलिप्ताङ्गी दिव्याभरणभूषिता ।
स्नात्वा तस्थौ भागीरथ्यां रेणुका स्त्रीभिरावृता ॥ १३३ ॥

ऋतुस्नाता ददर्शाथ क्रीडमानं शुभे जले ।
तत्र चित्ररथं देवी प्रौढनारीसमावृतम् ॥ १३४ ॥

दृष्ट्वा तं चारुसर्वाङ्गी विस्मयोत्फुल्ललोचना ।
चिन्तयामास भर्तारं जमदग्निं पतिव्रता ॥ १३५ ॥

यद्यस्माभिः परिवृतो जमदग्निर्मुनीश्वरः ।
क्रीडत्यस्मिञ्जले *** गङ्गायां चातिनिर्मले ।
तदा स्यात्सार्थकं तीर्थमिति सा मनसाब्रवीत् ॥ १३६ ॥

इत्युक्त्वैवं तदा देवी जगाम जगदम्बिका ।
परिधाय दुकूलं सा स्नात्वा चैवाङ्गनावृता ।
भीता सा त्वरिता भर्तुः स्वाश्रमे पुनरागमत् ॥ १३७ ॥

गृहद्वारि स्थितां दृष्ट्वा जमदग्निः प्रियां शुभाम् ।
रोषेण महता युक्तो युगान्ताग्निसमोऽभवत् ॥ १३८ ॥

एकवीरां महाभागामृषिः प्रस्फुरिताधरः ।
रक्तपर्यन्तनयनो रोषादिदमुवाच ह ॥ १३९ ॥

जमदग्निरुवाच ।

निर्गच्छ भवनादस्मात्स्वैरिणी त्वं न संशयः ।
मया दुश्चारिणी दुष्टा न त्वं हन्तुं स्वयं क्षमा ॥ १४० ॥

अग्निहोत्रस्य कालोऽयं व्यतीतश्चाभवच्छुभः ।
देवतातिथिपूजा मे भवेन्मोघा न संशयः ॥ १४१ ॥

त्वं ज्ञातासि मया नूनं सा मूढे व्यभिचारिणी ।
न हि मे धर्ममुद्दिश्य भार्या भवितुमर्हसि ॥ १४२ ॥

कुलं संप्राप्य पुण्यं मे कुले महति जातया ।
अकार्यं किं त्वया कार्यमेकपत्न्या विगर्हितम् ॥ १४३ ॥

स्कन्द उवाच ।

भर्तुस्तद्वचनं श्रुत्वा रेणुका सा पतिव्रता ।
शनैरुवाच भर्तारं भीता मधुरया गिरा ॥ १४४ ॥

पत्नीरोवाच ।

भवन्त एव मे नित्यं हृदि तिष्ठन्ति नापरः ।
मनसापि न वाञ्छामि भवद्भ्योऽन्यं वरं विभो ॥ १४५ ॥

मम नारायणः पुत्रः पौत्रो ब्रह्मान्यजन्तवः ।
प्रपौत्रास्तेषु किं स्वामिन्मेऽभिलाषः प्रवर्तते ॥ १४६ ॥

भर्ता मान्यो गुरुः श्लाघ्यो गुरूणां परमो गुरुः ।
तद्वते का गतिः स्वामिन्नारीणामिह जायते ॥ १४७ ॥

सर्वदेवमयो भर्ता पूज्यः स्त्रीणां गृहे गृहे ।
यस्मिंस्तुष्टे भवेयुस्ते देवताः पितरस्तथा ॥ १४८ ॥

भर्ता नाम परं स्त्रीणां भूषणं भूषणैर्विना ।
न कदाचिद्गतिस्तासां विना भर्त्रा भवेदिति ॥ १४९ ॥

भर्ता गुरुः सदा मान्यो भर्ता धर्मः सनातनः ।
भर्तरि प्रीतिमापन्ने प्रीताः स्युः सर्वदेवताः ॥ १५० ॥

न कामयेऽहं मनसापि चापरं
पतिं भवन्तो मम विश्वरूपिणः ।
सत्यं मया चोक्तमिदं न चान्यथा
यथोचितं तत्क्रियतां च धर्मतः ॥ १५१ ॥

स्कन्द उवाच ।

तथैवं मधुरेणापि जमदग्निः प्रसादितः ।
वचसा धर्मयुक्तेन रेणुकां कुपितोऽब्रवीत् ॥ १५२ ॥

जमदग्निरुवाच ।

यथार्हासि न संदेहस्त्वमनार्यासती मम ।
किं ब्रवीषि वचो धर्म्यं कृत्वा कर्म विगर्हितम् ॥ १५३ ॥

ततश्च—

सद्यः क्रोधवशाद्विलोक्य विधिवन्नम्रां पुरो रेणुका-
मेतां धर्मपरायणामपि हठाद्धन्तुं सुतानादिशत् ।
चक्रुस्ते न वचो न युक्तमिति च प्रोचुः क्रुधा तान्पुनः
कृत्वा प्राणविनाकृतानथ मुनिः सस्मार रामं सुतम् ॥ १५४ ॥

भो भोः श्रीराम रामेति त्रिभिरुच्चैःस्वरैर्मुनिः ।
जमदग्निः प्रियं पुत्रं कैलासात्क्षिप्रमाह्वयत् ॥ १५५ ॥

स प्लुतस्वरसंयुक्तं पितुः शब्दं मुनीश्वराः ।
रामस्तस्याशृणोद्धीरः कैलासाचलमाश्रितः ॥ १५६ ॥

रामः प्रणम्य तं दृष्ट्वा शंकरं सगणेश्वरम् ।
स्कन्धे परशुमादाय धनुर्गृह्य निरगाद्बली ॥ १५७ ॥

ततः संधाय नाराचमाकृष्य विपुलं धनुः ।
स रामस्तत्क्षणादेव पितुः स्थाने ययौ जवात् ॥ १५८ ॥

सकङ्कणभुजाभ्यां च स्नेहान्नत्वा च मातरम् ।
पितरं च परिष्वज्य रामस्तावभ्यवादयत् ॥ १५९ ॥

स ददर्श ततो भ्रातॄन्गतासून्पतितान्क्षितौ ।
क्रुद्धं च पितरं रामः प्रसन्नां चैव रेणुकाम् ॥ १६० ॥

कराञ्जलिपुटं कृत्वा विनयेन मुनीश्वराः ।
प्रसाद्य पितरं रामस्ततो वचनमब्रवीत् ॥ १६१ ॥

तवाद्य वचनात्तात कैलासादागतोऽस्म्यहम् ।
त्वं ज्ञापय तात तूर्णं प्रियं किं करवाणि ते ॥ १६२ ॥

पितुर्वचनकर्तारः सर्वे ते गुरवो मम ।
त्वमतुल्यो गुरुः साक्षात्स्वयं साक्षी पिनाकधृक् ॥ १६३ ॥

न त्वया सदृशः कश्चित्त्रिपु लोकेपु विद्यते ।
त्वं तु ब्रह्मा त्वमोंकारस्त्वमग्निस्तात चन्द्रमाः ॥ १६४ ॥

सर्वदेवमयस्तात नास्ति किंचित्त्वया विना ।
ब्रूहि तात यदर्थं मे तूर्णमावाहनं कृतम्
तव शर्मं प्रदास्यामि त्रैलोक्यं क्षोभयाम्यहम् ॥ १६५ ॥

ततः पुत्रस्य वचनात्संप्रहृष्टतनूरुहः ।
जमदग्निः प्रियं पुत्रं रामं वचनमब्रवीत् ॥ १६६ ॥

जमदग्निरुवाच ।

त्वं मे पूर्वसत्ता वत्स हरिस्त्रिभुवनेश्वरः ।
स्वर्गात्त्वं मम पुत्रत्वं प्राप्तोऽसि इह भूतले ॥ १६७ ॥

त्वद्दते देहमात्मानं जीवितं च मुधा भवेत् ।
शंभुतेजःसमुद्भूतमृषयः सुरकिंनराः ॥ १६८ ॥

ब्रूयुर्मां कश्यपं गङ्गामदितिं रेणुकामिमाम् ।
इयं त्वज्जननी राम यस्या गर्भे तवोद्भवः ॥ १६९ ॥

अनया स भगीरथ्यां गन्धर्वः स्मररूपधृक् ।
अवेक्षित इति ज्ञातं मया भावेन नान्यथा ॥ १७० ॥

देवतातिथिदीनानां तृप्तिकालो वृथा गतः ।
त्यक्तकालोऽनया राम हन्तव्या सा त्वया प्रभो ॥ १७१ ॥

त्वमिमां रेणुकां वत्स रामदेव धनुर्धर ।
क्षिप्रं दुश्चारिणीं दुष्टां शस्त्रेणानेन घातय ॥ १७२ ॥

स्कन्द उवाच ।

इत्युक्तः स तदा रामः पित्रा तेन मुनीश्वराः ।
तत्क्षणादेकवीरां तामम्बां परशुनाच्छिनत् ॥ १७३ ॥

ततः पपात सा देवी रेणुका पापनाशिनी ।
निहता रामदेवेन च्छिन्नेव कदली यथा ॥ १७४ ॥

ततोऽम्बरात्पुष्पवर्षं सहसा चापतच्छुभम् ।
हतायां रेणुकायां तु रामदेवस्य मूर्धनि ॥ १७५ ॥

जमदग्निर्महातेजाः सुतं धर्मभृतां वरम् ।
प्रशशंस मुदा रामं भक्तिं दृष्ट्वातुलां तदा ॥ १७६ ॥

स्कन्द उवाच ।

तयैवं मधुरेणापि जमदग्निः प्रसादितः ।
वचसा धर्मयुक्तेन रेणुकां कुपितोऽब्रवीत् ॥ १५२ ॥

जमदग्निरुवाच ।

वधार्हासि न संदेहस्त्वमनार्यासती मम ।
किं ब्रवीषि वचो धर्म्यं कृत्वा कर्म विगर्हितम् ॥ १५३ ॥

ततश्च—

सद्यः क्रोधवशाद्विलोक्य विधिवन्नम्रां पुरो रेणुका-
मेतां धर्मपरायणामपि हठाद्धन्तुं सुतानादिशत् ।
चक्रुस्ते न वचो न युक्तमिति च प्रोचुः क्रुधा तान्पुनः
कृत्वा प्राणविनाकृतानथ मुनिः सस्मार रामं सुतम् ॥ १५४ ॥

भो भोः श्रीराम रामेति त्रिभिरुच्चैःस्वरैर्मुनिः ।
जमदग्निः प्रियं पुत्रं कैलासात्क्षिप्रमाह्वयत् ॥ १५५ ॥

स प्लुतस्वरसंयुक्तं पितुः शब्दं मुनीश्वराः ।
रामस्तस्याशृणोद्वीरः कैलासाचलमाश्रितः ॥ १५६ ॥

रामः प्रणम्य तं दृष्ट्वा शंकरं सगणेश्वरम् ।
स्कन्धे परशुमादाय धनुर्गृह्य निरगाद्बली ॥ १५७ ॥

ततः संधाय नाराचमाकृष्य विपुलं धनुः ।
स रामस्तत्क्षणादेव पितुः स्थानं ययौ जवात् ॥ १५८ ॥

सकङ्कणभुजाभ्यां च स्नेहान्नत्वा च मातरम् ।
पितरं च परिष्वज्य रामस्तावभ्यवादयत् ॥ १५९ ॥

स ददर्श ततो भ्रातॄन्गतासून्पतितान्क्षितौ ।
क्रुद्धं च पितरं रामः प्रसन्नां चैव रेणुकाम् ॥ १६० ॥

कराञ्जलिपुटं कृत्वा विनयेन मुनीश्वराः ।
प्रसाद्य पितरं रामस्ततो वचनमब्रवीत् ॥ १६१ ॥

तवाद्य वचनात्तात कैलासादागतोऽस्म्यहम् ।
त्वं ज्ञापय तात तूर्णं प्रियं किं करवाणि ते ॥ १६२ ॥

पितुर्वचनकर्तारः सर्वे ते गुरवो मम ।
त्वमतुल्यो गुरुः साक्षात्स्वयं साक्षी पिनाकधृक् ॥ १६३ ॥

[ जमदग्निरुवाच । ]

यथा वदसि धर्मज्ञ तत्तथा न तदन्यथा ।
क्रोधेनेदं कृतं वत्स दुष्कृतं न कृतं मया ॥ १८९ ॥

एवमुक्त्वा महातेजा जमदग्निः प्रियां शुभाम् ।
पीयूषेणाथ तां सिक्तां तूर्णमुत्थापयत्स्वयम् ।
उत्थापयामास तदा पीयूषेणाभिषिच्य ताम् ॥ १९० ॥

सर्वभूषणसंपन्ना सर्वाभरणभूषिता ।
उत्थाय भूतलात्स्वच्छा सा पुत्रान्परिषस्वजे ॥ १९१ ॥

ततः प्रणम्य तामम्बां पुत्राः पञ्च मनोरमाः ।
पप्रच्छुरमलां देवीं परिष्वज्येदमुत्तमाम् ॥ १९२ ॥

पुत्रा ऊचुः ।

मातस्त्वं ब्रूहि केनाथ कारणेन चिरं शुभे ।
पुत्रान्विहाय नः सर्वांस्सुप्तासि धरणीतले ॥ १९३ ॥

न मुहूर्तमपीच्छामो जीवितुं च त्वया विना ।
त्वया जीवन्ति भूतानि धार्यतेऽदस्त्वया जगत् ॥ १९४ ॥

एतस्मिन्नन्तरे तत्र पुष्पवर्षो महानभूत् ।
रेणुकायास्तदा मूर्ध्नि दुन्दुभीनां च निस्वनः ॥ १९५ ॥

दृष्ट्वा तामुत्थितां देवीमृषयः सुरकिंनराः ।
स्तुवन्तो योगिनः सर्वे परं हर्षमुपागताः ॥ १९६ ॥

स्कन्द उवाच ।

ततः पुत्रैः परिवृतामेकवीरां पतिव्रताम् ।
ऋषिः सत्कारयामास वस्त्रालंकरणैः शुभैः ॥ १९७ ॥

त्यज देव्यप्रियं सर्वं दुःखदैन्यं च भामिनि ।
भद्रे क्रोधवशादेतत्तव कष्टं मया कृतम् ॥ १९८ ॥

ध्रुवं गुणवती चासि पुत्रिण्यव्यभिचारिणी ।
पतिभक्तिरता चासि त्वमेव मम वल्लभा ।
जननी सर्वदेवानां त्वमेव सकलेश्वरी ॥ १९९ ॥

इत्युक्त्वा तां परिष्वज्य स्नेहादुक्त्वा उदारधीः ।
स्वाङ्के पुत्रैर्वृतां हृष्टो देवीमारोपयत्तदा ॥ २०० ॥

जमदग्निरुवाच ।

राम राम महाबाहो भृगुवंशविवर्धन ।
तव तुष्टोऽस्म्यहं वत्स ब्रूहि यत्तेऽभिवाञ्छितम् ॥ १७७ ॥

प्राकृतं न हि मन्ये त्वां पुत्रं गुणवतां वरम् ।
धन्योऽस्मि कृतकृत्योऽस्मि यस्य मे त्वं सुतो महान् ॥ १७८ ॥

यः करोति पितुर्वाक्यं नित्यं मातुर्हिते रतः ।
स पूज्यो वन्दनीयश्च देवानां पितृवद्भवेत् ॥ १७९ ॥

त्वं हि सत्यव्रतश्चैव गुरुभक्तिपरायणः ।
अचिन्त्योऽसि न संदेहः सुराणामधिपेश्वरः ॥ १८० ॥

वरं दास्यामि ते राम गुरुवाक्यपरायण ।
तत्त्वं ब्रूहि महासत्त्व यत्ते मनसि वर्तते ॥ १८१ ॥

राम उवाच ।

यदि तुष्टोऽसि मे तात सह मात्रा मुनीश्वर ।
उत्तिष्ठन्त्वनघाः क्षिप्रं भ्रातरो भस्मराशयः ॥ १८२ ॥

स्कन्द उवाच ।

इत्युक्तस्तेन रामेण जमदग्निर्महातपाः ।
शीघ्रमुत्थापयामास पुत्रांस्तिनत्त्वामृतेन तान् ॥ १८३ ॥

सिक्तास्तेनामृतेनाशु वस्वाद्यास्ते सुरोत्तमाः ।
उत्थिताः सहसा हृष्टाः पितरं चाभ्यवादयन् ॥ १८४ ॥

बाहुभ्यां स परिष्वज्य स्वाङ्के चारोप्य तान्सुतान् ।
पुनरेव मुनिः स्नेहाद्रामं वचनमब्रवीत् ॥ १८५ ॥

अन्यं वरय भद्रं ते यमिच्छसि वरं सुत ।
वाञ्छितं ते प्रदास्यामि यद्यपि स्यात्सुदुष्करम् ॥ १८६ ॥

राम उवाच ।

इयं मे जननी देवी रेणुकाव्यभिचारिणी ।
अमातस्यवधा तात क्षिप्रमुत्तिष्ठतु स्वयम् ॥ १८७ ॥

यस्याः पादाब्जयुगलं ध्यायन्ति मुनयः सदा ।
योगिनश्च जगन्मातुस्त्वद्भक्त्या सा हता मया ॥ १८८ ॥

स्कन्द उवाच ।

इत्युक्तो मुनिना तेन संक्रुद्धो हैहयाधिपः ।
घातयामास तं विप्रं खड्गमुत्पाटयन्भृशम् ॥ २१० ॥

ततो रोषेण महता जमदग्निं मुनीश्वराः ।
तेनासिनातितीक्ष्णेन कार्तवीर्यस्तदाहनत् ॥ २११ ॥

ततश्चुक्रोश सा देवी रेणुकाघविनाशिनी ।
अर्जुनेन हतं दृष्ट्वा स्वपतिं भर्तृवत्सला ॥ २१२ ॥

जमदग्नेः प्रिया भार्या तस्योपर्यपतच्छुभा ।
एकवीरां जगद्धात्रीमर्जुनो न वचोऽब्रवीत् ॥ २१३ ॥

ततः पुनरसौ क्रोधादसिना मुनिसत्तमम् ।
तं जघान तया सार्धं [ स ] मुपस्थितयानया ॥ २१४ ॥

त्रिःसप्तवत्सुसंक्रुद्धो जमदग्निमथार्जुनः ।
हत्वा तस्य मुनेर्देहमसिना क्षिप्रमाच्छिनत् ॥ २१५ ॥

ततस्ते सुरगन्धर्वाः सिद्धाश्च परमर्षयः ।
रुरुदुस्तं हतं दृष्ट्वा क्रोशन्तस्ते च भार्गवम् ॥ २१६ ॥

सा त्रिःसप्तक्षताङ्गी च रेणुका पतिवत्सला ।
चुक्रोश सा बहून्शब्दान्स रामः शृणुयाद्यथा ॥ २१७ ॥

एकवीरा जगन्माता मुनिभिः परिवारिता ।
इदमाहार्जुनं देवी वचनं प्रहसन्निव ॥ २१८ ॥

एकवीरोवाच ।

ब्रह्मघ्नार्जुन पापिष्ठ किमिदं साहसं कृतम् ।
कामधेनुमिमामिच्छन्पापं निरयसाधनम् ॥ २१९ ॥

हत्वेमं ब्राह्मणं शान्तं क्व गतस्त्वं विमोक्ष्यसे ।
को हि भुक्त्वा परान्नं वै भाजनं भङ्क्तुमर्हति ॥ २२० ॥

स्कन्द उवाच ।

तस्यास्तद्वाक्यमाकर्ण्य तूष्णींभूतो मुनीश्वराः ।
निर्द्रामभयाद्राजा समन्तादवलोकयन् ॥ २२१ ॥

मुनीन्द्रे निहते तेन कामधेनुस्त्रिविष्टपम् ।
जगाम तत्क्षणादेव रोदमाना सुदुःखिता ॥ २२२ ॥

ततस्ते सुरगन्धर्वाः सिद्धाश्च परमर्षयः ।
वस्त्रालंकरणैः पुष्पैरेकवीरामपूजयन् ॥ २०१ ॥

अथ हैहयस्य राज्ञः कृतवीर्यः, कृतवीर्यात्प्रदोषसमये रतिमत्यां राका-
वत्यामसुरो मधुः कार्तवीर्योऽर्जुनः पुत्रो दत्तात्रेयाराधनया बाहूनां सहस्रं
ब्राह्मणभिन्नादवध्यतां चासाद्य महाराजो बभूवेत्यादि ।

यः पूर्वं दशकंधरं क्षितिभृतामग्रेश्वरं भूभुजां
कारागारगतं चकार बलवान्दोष्णां सहस्रैः स्वयम् ।
भूयः पङ्कजयोनिना भगवता पौत्रार्थिना याचितः
प्रीतो रावणमुन्मुमोच महिमा तस्यास्य किं वर्ण्यताम् ॥ २०२ ॥

अस्मै कदाचिदागत्य नारदस्तपसां वरः ।
जमदग्न्याश्रमकथामूचे कलहकौतुकी ॥ २०३ ॥

काले कदापि नृपतिर्मृगयापदेशाद्
दृष्ट्वा तपोवनगतं जमदग्निवेश्म ।
आतिथ्यकारिणि मुनावतिविस्मयेन
हर्तुं स दैवतगवीं स्वयमाचकाङ्क्ष ॥ २०४ ॥

विश्वामित्रमुखैस्तपस्विभिरसौ शश्वन्निषिद्धोऽपि स-
न्मोहान्धः सुरधेनुमुत्कटगुणां हर्तुं भटानादिशत् ।
धेनोर्वक्त्रविनिर्गतानपि भटान्हत्वा रणे रोषणो
हर्तुं स स्वयमेव यत्नमकरोद्धेनुं द्विजस्योत्तमाम् ॥ २०५ ॥

स्कन्द उवाच ।

एतस्मिन्नन्तरे क्रुद्धः स सहस्रार्जुनो बली ।
मन्त्रिभिः प्रेरितः खड्गमुद्यम्याग्रे व्यसंस्थितः ॥ २०६ ॥

तस्य क्रुद्धस्य वै राज्ञः किल्बिषाय मतिर्भवत् ।
कामधेनुं मुनिं हत्वा नेष्यामीति मुनीश्वराः ॥ २०७ ॥

अर्जुन उवाच ।

दाम्ना बद्ध्वा स्वहस्तेन कामधेनुं मुनीश्वर ।
देहि शीघ्रं त्वमप्येहि यदि जीवितुमिच्छसि ॥ २०८ ॥

ऋषिरुवाच ।

स्वयं नय बलादेनां न दातुं तत्र मे क्षमम् ।
करोमि किं नृपश्रेष्ठ यद्येषा गामं गच्छति ॥ २०९ ॥

स्कन्द उवाच ।

इत्युक्तो मुनिना तेन संक्रुद्धो हैहयाधिपः ।
घातयामास तं विप्रं खड्गमुत्पाटयन्भृशम् ॥ २१० ॥

ततो रोषेण महता जमदग्निं मुनीश्वराः ।
तेनासिनातितीक्ष्णेन कार्तवीर्यस्तदाहनत् ॥ २११ ॥

ततश्चुक्रोश सा देवी रेणुकाघविनाशिनी ।
अर्जुनेन हतं दृष्ट्वा स्वपतिं भर्तृवत्सला ॥ २१२ ॥

जमदग्नेः प्रिया भार्या तस्योपर्यपतच्छुभा ।
एकवीरां जगद्धात्रीमर्जुनो न वचोऽब्रवीत् ॥ २१३ ॥

ततः पुनरसौ क्रोधादसिना मुनिसत्तमम् ।
तं जघान तया सार्धं [ स ] मुपस्थितयात्तया ॥ २१४ ॥

त्रिःसप्तवत्सुसंक्रुद्धो जमदग्निमथार्जुनः ।
हत्वा तस्य मुनेर्देहमसिना क्षिप्रमाच्छिनत् ॥ २१५ ॥

ततस्ते सुरगन्धर्वाः सिद्धाश्च परमर्षयः ।
रुरुदुस्तं हतं दृष्ट्वा क्रोशन्तस्ते च भार्गवम् ॥ २१६ ॥

सा त्रिःसप्तक्षताङ्गी च रेणुका पतिवत्सला ।
चुक्रोश सा बहुञ्शब्दान्स रामः शृणुयाद्यथा ॥ २१७ ॥

एकवीरा जगन्माता मुनिभिः परिवारिता ।
इदमाहार्जुनं देवी वचनं प्रहसन्निव ॥ २१८ ॥

एकवीरोवाच ।

ब्रह्मघ्नार्जुन पापिष्ठ किमिदं साहसं कृतम् ।
कामधेनुमिमामिच्छन्पापं निरयसाधनम् ॥ २१९ ॥

हत्वेमं ब्राह्मणं शान्तं क्व गतस्त्वं विमोक्ष्यसे ।
को हि भुक्त्वा परान्नं वै भाजनं भङ्क्तुमर्हति ॥ २२० ॥

स्कन्द उवाच ।

तस्यास्तद्वाक्यमाकर्ण्य तूर्णीभूतो मुनीश्वराः ।
निरैद्रामभयाद्राजा समन्तादवलोकयन् ॥ २२१ ॥

मुनीन्द्रे निहते तेन कामधेनुस्त्रिविष्टपम् ।
जगाम तत्क्षणादेव रोदमाना सुदुःखिता ॥ २२२ ॥

एकवीरा जगद्योनि पतिभक्तिपरायणा।
यानुच्चैरकरोच्छब्दान्समस्तानशृणोत्तदा ॥ २२३ ॥

ततो मातु स्वन श्रुत्वा प्रणम्येश गणेश्वरम् ।
पृष्ट्वा तदनुरादाय मातुर्गृहमथागमत् ॥ २२४ ॥

स ददर्श ततो राम पितर निहत भुवि।
ता त्रि सप्तक्षताङ्गीं च मातर च महाबल ॥ २२५ ॥

रेणुका मातर दृष्ट्वा बाष्पपर्याकुलेक्षण ।
पप्रच्छ मातर राम कारण तत्पितुर्वधे ॥ २२६ ॥

राम उवाच।

मातर्देवि जगद्वन्द्ये केनेद दुष्कृत कृतम् ।
तिष्ठन्त्या त्वयि तद्ब्रूहि मा शुचस्त्व मयि स्थिते ॥ २२७ ॥

अद्युनेव हत शत्रोर्मया परशुना शरै ।
ससैन्यस्य रणे गृध्रा श्येनगोमायुवायसा, ।
भक्षयिष्यन्ति मासानि मातस्त्व ब्रूहि त रिपुम् ॥ २२८ ॥

स्कन्द उवाच।

तत परशुरामस्य श्रुत्वा तद्वचन शुभम् ।
प्रहस्य रेणुका तस्मै कथयामास त रिपुम् ॥ २२९ ॥

आगतोऽत्र नृपो राम कार्तवीर्य इति श्रुत ।
तस्मै सम्यङ् मयातिथ्य कृत यत्नादरेण च ॥ २३० ॥
कामधेनु शुभा तेन भुक्त्वा वै प्रार्थिता बलात् ।
नीयमानापि सा तेन न जगाम नृपालयम् । ॥ २३१ ॥
कशादण्डप्रहारैश्च सचिवैर्निहता भृशम् ।
सहस्रार्जुनदेश सा न जगाम कथचन ॥ २३२ ॥
तत प्रकुपित शीघ्रमर्जुनो मुनिसत्तमम् ।
आकृष्यासिलता तूर्ण जघान पितर तव ॥ २३३ ॥
न सेहे जीवितु शक्यमनेन पतिना विना।
मा त्रि सप्तक्षताङ्गीं त्व पश्य राम धनुर्धर ॥ २३४ ॥

श्रीराम उवाच।

त्रि सप्तकृत्व पृथिवीं कृत्वा निःक्षत्रियामहम् ।
करिष्यामि न सदेहो मातस्त्वत्क्षतकारणात् ॥ २३५ ॥

शतानि दश बाहूनामर्जुनस्य रणे शुभे ।
अनेनैव हनिष्यामि मातः परशुना भृशम् ॥ २३६ ॥

पत्नीवाच ।

सम्यगुक्तं त्वया वत्स प्रतिज्ञातं च यत्किल ।
पित्रे भक्त्या च संस्कारं कृत्वा तत्सफलं कुरु ॥ २३७ ॥

तिष्ठ तिष्ठति चैवात्र पृथिव्यां यत्र पुत्रक ।
* * * * * * * * थोप्यासि त्वं शुभां गिरम् ॥ २३८ ॥

यत्राचार्यो भवेत्पुत्र सर्वशास्त्रविशारदः ।
तेनैव सहितो भक्त्या प्रतिष्ठां त्वं कुरु द्वयोः ॥ २३९ ॥

पितुः संपादितौर्ध्वदेहिको रामो नारदेन सह माहिष्मतीसमीपमाजगाम । ततश्च—

स्कन्द उवाच ।

ततो दिशश्च ते सर्वे राजानो दृढविक्रमाः ।
स्वबलैः संवृतास्तस्थुः कार्तवीर्यस्य शासनात् ॥ २४० ॥

सोऽपि सिंहासनारूढो गृहीतविविधायुधः ।
कार्तवीर्यो दिशः सर्वा व्यलोकयदथ द्विजाः ॥ २४१ ॥

अवलोक्य दिशः सर्वाः ससुरैरसुरैरपि ।
दुर्जयः कार्तवीर्यस्त[ तः स्वप्नं] कौतुकं तन्न्यवेदयत् ॥ २४२ ॥

निशायामेऽद्य मे स्वप्ने कौतुकं भो द्विजोत्तमाः ।
दृष्टं वक्ष्यामि तत्सर्वं श्रूयतां सचिवैः सह ॥ २४३ ॥

दृष्टं निर्भुजमात्मानं भोश्छिन्नशिरसं द्विजाः ।
मुण्डं दिगम्बरं चैव ध्यायतां मे यथा तथा ॥ २४४ ॥

इयं राकावती नग्ना कण्ठे बद्धा च मां द्विजाः ।
क्रन्दमाना च जननी दिशं याम्यां जगाम ह ॥ २४५ ॥

पुरी माहिष्मती चेयं गजवाजिसमाकुला ।
निमग्ना सागरे घोरे भग्नप्राकारमन्दिरा ॥ २४६ ॥

आसने शयने पाने भोजने स्त्रीसमागमे ।
तं च विप्रं प्रपश्यामि यो मया निहतस्तदा ॥ २४७ ॥

क्षीरवारिघृताद्येषु तं छिन्नशिरसं द्विजम् ।
पश्यामि प्रमदायुक्तं स्वप्ने त्वसिविदारितम् ॥ २४८ ॥

एकवीरा जगद्योनिः पतिभक्तिपरायणा ।
यानुच्चैरकरोच्छब्दान्समस्तानशृणोत्तदा ॥ २२३ ॥

ततो मातुः स्वनं श्रुत्वा प्रणम्येशं गणेश्वरम् ।
पृष्ट्वा तद्धनुरादाय मातुर्गृहमथागमत् ॥ २२४ ॥

स ददर्श ततो रामः पितरं निहतं भुवि ।
तां त्रिःसप्तक्षताङ्गीं च मातरं च महाबलः ॥ २२५ ॥

रेणुकां मातरं दृष्ट्वा बाष्पपर्याकुलेक्षणः ।
पप्रच्छ मातरं रामः कारणं तत्पितुर्वधे ॥ २२६ ॥

राम उवाच ।

मातर्देवि जगद्वन्द्ये केनेदं दुष्कृतं कृतम् ।
तिष्ठन्त्यां त्वयि तद्ब्रूहि मा शुचस्त्वं मयि स्थिते ॥ २२७ ॥

अद्यैव हतं शत्रोर्मया परशुना शरैः ।
ससैन्यस्य रणे गृध्राः श्येनगोमायुवायसाः ।
भक्षयिष्यन्ति मांसानि मातस्त्वं ब्रूहि तं रिपुम् ॥ २२८ ॥

स्कन्द उवाच ।

ततः परशुरामस्य श्रुत्वा तद्वचनं शुभम् ।
प्रहस्य रेणुका तस्मै कथयामास तं रिपुम् ॥ २२९ ॥

आगतोऽत्र नृपो राम कार्तवीर्य इति श्रुतः ।
तस्मै सम्यङ्मयातिथ्यं कृतं वत्सादरेण च ॥ २३० ॥
कामधेनुः शुभा तेन भुक्त्वा वै प्रार्थिता बलात् ।
नीयमानापि सा तेन न जगाम नृपालयम् । ॥ २३१ ॥
कशादण्डप्रहारैश्च सचिवैर्निहता भृशम् ।
सहस्रार्जुनदेशं सा न जगाम कथंचन ॥ २३२ ॥
ततः प्रकुपितः शीघ्रमर्जुनो मुनिसत्तमम् ।
आकृष्यासिलतां तूर्णं जघान पितरं तव ॥ २३३ ॥
न सेहे जीवितुं दास्यमनेन पतिना विना ।
मां त्रिःसप्तक्षताङ्गीं त्वं पश्य राम धनुर्धर ॥ २३४ ॥

श्रीराम उवाच ।

त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियामहम् ।
करिष्यामि न संदेहो मातस्त्वत्क्षतकारणात् ॥ २३५ ॥

स्कन्द उवाच ।

एवं संभाषमाणस्तु कार्तवीर्यो बहूनि च ।
अनिष्टान्यद्भुतान्यग्रे ददर्श मुनिसत्तमाः ॥ २६१ ॥

दिवः शोणितवर्षेण ववर्ष भवनोपरि ।
कबन्धान्यन्तरिक्षे च शिरांसि विकृतानि च ।
भ्रमन्ति चक्रवेगेन क्रन्दमानानि भो द्विजाः ॥ २६२ ॥

वृकव्याघ्रवराहादिशिवागोमायुवायसाः ।
कार्तवीर्यपुरद्वारि व्याहरन्त्यशुभानि च ॥ २६३ ॥

एतानि दृष्ट्वा चान्यानि सोऽनिष्टान्यशुभानि च ।
कार्तवीर्यः स्वयं रोषात्प्रलयाग्निसमोऽभवत् ॥ २६४ ॥

सहस्रदोर्भिर्दिव्यैश्च शस्त्राण्यादाय सत्वरः ।
स दिव्यबद्धसंनाहः संनद्धोऽभवदर्जुनः ॥ २६५ ॥

ततो माहिष्मतीं क्षिप्रमागम्यान्तः प्रविश्य च ।
पुरीमालोकयामास रामचारः स नारदः ॥ २६६ ॥

चारिता नगरी तेन नारदेन महात्मना ।
तथापि केचिदप्येनं न जानीयुर्विचक्षणाः ॥ २६७ ॥

पुरीनिरीक्षणं कृत्वा सहस्रार्जुनमीक्ष्य च ।
नारदस्त्वरितो राममागम्येदं वचोऽब्रवीत् ॥ २६८ ॥

स्वामिन्रामप्रभो क्षिप्रमागन्तव्यं धनुर्धरः ।
धनुर्ज्यास्वननिर्घोषं कुरु रम्भावने स्थितः ॥ २६९ ॥

स्कन्द उवाच ।

स्नानं कृत्वाथ रेवायां तेनोक्तो मुनिसत्तमाः ।
गुरुदेवद्विजान्रामः पूजयामास भक्तितः ॥ २७० ॥

ततोऽचिरेण कालेन हैहयाधिपतेः पुरीम् ।
प्राप्य रामो वने स्थित्वा धनुषो ज्यामवादयत् ॥ २७१ ॥

सहसा धनुषः शब्दमशृणोद्धैहयाधिपः ।
स्थितः सिंहासने रम्ये विस्फोटमशनेरिव ॥ २७२ ॥

ततो घोरतरः शब्दः स बभूव मुहुर्मुहुः ।
रामस्य धनुषो येन त्रैलोक्यमगमद्भयम् ॥ २७३ ॥

विप्रा ऊचुः ।

यदि त्वत्तोऽभयं राजन्सर्वेषां नो भविष्यति ।
स्वप्नार्थं कथयिष्यामः सर्वं शृणु जनेश्वर ॥ २४९ ॥

अर्जुन उवाच ।

कथयन्तु भवन्तो मे स्वप्नार्थं निर्भयं द्विजाः ।
ईश्वराज्ञा पितुर्मातुः सत्यमेतन्मयोदितम् ॥ २५० ॥

विप्रा ऊचुः ।

अपराधविहीनो यो जमदग्निः श्रियान्वितः ।
यत्त्वया निहतो राजन्स्वप्नोऽद्य तस्य कर्मणः ॥ २५१ ॥

ब्रह्महत्यासमं पापं न भूतं न भविष्यति ।
जमदग्निर्हतो राजंस्तस्येदं च निदर्शनम् ॥ २५२ ॥

तस्यैकः श्रूयते पुत्रस्त्रिषु लोकेषु विश्रुतः ।
बली परशुरामश्च क्षिप्रमत्रागमिष्यति ॥ २५३ ॥

तद्रक्ष चात्मनात्मानं नूनं नास्त्यत्र संशयः ।
बलमादाय क्षिप्रं तु पुरस्यास्य समन्ततः ॥ २५४ ॥

विप्राणां तद्वचः श्रुत्वा स सहस्रार्जुनो बलम् ।
समादिश्य तु तांश्चाराञ्नानामार्गेषु सत्वरः ॥ २५५ ॥

गजानां नित्यमत्तानां तिस्रः कोटीः समादिशत् ।
अश्वानां पञ्च कोट्यस्तु रथानां षट् शताधिकाः ।
दश कोटीः पदातीनां पुर्यास्तस्यास्तु रक्षणे ॥ २५६ ॥

चारा ऊचुः ।

क्षिप्रं त्रैलोक्यमस्माभिश्चारितं हैहयाधिप ।
कश्चिन्नास्ति बली शत्रुर्दृश्यते मत्सरी क्वचित् ॥ २५७ ॥

इदं त्वयैव भोक्तव्यं त्रैलोक्यं नात्र संशयः ।
शत्रोर्मूर्ध्नि पदं दत्वा त्वया चात्मबलेन वै ॥ २५८ ॥

स नास्ति त्रिषु लोकेषु यस्त्वयानिर्जितो रणे ।
त्वया विनापरः शूरस्त्रैलोक्ये सचराचरे ॥ २५९ ॥

अर्जुन उवाच ।

शूलमुद्गरपाणिर्मां दत्तात्रेयोऽथवा रणे ।
न शक्नुवन्ति मां जेतुं सेन्द्रा देवा निरायुधाः ॥ २६० ॥

स्कन्द उवाच ।

एवं संभाषमाणस्तु कार्तवीर्यो बहूनि च ।
अनिष्टान्यद्भुतान्यग्रे ददर्श मुनिसत्तमाः ॥ २६१ ॥

दिवः शोणितवर्षेण ववर्ष भवनोपरि ।
कबन्धान्यन्तरिक्षे च शिरांसि विकृतानि च ।
भ्रमन्ति चक्रवेगेन क्रन्दमानानि भो द्विजाः ॥ २६२ ॥

वृकव्याघ्रवराहादिशिवागोमायुवायसाः ।
कार्तवीर्यपुरद्वारि व्याहरन्त्यशुभानि च ॥ २६३ ॥

एतानि दृष्ट्वा चान्यानि सोऽनिष्टान्यशुभानि च ।
कार्तवीर्यः स्वयं रोषात्प्रलयाग्निसमोऽभवत् ॥ २६४ ॥

सहस्रदोर्भिर्दिव्यैश्च शस्त्राण्यादाय सत्वरः ।
स दिव्यबद्धसंनाहः संनद्धोऽभवदर्जुनः ॥ २६५ ॥

ततो माहिष्मतीं क्षिप्रमागम्यान्तः प्रविश्य च ।
पुरीमालोकयामास रामचारः स नारदः ॥ २६६ ॥

चारिता नगरी तेन नारदेन महात्मना ।
तथापि केचिदप्येनं न जानीयुर्विचक्षणाः ॥ २६७ ॥

पुरीनिरीक्षणं कृत्वा सहस्रार्जुनमेक्ष्य च ।
नारदस्त्वरितो राममागम्येदं वचोऽब्रवीत् ॥ २६८ ॥

स्वामिन्रामप्रभो क्षिप्रमागन्तव्यं धनुर्धरः ।
धनुर्ज्यास्वननिर्घोषं कुरु रम्यावने स्थितः ॥ २६९ ॥

स्कन्द उवाच ।

स्नानं कृत्वाथ रेवायां तेनोक्तो मुनिसत्तमाः ।
गुरुदेवद्विजान्रामः पूजयामास भक्तितः ॥ २७० ॥

ततोऽचिरेण कालेन हैहयाधिपतेः पुरीम् ।
प्राप्य रामो वने स्थित्वा धनुषो ज्यामवादयत् ॥ २७१ ॥

सहसा धनुषः शब्दमशृणोद्धैहयाधिपः ।
स्थितः सिंहासने रम्ये विस्फोटमशनेरिव ॥ २७२ ॥

ततो घोरतरः शब्दः स बभूव मुहुर्मुहुः ।
रामस्य धनुषो येन त्रैलोक्यमगमद्भयम् ॥ २७३ ॥

श्रुत्वा तद्धनुषः शब्दं समीपे सहसार्जुनः ।
उत्तस्थावासनात्तूर्णं खड्गमादाय सत्वरः ॥ २७४ ॥

मन्त्रिणः सचिवानन्यान्भ्रातॄन्पुत्रान्सुहृत्सखीन् ।
तानाहूयार्जुनः क्षिप्रं पप्रच्छ धनुषः स्वनम् ॥ २७५ ॥

अर्जुन उवाच ।

बहवो धनुषः शब्दाः स्वयं घोराः श्रुता मया ।
एतस्य धनुषः शब्दं सर्वे शृण्वन्तु मन्त्रिणः ॥ २७६ ॥

स्कन्द उवाच ।

इत्युक्तास्तेन ते सर्वे मन्त्रिणः सचिवा नृपाः ।
श्रुत्वाथ धनुषः शब्दं राजानमिदमब्रुवन् ॥ २७७ ॥

धनुषेयं मही राजन्भ्रममाणानुमीयते ।
तद् ध्रुवं नास्ति संदेहो महानयमुपप्लवः ॥ २७८ ॥

आत्मनो वाथ मर्यादामुल्लङ्घ्य जलधिः स्वयम् ।
गर्जन्भैरवनादैश्च त्रैलोक्यं नेष्यति क्षयम् ॥ २७९ ॥

वादयञ्शूलपाणिर्वा कुपितोऽसौ सुरान्प्रति ।
पिनाकं तद्धनुर्दिव्यं कैलासे तिष्ठति स्वयम् ॥ २८० ॥

अथवा देवराजस्य भवने प्रतिभाति नः ।
नगान्वासयितुं क्षिप्रमशनेः शब्द उत्थितः ॥ २८१ ॥

अस्माभिरधुना नूनं लक्षितो धनुषः स्वनः ।
शार्ङ्गपाणिर्नृपश्रेष्ठ कुपितः सोऽसुरान्प्रति ॥ २८२ ॥

स्कन्द उवाच ।

इत्युक्तो मन्त्रिभिः सर्वैर्बन्धुभिर्हैहयाधिपः ।
शृण्वंस्तं धनुषः शब्दं तूर्णं प्राकारमारुहत् ॥ २८३ ॥

त्वरितस्तमथारुह्य प्रासादं गगनोपमम् ।
मन्त्रिभिः सहितो भूपः समन्तादवलोकयन् ॥ २८४ ॥

स ददर्शार्जुनः श्रीमान्द्विजमप्रतिमं ततः ।
जमदग्निसुतं रामं मण्डलीकृतकार्मुकम् ॥ २८५ ॥

बद्धगोधाङ्गुलित्राणं शितबाणं धनुर्धरम् ।
दृष्ट्वा तं सहसा रामं राजा विस्मयमागमत् ॥ २८६ ॥

प्राकाराग्रस्थितं रामो दृष्ट्वा तं हैहयाधिपम् ।
युद्धाय निर्भयो धन्वी करेणैव तमाह्वयत् ॥ २८७ ॥

राम उवाच ।

ब्रह्मघ्नार्जुन रे दुष्ट पश्य विप्रस्य मे बलम् ।
करानुत्पाटयिष्यामि तव यैर्ब्राह्मणो हतः ॥ २८८ ॥

अद्य मद्बाणभिन्नस्य पतितस्य तवार्जुन ।
भक्षयिष्यन्ति मांसानि गृध्रजम्बुकवायसाः ॥ २८९ ॥

श्वापदास्तव गात्राणि भक्षयन्तु तवाधुना ।
विमुक्तानि कुठारेण मया समरमूर्धनि ॥ २९० ॥

जमदग्नेरहं पुत्रो ब्रह्मार्थं त्वामसंशयम् ।
पश्यतां सर्वदेवानां घातयिष्यामि सायकैः ॥ २९१ ॥

मद्दृष्टिमार्गमाश्रित्य त्वं पापिष्ठ विमोक्ष्यसे ।
अद्यैव हनिष्यामि युद्धं देहि ममार्जुन ॥ २९२ ॥

स्कन्द उवाच ।

ततः परशुरामस्य तद्वाक्यमुरगोपमम् ।
श्रुत्वा चुकोप बलवाञ्शल्यविद्ध इवार्जुनः ॥ २९३ ॥

अनादृत्य तु तद्वाक्यं बलं मत्वार्जुनः स्वयम् ।
अशक्तमिति निश्चित्य रामं क्रुद्धोऽब्रवीदिदम् ॥ २९४ ॥

अर्जुन उवाच ।

गर्जितं ते वृथा मूढ यद्यो कस्ते पराक्रमः ।
कर्मणा दर्शयास्मासु किं त्वं बहु विकत्थसे ॥ २९५ ॥

नामरो योधयितुं शक्यः स्वयं रुद्रोऽपि संयुगे ।
पिनाकपाणिर्भगवान्किं पुनस्त्वं शिशुर्मृधे ॥ २९६ ॥

स्कन्द उवाच ।

इत्युक्तः परुषं तेन रामः सत्यपराक्रमः ।
घोरान्धकारमसृजद्बाणैः प्रच्छादयन्दिशः ॥ २९७ ॥

ततस्तां नगरीं रम्यामर्जुनस्य मुनीश्वरः ।
आग्नेयेनादहद्रामः शरेण क्रोधमूर्छितः ॥ २९८ ॥

ततो हाहाकृताः सर्वे दह्यमानाः समन्ततः ।
निर्ययुर्नगरात्तस्मान्नागरास्ते सहस्रशः ॥ २९९ ॥

अश्वैं रथैर्भटैर्नागैर्युद्धाय सहसार्जुनः ।
अगमद्यत्र रामोऽस्ति दृष्ट्वा रामपराक्रमम् ॥ ३०० ॥

ततस्तैः सचिवैस्तस्य रेणुकातनयो बली ।
शस्त्रास्त्रैर्निहतः शूरैर्न चचालाचलोपमः ॥ ३०१ ॥

स तानापततः क्रुद्धो धनुराकृष्य सायकैः ।
विद्धानपातयत्क्रुद्धः पतङ्गानिव पावकः ॥ ३०२ ॥

ततो विव्याध मातङ्गानिषुभिर्वेगवत्तरैः ।
पश्यतस्तस्य ताम्रामः पत्तींस्तुरगानपि ॥ ३०३ ॥

शरनिर्भिन्नसर्वाङ्गाः पदातिगजवाजिनः ।
निपेतुस्तत्क्षणाच्चूर्णं वज्रपातादिवाचलाः ॥ ३०४ ॥

इति न्यपातयद्बाणैः प्रहसन्निव भार्गवः ।
रामः प्रहरतां श्रेष्ठः सपताकान्रथानपि ॥ ३०५ ॥

केचिच्छिन्नशिरसः शरनिर्भिन्नविग्रहाः ।
निपेतुर्भूतले भग्नाः सैनिकास्ते गतासवः ॥ ३०६ ॥

हतैरश्वैर्भटैर्नागैर्योधैश्चैव पदातिभिः ।
अकरोत्तद्रणं रामो घोररूपं भयावहम् ॥ ३०७ ॥

ततः प्रावर्तत नदी शोणिताम्बुतरङ्गिणी ।
मेदमज्जाकर्दमिनी शब्दघोषवती च सा ॥ ३०८ ॥

तद्दृष्ट्वा निहतं सैन्यं रामेण स तदार्जुनः ।
शस्त्रास्त्रैरहनद्रामं रथमारुह्य सत्वरः ॥ ३०९ ॥

ततोऽभिगम्य नाराचैः प्रगृह्य विपुलं धनुः ।
विव्याध समरे रामं हृष्यन्हैहयाधिपः ॥ ३१० ॥

रामोऽपि लीलया चैकः सहस्रार्जुनमाहवे ।
अहनत्प्रसभं बाणैः पतङ्गमिव पावकः ॥ ३११ ॥

तत्रान्योन्यं रणे क्रुद्धौ तौ च रामार्जुनौ द्विजाः ।
जघ्नतुर्विविधैः शस्त्रैर्ज्वालाभिरिव पावकौ ॥ ३१२ ॥

स्तुत्वा नमस्कृत्य महेश्वरं तं
विघ्नेशरूपं प्रसभं मुनीन्द्राः ।
त्रैलोक्यमावृत्य जघान राम-
स्तं कार्तवीर्यं सगणं कुठारैः ॥ ३१३ ॥

रामश्च मातङ्गरथान्विनिघ्न-
न्विदारयंस्तान्कुपितः स रामः ।
जघान तं संयति कार्तवीर्यं
दन्तैरिवेभं गजराट् कुठारैः ॥ ३१४ ॥

रामं तं दुर्जयं मत्वा तदा स कुपितोऽर्जुनः ।
मुमोच शांभवीं शक्तिं शतघण्टानिनादिनीम् ॥ ३१५ ॥

सहस्रार्जुननिर्मुक्तामापतन्तीं त्रिभिः शरैः ।
रामश्चिच्छेद तां शक्तिं सुपर्णः पन्नगानिव ॥ ३१६ ॥

तत्कर्म विफलं दृष्ट्वा रोषाद्राममथार्जुनः ।
शूलेन चाहनचूर्णं मत्वा तं दुर्जयं रणे ॥ ३१७ ॥

तदप्यापातयच्छूलं शरेणैकेन लीलया ।
छित्त्वैकवीरातनयो महाशल्यं स भार्गवः ॥ ३१८ ॥

रथेनाकाशगेनैव तं सहस्रार्जुनो बली ।
धनूंष्याकृष्य बाणौघैस्तरसा राममाहनत् ॥ ३१९ ॥

रामकार्मुकनिर्मुक्तैरिषुभिर्वेगवत्तरैः ।
अर्जुनः प्रसभं भग्नैर्न चचालाचलोपमः ॥ ३२० ॥

रामस्तस्य रथे युक्तान्विव्याध लघुहस्तवान् ।
बाणैस्तमर्जुनं हत्वा चतुर्भिश्चतुरो हयान् ॥ ३२१ ॥

चतुश्चक्रसमायुक्तं वाजिभिः समलंकृतम् ।
स तमप्यहनद्बाणैः स्यन्दनं चाम्बरे स्थितम् ॥ ३२२ ॥

विरथः सहसोत्पत्य दुर्जयो हैहयाधिपः ।
मुमोच शक्तिमपरां रामं प्रत्यतिदुःसहाम् ॥ ३२३ ॥

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
तद्रामार्जुनयोर्युद्धं दृष्ट्वा ते विस्मयं ययुः ॥ ३२४ ॥

तामप्यतिबलो रामश्छित्त्वा तं स तदार्जुनम् ।
हृदि विव्याध नाराचैस्त्रिभिरत्यन्तदुःसहैः ॥ ३२५ ॥

स्कन्द उवाच ।

ततस्तं दुर्जयं मत्वा रेणुकातनयं रणे ।
निर्जघ्नुर्विविधैः शस्त्रै राजानस्ते सहस्रशः ॥ ३२६ ॥
एकैकेनेषुणा राम एकैकं रणमूर्धनि ।
भित्त्वा न्यपातयत्क्षिप्रं राजानं युगपद्बली ॥ ३२७ ॥
शिरांस्युर्व्यां समुत्पेतुः कुण्डलज्वलितानि च ।
छिन्नानि रामबाणैस्तै राज्ञां समरमूर्धनि ॥ ३२८ ॥
रणकङ्कणबद्धास्तेषां गदावलयान्विताः ।
बाहवस्तत्र दृश्यन्ते पञ्चशीर्षा इवोरगाः ॥ ३२९ ॥
गजास्ते गिरिसंकाशास्तुरङ्गाश्च पदातयः ।
रामसायकभिन्नाङ्गाः पेतुर्भूमौ गतासवः ॥ ३३० ॥
एवं निहत्य समरे वीरान्समरदुर्जयः ।
रेणुकातनयः क्रुद्धः प्रोवाचेदं वचोऽर्जुनम् ॥ ३३१ ॥

राम उवाच ।

किं पश्यसि रणं घोरं ब्रह्मघ्न कुलपांसन ।
अर्जुनवार्जुन प्राणान्ग्रहीष्यामि तवाहतम् ।
शिरस्येकेन बाणेन वक्षस्येकेन चार्जुन ॥ ३३२ ॥

स्कन्द उवाच ।

इत्युक्त्वा रत्नपुङ्खैस्तैरिषुभिर्वेगवत्तरैः ।
कार्तवीर्यं ततो रामो जघानोरसि पत्रिभिः ॥ ३३३ ॥
शिरस्येकेन बाणेन वक्षस्येकेन वीर्यवान् ।
हैहयाधिपतिं रामो विव्याध बहुभिः शरैः ॥ ३३४ ॥
ततः परशुमादाय कोपेनात्यन्तवीर्यवान् ।
रामः परशुना तेन कार्तवीर्यं जघान ह ॥ ३३५ ॥
रामेण विविधैः शस्त्रैर्हतः परशुनापि सः ।
न चचाल रणे वीरः कार्तवीर्यो न चुक्षुभे ॥ ३३६ ॥
ततः परशुना रामात्सहस्रार्जुनबाहवः ।
चिच्छेद लीलया रामो गरुडः पन्नगानिव ।
ततः परशुना क्षिप्रं दिव्यांस्तस्याच्छिनत्करान् ॥ ३३७ ॥

ततः शंभुप्रसादेन पुनस्तस्यार्जुनस्य ते ।
तत्क्षणादपरे तूर्णं युगपन्निर्ययुः कराः ॥ ३३८ ॥

तानप्यतिबलो रामः कार्तवीर्यकराद्भुतम् ।
स कुठारेण तेनैव चिच्छेद लघुहस्तवान् ॥ ३३९ ॥

छिन्नबाहुस्तेभ्यश्च निर्ययुः सहसापरे ।
छित्वा तानप्यसौ रामः पातयामास भूतले ॥ ३४० ॥

उत्थितानपि तानेव एकवीरात्मजो बली ।
कुठारेणैव चिच्छेद हैहयाधिपतेः करान् ॥ ३४१ ॥

तस्मिन्नेव क्षणे वायुर्जमदग्नेः सुतं प्रति ।
तूर्णमागत्य संग्रामे इदं वचनमब्रवीत् ॥ ३४२ ॥

लम्बोदरस्वरूपेण क्षिप्रं रामार्जुनस्य भोः ।
अभेद्यं हृदयं भिन्धि ततो मृत्युमवाप्स्यति ॥ ३४३ ॥

सुधारसमयं कुण्डमस्य राम सदा हृदि ।
तिष्ठत्यनुग्रहाच्छंभोरवध्यस्तेन चार्जुनः ॥ ३४४ ॥

स्कन्द उवाच ।

तेनैवमुक्तो रामस्तु भूत्वा लम्बोदरः स्वयम् ।
कुठारेणार्जुनस्याथ हृत्प्रदेशमथाहनत् ॥ ३४५ ॥

ततः परशुना तेन रामेणोरसि चार्जुनः ।
न्यपतद्भिन्नहृदयो वज्राहत इवाचलः ॥ ३४६ ॥

एतस्मिन्नन्तरे वीरे रामेण निहतेऽर्जुने ।
सायुज्यमगमद्विष्णोरर्जुनश्चात्तजीवितः ॥ ३४७ ॥

मृदङ्गतालवीणानामभवत्सहसा स्वनः ।
हाहाकारोऽपि सुमहान्समभून्मुनिसत्तमाः ॥ ३४८ ॥

उरस्याक्रम्य रामस्तु चरणेनार्जुनं बली ।
बाहूनुत्पाटयामास पितुर्वैरमनुस्मरन् ॥ ३४९ ॥

स्कन्द उवाच ।

ब्रह्मघ्न पश्य चाण्डाल यत्त्वयानपराधिनम् ।
हतं मत्पितरं दुष्ट तस्येदं कर्मणः फलम् ॥ ३५० ॥

इत्युक्त्वा हृदयं तस्य रामः सत्यपराक्रमः ।
पश्यतां सर्वदेवानां तत्पफाल महाङ्कुरैः ॥ ३५१ ॥

ततः परशुरामेण मथितान्हृदयाम्बुवैः ।
तस्य पीयूषसंयुक्तं सुस्राव रुधिरं बहु ॥ ३५२ ॥

स च्छिन्नहृदयस्यैव छिन्नबाहोर्मुनीश्वरः ।
करानुपास्य पित्रेऽयं प्रादात्तु रुधिराञ्जलिम् ॥ ३५३ ॥

एकविंशतिसंख्यानि युद्धमासीद्दिनानि तु ।
श्रीरामार्जुनयोर्विप्राः सर्वविस्मयकारकम् ॥ ३५४ ॥

एवं हत्वार्जुनं रामः संधाय निशितान्शरान् ।
अन्वधावत्स तान्हन्तुं सर्वानेवासुपान्रिपून् ॥ ३५५ ॥

परिव्राजकरूपेण केचित्पाखण्डिनो नृपाः ।
केचिद्रामभयाद्भीता बभूवुर्ब्रह्मचारिणः ॥ ३५६ ॥

केचित्क्षपणकाः केचिद्योगिनो ब्रह्मवादिनः ।
भस्मोद्धूलितसर्वाङ्गा वल्कलाजिनवाससः ।
बभूवुस्तापसाः केचिद्वनमागत्य तद्भयात् ॥ ३५७ ॥

एके च वैष्णवा जाता बभूवुर्नटनर्तकाः ।
केचिद्वैतालिकाश्चासन्राजानस्तद्भयार्दिताः ॥ ३५८ ॥

एवं समभयाद्भीता राजानः सर्व एव ते ।
नानावेषधरा आसंस्त्यक्त्वा वेषं स्वकीयकम् ॥ ३५९ ॥

ततः स कुपितो रामो नानावेषधरान्नृपान् ।
नीत्वा दुष्टारण्ये दीनान्विश्वस्तानपि चावधीत् ॥ ३६० ॥

धारयन्तः कराद्दुष्टान्प्रार्थयन्तोऽभयं नृपाः ।
छित्वा तेषां वधी रामो दत्तवानभयं तदा ॥ ३६१ ॥

हत्वारीं हैहयान्कोपात्पितुर्वैरमनुस्मरन् ।
कुठारेणापरान्रामो जघान नृपतीन्बलीन् ॥ ३६२ ॥

एकाकी निर्भयो रामो घातयन्नृपतींस्तदा ।
महीं बभ्राम तान्पश्यन्युगान्ताग्निसमप्रभः ॥ ३६३ ॥

नानादेशेषु गुहासु पर्वतेषु वनेषु च ।
स्थितान्शस्त्रभृतो रामः स्त्रीणां गर्भेषु संस्थितान् ॥ ३६४ ॥

नानाविधानि भगवान्समरे स रामो
युद्धानि यानि विदधे सह हैहयेन ।
संक्षिप्य तानि लिखितानि मया विचार्य
विस्तारभीरुमनसा विबुधाः क्षमध्वम् ॥ ३६५ ॥

दुष्टक्षेपकरो जगद्भयहरस्त्राणाय नारायणो
भूभारोद्धरणक्षमः समजनि त्रैलोक्यभूपामणिः ।
हत्वा हैहयमर्जुनं पितृवधात्क्रुद्धेन येनापरे
राजन्या विनिपातिताः क्षितितले त्रिःसप्तकृत्वो रणे ॥३६६॥

- - - - ᵕ - - ᵕ ᵕ ᵕ ᵕ ᵕ शिरसि नृपान्नागलोकादि गत्वा
दत्तात्रेयाश्रमे यः स्वयमकृत महायज्ञमग्र्यं मुनीन्द्रः ।
तस्मिन्सत्कृत्य भूपामणि ᵕ ᵕ ᵕ धरां दक्षिणां कश्यपाय
प्रादादेव त्रिलोकीपतिरतुलतयोनैष्ठिको वः पुनातु ॥ ३६७ ॥

इति श्रीपरशुरामावतारः ॥

[ अवतारसौख्ये परशुरामावतारो नाम षष्ठो हर्षः ॥ ]

२.७

अथ श्रीरामावतारः ॥

शृणु राजन्प्रवक्ष्यामि प्रादुर्भावं हरेः शुभम् ।
निहतो रावणो येन सगणो देवकण्टकः ॥ १ ॥

ब्रह्मणो मानसः पुत्रः पुलस्त्योऽभूत्पुरा मुनिः ।
एतस्य विश्रवा नाम पुत्रोऽभून्न तु राक्षसः ॥ २ ॥

तस्माज्जातो महावीर्यो रावणो लोकरावणः ।
तपसा महता युक्तः स तु लोकानुपाद्रवत् ॥ ३ ॥

माली सुमाली किल माल्यवांश्च
सुकेशपुत्रा विबुधान्द्विषन्तः ।
रक्षोधिपाः पौरुषवीतशङ्का
लङ्कानगर्यामधिपा बभूवुः ॥ ४ ॥

एते श्रीपुरुषोत्तमेन जगतां त्राणाय युद्धे हता
भीताः केऽपि पुरीं विहाय सहसा पातालमूले ययुः ।
लङ्कायां कमलोद्भवस्य धनभा राजा कुबेरोऽभव-
त्पातालादथ कैकसीं निजसुतां नीत्वा सुमाली ययौ ॥ ५ ॥

दृष्ट्वा श्रियं विश्रवसः स तस्य
स्वयं विमृश्य स्वसुतां सुमाली ।
उवाच चाटु प्रणयादरेण
पुत्रि प्रियं विश्रवसं वृणीष्व ॥ ६ ॥

दत्त्वा तस्मै सुतां तामयमथ निरगाद्रावणोऽस्याः सुतोऽभू-
त्सायंकालप्रसङ्गात्समजनि तनयः कुम्भकर्णो द्वितीयः ।
दिक्पाला नाममात्रादतुलबलवतोरेतयोर्नाकनार्यो
ध्वंसद्धम्मिल्लमल्लीमुखरमधुलिहः सद्म सद्यस्त्यजन्ति ॥ ७ ॥

विभीषणोऽस्यास्तनयस्तृतीयो
यो माननीयो भगवत्प्रियाणाम् ।
एषां स्वसा शूर्पणखा तथासी-
च्चकास्ति रामायणसूचिकेयम् ॥ ८ ॥

अथ नृसिंहपुराणे-

सेन्द्रा देवा जितास्तेन गन्धर्वाः किंनरास्तथा ।
यक्षाश्च दानवाश्चैव तेन राजन्विनिर्जिताः ॥ ९ ॥

स्त्रियश्चैव स्वरूपिण्यो हृतास्तेन दुरात्मना ।
देवादीनां नृपश्रेष्ठ रत्नानि विविधानि च ॥ १० ॥

रणे कुबेरं निर्जित्य रावणो बलदर्पितः ।
तत्पुरीं जगृहे लङ्कां विमलं चापि पुष्पकम् ॥ ११ ॥

तस्यां पुर्यां दशग्रीवो रक्षसामधिपोऽभवत् ।
पुत्राश्च बहवस्तस्य बभूवुरमितौजसः ॥ १२ ॥

राक्षसाश्च पिशाचाश्च महाबलपराक्रमाः ।
अनेककोट्यो राजंल्लङ्कायां निवसन्ति ते ॥ १३ ॥

देवानृषीन्मनुष्यांश्च विद्याधरगणानपि ।
यक्षांश्चैव च ते सर्वे घातयन्ति दिवानिशम् ॥ १४ ॥

संत्रस्तं तद्भयादेव जगदासीच्चराचरम् ।
दुःखाभिभूतमत्यर्थं सर्वभूतं नराधिप ॥ १५ ॥

---

9 The quotation from the नृसिंहपुराण could not be traced The text of the रामावतार seems to be abridged by the compiler in highly corrupt Sanskrit.

एतस्मिन्नेव काले तु देवाः सेन्द्रा महर्षयः ।
सिद्धविद्याधराश्चैव गन्धर्वाः किंनरास्तथा ॥ १६ ॥

गुह्यका भुजगा यक्षा ये चान्ये स्वर्गवासिनः ।
ब्रह्माणमग्रतः कृत्वा शंकरं च नराधिप ॥ १७ ॥

ते सर्वे द्रुतविक्रान्ताः क्षीराब्धेस्तटमुत्तमम् ।
तत्राराध्य हरिं देवं तस्थुः प्राञ्जलयः सुराः ॥ १८ ॥

ब्रह्मा च विष्णुमाराध्य गन्धपुष्पादिभिः शुभैः ।
प्राञ्जलिः प्रयतो भूत्वा नारसिंहमथास्तुवत् ॥ १९ ॥

ब्रह्मोवाच ।

नमः क्षीराब्धिवासाय गोविन्दाय नमो नमः ।
नमोऽरविन्दपादाय पद्मनाभाय विष्णवे ॥ २० ॥

भक्तार्चितसुपादाय नमो भक्तप्रियाय ते ।
शुभाङ्गाय सुनेत्राय माधवाय नमो नमः ॥ २१ ॥

सुकेशाय सुनासाय देवाय गोविन्दाय च ।
नमः क्षीराब्धिकल्लोलस्पृष्टगात्राय शार्ङ्गिणे ॥ २२ ॥

सुकेशाय सुनासाय सुललाटाय चक्रिणे ।
सुवक्त्राय सुकर्णाय श्रीधराय नमो नमः ॥ २३ ॥

सुबाहवे सुगण्डाय सुकण्ठाय नमो नमः ।
सुवक्षसे सुवेषाय पद्मनाभाय ते नमः ॥ २४ ॥

सुभ्रुवे चारुदेहाय चारुदन्ताय शङ्खिने ।
चारुजङ्घाय दिव्याय केशवाय नमो नमः ॥ २५ ॥

सुमुखाय सुकेशाय सुविद्याय गदाभृते ।
धर्मप्रियाय देवाय वामनाय नमो नमः ॥ २६ ॥

असुरघ्नाय चोग्राय रक्षोघ्नाय नमो नमः ।
देवानामार्तिनाशाय भीमकर्मकृते सदा ।
नमस्ते लोकनाथाय रावणान्तकृते नमः ॥ २७ ॥

मार्कण्डेय उवाच ।

इति स्तुतो हृषीकेशस्तुतोष परमेष्ठिना ।
स्वरूपं दर्शयित्वा तु पितामहमुवाच ह ॥ २८ ॥

दृष्ट्वा श्रियं विश्रवसः स तस्य
स्वयं विमृश्य स्वसुतां सुमाली ।
उवाच चाटु प्रणयादरेण
पुत्रि प्रियं विश्रवसं वृणीष्व ॥ ६ ॥

दत्त्वा तस्मै सुतां तामयमथ निरगाद्रावणोऽस्याः सुतोऽभू-
त्सायंकालप्रसङ्गात्समजनि तनयः कुम्भकर्णो द्वितीयः ।
दिक्पाला नाममात्रादतुलबलवतोरेतयोर्नाकनार्यो
धंसद्धम्मिल्लमल्लीमुकुरमधुलिहः सद्म सद्यस्त्यजन्ति ॥ ७ ॥

विभीषणोऽस्यास्तनयस्तृतीयो
यो माननीयो भगवत्प्रियाणाम् ।
एषां स्वसा शूर्पणखा तथासी-
च्चकास्ति रामायणसूचिकेयम् ॥ ८ ॥

अथ नृसिंहपुराणे–

सेन्द्रा देवा जितास्तेन गन्धर्वाः किंनरास्तथा ।
यक्षाश्च दानवाश्चैव तेन राजन्विनिर्जिताः ॥ ९ ॥

स्त्रियश्चैव स्वरूपिण्यो हृतास्तेन दुरात्मना ।
देवादीनां नृपश्रेष्ठ रत्नानि विविधानि च ॥ १० ॥

रणे कुबेरं निर्जित्य रावणो बलदर्पितः ।
तत्पुरीं जगृहे लङ्कां विमलं चापि पुष्पकम् ॥ ११ ॥

तस्यां पुर्यां दशग्रीवो रक्षसामधिपोऽभवत् ।
पुत्राश्च बहवस्तस्य बभूवुरमितौजसः ॥ १२ ॥

राक्षसाश्च पिशाचाश्च महाबलपराक्रमाः ।
अनेककोटयो राजँल्लङ्कायां निवसन्ति ते ॥ १३ ॥

देवानृषीन्मनुष्यांश्च विद्याधरगणानपि ।
यक्षांश्चैव च ते सर्वे घातयन्ति दिवानिशम् ॥ १४ ॥

संत्रस्तं तद्भयादेव जगदासीच्चराचरम् ।
दुःखाभिभूतमत्यर्थं सर्वभूतं नराधिप ॥ १५ ॥

---

9 The quotation from the नृसिंहपुराण could not be traced The text of the रामावतार seems to be abridged by the compiler in highly corrupt Sanskrit.

एतस्मिन्नेव काले तु देवाः सेन्द्रा महर्षयः ।
सिद्धविद्याधराश्चैव गन्धर्वाः किंनरास्तथा ॥ १६ ॥

गुह्यका भुजगा यक्षा ये चान्ये स्वर्गवासिनः ।
ब्रह्माणमग्रतः कृत्वा शंकरं च नराधिप ॥ १७ ॥

ते सर्वे द्रुतविक्रान्ताः क्षीराब्धेस्तटमुत्तमम् ।
तत्राराध्य हरिं देवं तस्थुः प्राञ्जलयः सुराः ॥ १८ ॥

ब्रह्मा च विष्णुमाराध्य गन्धपुष्पादिभिः शुभैः ।
प्राञ्जलिः प्रयतो भूत्वा नारसिंहमथास्तुवत् ॥ १९ ॥

ब्रह्मोवाच ।

नमः क्षीराब्धिवासाय गोविन्दाय नमो नमः ।
नमोऽरविन्दपादाय पद्मनाभाय विष्णवे ॥ २० ॥

भक्तार्चितसुपादाय नमो भक्तप्रियाय ते ।
शुभाङ्गाय सुनेत्राय माधवाय नमो नमः ॥ २१ ॥

सुकेशाय सुनासाय देवाय गोविन्दाय च ।
नमः क्षीराब्धिकल्लोलस्पष्टमात्राय शार्ङ्गिणे ॥ २२ ॥

सुकेशाय सुनासाय सुललाटाय चक्रिणे ।
सुवक्त्राय सुकर्णाय श्रीधराय नमो नमः ॥ २३ ॥

सुबाहवे सुगण्डाय सुकण्ठाय नमो नमः ।
सुवक्षसे सुवेषाय पद्मनाभाय ते नमः ॥ २४ ॥

सुभ्रुवे चारुदेहाय चारुदन्ताय शङ्खिने ।
चारुजङ्घाय दिव्याय केशवाय नमो नमः ॥ २५ ॥

सुमुखाय सुकेशाय सुप्रियाय गदाभृते ।
धर्मप्रियाय देवाय वामनाय नमो नमः ॥ २६ ॥

असुरघ्नाय चोग्राय रक्षोघ्नाय नमो नमः ।
देवानामार्तिनाशाय भीमकर्मकृते सदा ।
नमस्ते लोकनाथाय रावणान्तकृते नमः ॥ २७ ॥

मार्कण्डेय उवाच ।

इति स्तुतो हृषीकेशस्तुतोष परमेष्ठिना ।
स्वरूपं दर्शयित्वा तु पितामहमुवाच ह ॥ २८ ॥

किमर्थं तु सुरैः सार्धमागतोऽत्र पितामह ।
तत्कार्यं ब्रूहि मे ब्रह्मन्यदर्थं संस्तुतस्त्वया ॥ २९ ॥

इत्युक्तो देवदेवेन विष्णुना प्रभविष्णुना ।
सर्वदेवगणैः सार्धं ब्रह्मा प्राह जनार्दनम् ॥ ३० ॥

नाशितं तु जगत्सर्वं रावणेन दुरात्मना ।
सेन्द्राः पराजितास्तेन बहुशो राक्षसा विभो ॥ ३१ ॥

राक्षसैर्भक्षिता मर्त्या यज्ञाश्चैव विदूषिताः ।
देवकन्या हृतास्तेन बलाच्छतसहस्रशः ॥ ३२ ॥

त्वामृते पुण्डरीकाक्ष रावणस्य वधं प्रति ।
न समर्था यतो देवास्त्वमतस्तद्वधं कुरु ॥ ३३ ॥

इत्युक्तो ब्रह्मणा विप्र ब्रह्माणमिदमब्रवीत् ।
शृणुष्वावहितो ब्रह्मन्यद्वदामि हितं वचः ॥ ३४ ॥

सूर्यवंशोद्भवः श्रीमान्राजाभूद्भुवि वीर्यवान् ।
दशरथेति विख्यातस्तस्य पुत्रो भवाम्यहम् ॥ ३५ ॥

रावणस्य विनाशाय चतुर्धांशेन सत्तम ।
स्वांशैर्वानररूपेण सकला देवतागणाः ।
अवन्यामवतीर्णाः स्युः स्यादेवं रावणक्षयः ॥ ३६ ॥

इत्युक्तो देवदेवेन ब्रह्मा लोकपितामहः ।
देवाश्च तं प्रणम्याथ मेरुपृष्ठं तदा ययुः ।
स्वांशैर्वानररूपेण अवतेरुश्च भूतले ॥ ३७ ॥

अथापुत्रो दशरथो मुनिभिर्वेदपारगैः ।
इष्टिं तु कारयामास पुत्रप्राप्तिकरीं नृपः ॥ ३८ ॥

ततः सौवर्णपात्रस्थं हविरादाय सत्वरम् ।
वह्निकुण्डात्समुत्तस्थौ दूतो देवैः प्रचोदितः ॥ ३९ ॥

आदाय मुनयो मन्त्राच्चरुपिण्डद्वयं शुभम् ।
ददुः कौसल्यकैकेय्योर्द्वे पिण्डे मन्त्रमन्त्रिते ॥ ४० ॥

ते पिण्डप्राशने काले सुमित्राया महामते ।
पिण्डाभ्यामल्पमल्पं तु कैकेयी कौसल्या च प्रयच्छतः ॥ ४१ ॥

ततस्ताः प्राशयामासू राजपत्न्यो यथाविधि ।
पिण्डान्देवकृतान्प्राश्य प्रापुर्गर्भाननिन्दिताः ॥ ४२ ॥

एवं विष्णुर्दशरथाज्जातस्तस्य त्रिपु त्रिपु ।
स्त्रीष्वँलोकहितार्थाय चतुर्धा जगतीपते ॥ ४३ ॥

रामश्च लक्ष्मणश्चैव भरतः शत्रुघ्न एव च ।
जातकर्मादिकं प्राप्य संस्कारं मुनिसंस्कृतम् ॥ ४४ ॥

मन्त्रापिण्डवशाद्योगं प्राप्य चेरुस्तथार्भकाः ।
रामलक्ष्मणौ नद्वालैः सह नित्यं विचेरतुः ॥ ४५ ॥

जन्मादिकृतसंस्कारौ पितुः प्रीतिकरौ नृप ।
ववृधाते महावीर्यौ श्रुतशब्दादिलक्षणौ ॥ ४६ ॥

एतस्मिन्नेव काले तु विश्वामित्रो महातपाः ।
यागेन यष्टुमारेभे विधितो मधुसूदनम् ।
स तु विघ्नितयागोऽभूद्राक्षसैर्बहुशः पुरा ॥ ४७ ॥

नेतुं स यज्ञरक्षार्थं संप्राप्तो रामलक्ष्मणौ ।
विश्वामित्रो मुनिश्रेष्ठस्तत्पितुर्मन्दिरं शुभम् ॥ ४८ ॥

दशरथस्तु तं दृष्ट्वा प्रत्युत्थाय महामतिः ।
अर्घपाद्यादिविधिना प्रवेश्य तमपूजयत् ॥ ४९ ॥

संपूजितो मुनिः प्राह राजानं रामसंनिधौ ।
शृणु राजन्दशरथ यदर्थमहमागतः ।
तत्कार्यं नृपशार्दूल कथयामि तवाग्रतः ॥ ५० ॥

राक्षसैस्त्रासितो यागो बहुशो मे दुरासदैः ।
यज्ञस्य रक्षणार्थं मे देहि त्वं रामलक्ष्मणौ ॥ ५१ ॥

दशरथोऽथ तच्छ्रुत्वा विश्वामित्रवचो नृपः ।
विषण्णवदनो भूत्वा विश्वामित्रमुवाच ह ॥ ५२ ॥

बालाभ्यां मम पुत्राभ्यां किं ते कार्यं महामुने ।
अहं त्वया सहागत्य यत्नाद्रक्षामि ते मखम् ॥ ५३ ॥

राज्ञस्तु वचनं श्रुत्वा राजानं मुनिरब्रवीत् ।
रामेणैव हि ते साध्या न त्वया राक्षसा नृप ।
सुतं मे देहि रामं त्वं न चिन्तां कर्तुमर्हसि ॥ ५४ ॥

इत्युक्तो मुनिना तेन विश्वामित्रेण धीमता ।
तूष्णीं स्थित्वा क्षणं राजा तद्भीत्या समुवाच ह ॥ ५५ ॥

यद्ब्रवीषि मुनिश्रेष्ठ प्रसन्नस्त्वं निबोध मे ।
अज्ञो रामस्तथाप्येनमहं दास्ये सहानुजम् ॥ ५६ ॥

किं त्वस्य जननी ब्रह्मन्न दृष्ट्वैनं मरिष्यति ।
अतोऽहं चतुरङ्गेण बलेन सहितो मुने ।
आगत्य राक्षसान्हन्मीत्येवं मे मनसि स्थितम् ॥ ५७ ॥

विश्वामित्रः पुनः प्राह राजानममितौजसम् ।
नाज्ञो रामो नृपश्रेष्ठ सर्वज्ञः समरे तु सः ॥ ५८ ॥

शेषनारायणावेतौ तव पुत्रौ न संशयः ।
दुष्टानां निग्रहार्थाय शिष्टानां पालनाय च ।
अवतीर्णौ न संदेहो गृहे तवावनीश्वर ॥ ५९ ॥

न मात्रा न त्वया राजञ्शोकः कार्योऽत्र नाण्वपि ।
रामात्मकृतयागोऽहमर्पयिष्यामि ते सुतौ ॥ ६० ॥

इत्युक्तो दशरथस्तेन विश्वामित्रेण धीमता ।
तच्छापभीतो मनसा नीयतामित्यभाषत ॥ ६१ ॥

कृच्छ्रात्पित्रा विनिर्मुक्तं राममादाय सानुजम् ।
गन्तुं सिद्धाश्रमं राजन्स प्रतस्थे च कौशिकः ॥ ६२ ॥

तं प्रस्थितमथालोक्य सभार्यः स नृपः पुनः ।
अनुव्रज्याब्रवीदेतद्वचो दशरथस्तदा ॥ ६३ ॥

अपुत्रोऽहं पुरा ब्रह्मन्बहुभिः काम्यकर्मभिः ।
मुनिप्रसादादधुना पुत्रवानास्मि सत्तम ॥ ६४ ॥

न सहे तद्वियोगात्तु मातरश्च विशेषतः ।
त्वमेव जानासि मुने नीत्वा शीघ्रं प्रयच्छ मे ॥ ६५ ॥

इत्युक्त्वा प्रेषयामास रामं लक्ष्मणसंयुतम् ।
अनिच्छन्नपि राजासौ मुनिशापभयान्नृप ॥ ६६ ॥

विश्वामित्रस्ततो गृह्य अयोध्याया ययौ शनैः ।
सरय्वास्तीरमासाद्य गच्छन्नेव स कौशिकः ।
तयोः प्रीत्या स राजेन्द्र द्वे विद्ये प्रथमं ददौ ॥ ६७ ॥

बलामतिबलां चैव समन्त्रे तौ ससंग्रहे ।
क्षुत्पिपासोपशमने पुनश्चैव महामतिः ॥ ६८ ॥

अस्त्रग्राममशेषं च शिक्षयित्वा तु तौ तदा ।
आश्रमाणि च दिव्यानि मुनीनां भावितात्मनाम् ॥ ६९ ॥

दर्शयित्वा चानामयपुण्यस्थानेषु सत्तमः।
गङ्गामुत्तीर्य शोणं च तीरमासाद्य सत्तमः।
मुनिधार्मिकसिद्धांश्च पश्यन्तौ रामलक्ष्मणौ॥ ७०॥

मुनिभ्यश्च वरान्प्राप्य तेन नीतौ नृपात्मजौ।
ताडकाया वनं घोरं यमवक्त्रमिवापरम्॥ ७१॥

गतौ तत्र नृपश्रेष्ठ विश्वामित्रो महातपाः।
रामसक्लिष्टकर्माणमिदं वचनमब्रवीत्॥ ७२॥

राम राम महाबाहो ताडका नाम राक्षसी।
रावणस्य नियोगेन वसत्यस्मिन्महावने॥ ७३॥

तया मनुष्या बहवो मुनिपुत्रा मृगास्तथा।
घातिता भक्षिताश्चैव तस्मात्तां जहि सत्तम॥ ७४॥

इत्येवमुक्तो मुनिना रामः सस्मितमब्रवीत्।
कथं हि स्त्रीवधं कुर्यामहमद्य महामुने।
स्त्रीवधे तु महत्पापं प्रवदन्ति मनीषिणः॥ ७५॥

इति रामवचः श्रुत्वा विश्वामित्र उवाच तम्।
अस्यास्तु निधनाद्राम जनाः सर्वे निराकुलाः।
भवन्ति सततं तस्मात्तस्याः पुण्यप्रदो वधः॥ ७६॥

इत्येवंवादिनि मुनौ विश्वामित्रे निशाचरी।
आगता सा महाघोरा ताडका विकृतानना॥ ७७॥

शरं संधाय वेगेन तेन तस्या उरःस्थलम्।
विपाटितं द्विधा राजन्सा पपात ममार च॥ ७८॥

घातयित्वा तु तामेवं तावानीय मुनिस्तुतौ।
सिद्धाश्रमं महाभाग नानाऋषिनिषेवितम्॥ ७९॥

नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम्।
नानानिर्झरतोयाढ्यं विन्ध्यशैलान्तरस्थितम्।
शाकमूलफलोपेतं तं तु सिद्धाश्रमं स्वकम्॥ ८०॥

विश्वामित्र उवाच।

एष सिद्धाश्रमो राम प्रसिद्धो यो जगत्त्रये।
अत्र यागो मया कार्यः सम्यक्संरक्षणात्तव॥ ८१॥

राम उवाच ।

कुरु यागं मुने त्वं तु रक्षके मय्यवस्थिते ।
न कश्चिद्यागविघ्नं हि करिष्यत्यत्र सांप्रतम् ॥ ८२ ॥

विश्वामित्रस्ततो यागमृत्विग्भिर्मुनिभिः सह ।
प्रारभद्धान्यमधान्याच्छ्रद्धाविधिसमन्वितः ॥ ८३ ॥

उत्क्रम्य कार्मुकं तस्थौ रामस्तत्र सलक्ष्मणः ।
अनिद्र एव षड्रात्रं स संरक्षन्मुनेः क्रतुम् ॥ ८४ ॥

काले चाभ्यागता तस्मिन् षष्ठेऽहनि महात्मनः ।
स्थापयांचक्रिरे वेदीं मुनयः संशितव्रताः ॥ ८५ ॥

मन्त्रार्थवांश्च विविधैः स यज्ञः समपद्यत ।
प्रजज्वाल च सा वेदी सोपाध्यायसमाहिता ॥ ८६ ॥

अथाकाशे समभवत्सहसैव महास्वनः ।
नीलाम्बुदस्य गगने प्रावृषीवाभिगर्जितः ॥ ८७ ॥

अथ मायां प्रकुर्वाणौ राक्षसावभ्यधावताम् ।
मारीचश्च सुबाहुश्च तयोश्चाथ भटास्तथा ॥ ८८ ॥

स तानापततो दृष्ट्वा रुधिरौघप्रवर्षिणः ।
उवाच लक्ष्मणं वाक्यं रामो राजीवलोचनः ॥ ८९ ॥

पश्य लक्ष्मण मारीचं महाशनिसमस्वनम् ।
सपदानुगमायान्तं सुबाहुं च निशाचरम् ॥ ९० ॥

मानवास्त्रं ततो रामः प्रगृह्यास्ते निशाचरम् ।
मारीचोरसि चिक्षेप नातिकोपसमन्वितः ॥ ९१ ॥

ततो रामेण चैवासौ राक्षसो धरणीतले ।
असृक्स्नाय्वस्थि वर्षन्तं मारीचो भल्लकेन तु ॥ ९२ ॥

प्रतीक्ष्य नीत उदधिं यथा पूर्णार्णवं घनाः ।
शेषांश्च हतवान्रामो लक्ष्मणश्च निशाचरान् ॥ ९३ ॥

रामेण रक्षितमखो विश्वामित्रो महायशाः ।
समाप्य यागं विधिवत्पूजयामास च द्विजान् ॥ ९४ ॥

सदस्यानपि संपूज्य यथाचारमरिंदम ।
रामं च लक्ष्मणं चैव पूजयामास भक्तितः ॥ ९५ ॥

ततो देवगणास्तुष्टा यज्ञभागेन सत्तम ।
ववर्षुः पुष्पवर्षं तु रामदेवस्य मूर्धनि ॥ ९६ ॥

निवार्य राक्षसभयं कारयित्वा त्र तन्मखम् ।
श्रोता नानाकथानां तु रामो भ्रातृसमन्वितः ॥ ९७ ॥

तेन नीतो विनीतात्मा अहल्या यत्र तिष्ठते ।
व्यभिचारान्महेन्द्रेण संशप्ता भर्तृणा पुरा ॥ ९८ ॥

पाषाणभूता राजेन्द्र तस्य रामस्य दर्शनात् ।
अहल्या शापनिर्मुक्ता आगता गोतमं प्रति ॥ ९९ ॥

विश्वामित्रस्ततस्तस्य चिन्तयामास वै क्षणम् ।
कृतदारो महादेवो रामं कमललोचनम् ॥ १०० ॥

पित्रोरर्थं इतो यास्ये जनकस्य निवेशनम् ।
स्वयंवरश्च सीतायाः सुताया वर्ततेऽधुना ॥ १०१ ॥

इति संचिन्त्य तौ गृह्य विश्वामित्रो महातपाः ।
शिष्यैः परिवृतोऽनेकैर्जगाम मिथिलां प्रति ॥ १०२ ॥

नानादेश्या अथायाता जनकस्य निवेशनम् ।
राजपुत्रा महावीर्याः पूर्वं सीताभिकाङ्क्षिणः ॥ १०३ ॥

तान्दृष्ट्वा पूजयित्वा तु जनकस्तु यथार्हतः ।
यत्सीतया सहोत्पन्नं धनुर्माहेश्वरं महत् ॥ १०४ ॥

अर्चितं चित्रमालाभी राज्यशोभासमन्वितम् ।
रङ्गे महति विस्तीर्णे स्थापयामास तद्वचः (?) ॥ १०५ ॥

उवाच च नृपान्सर्वांन्गिरोच्चैर्जनको महान् ।
आकर्षणादिदं येन धनुर्भग्नं नृपात्मजाः ।
तस्येयं धर्मतो भार्या सीता सर्वत्र शोभना ॥ १०६ ॥

इत्येवं श्राविते तेन जनकेन महात्मना ।
क्रमादादाय ते यावन्मज्यं कर्तुं यथारभन् ॥ १०७ ॥

धनुषा ताडिताः सर्वे क्रमात्तेन महीतले ।
विधूपयानिता (?) राजन्विलक्षास्तत्र पार्थिवाः ॥ १०८ ॥

तेषु भग्नेषु जनकस्तद्धनुः शांभवं महत् ।
संस्थाप्य स्थितवान्धीरो वीरागमनकाङ्क्षितः ॥ १०९ ॥

विश्वामित्रस्ततः प्राप्तो मिथिलाधिपतेर्मखम् ।
जनकोऽपि च तं दृष्ट्वा विश्वामित्रं गृहागतम् ।
रामलक्ष्मणसंयुक्तं शिष्यैश्चानुगतं तदा ॥ ११० ॥

तं पूजयित्वा विधिवत्प्राह विप्रार्थयाजिनम् ।
रामं रमापतेश्चापि लावण्यादिगुणैर्युतम् ॥ १११ ॥

शीलाचरणगुणोपेतं लक्ष्मणं स महामतिम् ।
पूजयित्वा यथान्यायं जनकः प्रीतमानसः ॥ ११२ ॥

इति श्रुत्वा वचस्तस्य मुनिराह महामतिः ।
एष रामो महाराज विष्णुः साक्षाच्छ्रियः पतिः ॥ ११३ ॥

रक्षार्थं विप्रानां तु जातो दशरथान्नृप ।
अस्मै सीतां प्रयच्छ त्वं साध्वीं कन्यामिमां स्थिताम् ॥ ११४ ॥

अस्या विवाहे राजेन्द्र अङ्गमङ्गमधायितः (?) ।
तदानेयं भवधनुर्वृतमत्र नराधिप ॥ ११५ ॥

तथेत्युक्त्वा च तं राजा भवचापं तदाद्भुतम् ।
अनेकभूभुजां मध्ये स्थापयामास पूर्ववत् ॥ ११६ ॥

ततो दशरथसुतो विश्वामित्रेण चोदितः ।
तेषां मध्ये समुत्थाय रामः कमललोचनः ॥ ११७ ॥

प्रणम्य देवान्विप्रांश्च धनुरादाय तत्तदा ।
सज्जं कृत्वा महाबाहुर्ज्याघोषमकरोत्तदा ॥ ११८ ॥

ततस्ते क्षत्रियाः क्रुद्धा राममासाद्य यत्नतः ।
मुमुचुः शरजालानि तर्जयन्तोऽपि पार्थिवाः ॥ ११९ ॥

तान्निरीक्ष्य ततो रामो धनुरादाय वेगवान् ।
ज्याघोषतलघोषाभ्यां कम्पयामास तान्नृपान् ॥ १२० ॥

चिच्छेद शरजालानि तेषां शस्त्रैरथान्तरे ।
धनूंषि च पताकाश्च रामश्चिच्छेद लीलया ॥ १२१ ॥

संनह्य तुमुलं सर्वे मिथिलाधिपतिः स्थितः ।
भ्रातरश्च रणेऽरक्षन्पार्ष्णिग्राहो बभूव ह ॥ १२२ ॥

लक्ष्मणश्च महावीरो विद्राव्य ह्यखिलान्नृपान् ।
हस्त्यश्वं जगृहे तेषां स्यन्दनानि बहूनि च ॥ १२३ ॥

वाहनानि परित्यज्य पलायनपरान्नृपान् ।
तान्निहन्तुं च धावन्तं पृष्ठतो लक्ष्मणस्तदा ।
मिथिलाधिपतिस्तं च वारयामास कौशिकः ॥ १२४ ॥

जितसेनं महाबाहुं रामं भ्रातृसमन्वितम् ।
आदाय प्रविवेशाथ जनकस्तु गृहं स्वकम् ।
दूतांश्च प्रेषयामास तदा दशरथाय सः ॥ १२५ ॥

श्रुत्वा दूतमुखात्सर्वं विदितार्थः स पार्थिवः ।
सभार्यः ससुतः श्रीमान्हस्त्यश्वरथवाहनः ।
मिथिलामाजगामाशु स्वबलेन समन्वितः ॥ १२६ ॥

जनकोऽपि तस्य सत्कारं कृत्वा च ससुतस्ततः ।
विधिवद्वीर्यशुल्कां तां ददौ रामाय पार्थिवः ॥ १२७ ॥

अपराश्च सुतास्तस्य रूपवत्यः स्वलंकृताः ।
लक्ष्मणादिभ्यस्त्रिभ्यस्तु सत्कन्या विधिवद्ददौ ॥ १२८ ॥

एवं कृतविवाहोऽसौ रामः कमललोचनः ।
भ्रातृभिर्मातृभिः सार्धं पित्रा बलवता सह ।
दिनानि कतिचित्तत्र स्थितो विविधभोजनैः ॥ १२९ ॥

ततोऽयोध्यां पुरीं गन्तुमुत्सुकं स च तं नृपम् ।
दृष्ट्वा दशरथं राजा सीतायाः प्रददौ वसु ॥ १३० ॥

रत्नानि दिव्यानि बहूनि दत्वा
रामाय वस्त्राण्यतिशोभनानि ।
हस्त्यश्वदासानपि कर्मयोग्या-
न्दासीजनांश्च प्रवराः स्त्रियश्च ॥ १३१ ॥

सीतां सुशीलां बहुरत्नभूषितां
रथं समारोप्य सुतां सुरूपाम् ।
देवादिघोषैर्बहुमङ्गलैश्च
संप्रेषयामास स पार्थिवो बली ॥ १३२ ॥

प्रेषयित्वा सुतां दिव्यां समर्प्य दशरथे स्नुषाम् ।
विश्वामित्रं नमस्कृत्य जनकः संनिवृत्तवान् ॥ १३३ ॥

जनकपत्न्यो महाभागा शिक्षयित्वा सुतास्तदा ।
श्वश्रूणामर्पयित्वा [ च ] निवर्त्य विविशुः पुरम् ॥ १३४ ॥

ततस्तु रामं गच्छन्तमयोध्यां स्वयलान्वितम् ।
श्रुत्वा परशुरामोऽसौ पस्थाने स रुरोध च ॥ १३५ ॥

तं दृष्ट्वा दीनवदनाः सर्वे ते राजपूरुषाः ।
बभूवुर्दशरथश्चापि दुःखशोकपरिप्लुतः ।
सभार्यः सपरीवारो भार्गवस्य भयान्नृपः ॥ १३६ ॥

ततोऽब्रवीज्जनान्सर्वान्दशरथं च सुदुःखितम् ।
वसिष्ठश्चोर्जिततपाः प्रामगान्स पितामहः ॥ १३७ ॥

युष्माभिरत्र रामस्य न दुःखं कार्यमण्वपि ।
पित्रा वा मातृभिर्वापि अन्यैः परिजनैरपि ॥ १३८ ॥

अयं हि नृपते रामः साक्षाद्विष्णुश्च ते गृहे ।
जगतः पालनार्थाय जन्म प्राप्तो न संशयः ॥ १३९ ॥

इत्युक्तो भार्गवो रामो राममाहाग्रतः स्थितम् ।
त्यज त्वं रामसंज्ञां तु मया वा संयुगं कुरु ॥ १४० ॥

इत्युक्तो राघवः प्राह भार्गवं तं पथि स्थितम् ।
रामसंज्ञा तु न त्याज्या त्वया योत्स्ये स्थिरो भव ॥ १४१ ॥

इत्युक्त्वा तु पृथक्स्थित्वा रामः कमललोचनः ।
ज्याघोषमकरोद्वीरो वीरस्यैवाग्रतस्तदा ॥ १४२ ॥

ततः परशुरामस्य देहान्निष्क्रम्य वैष्णवम् ।
पश्यतां सर्वदेवानां तेजो राममुखेऽविशत् ॥ १४३ ॥

दृष्ट्वा तद्भार्गवो रामः प्रसन्नवदनोऽब्रवीत् ।
रामं दाशरथिं राजंस्तदा यत्तन्निशामय ॥ १४४ ॥

राम राम महाबाहो रामस्त्वं नात्र संशयः ।
विष्णुरेव भवाञ्जातो ज्ञातोऽस्यथ मया विभो ॥ १४५ ॥

गच्छ देव यथाकामं देवकार्यं च वै कुरु ।
दुष्टानां निधनार्थाय शिष्टानां परिपालनम् ।
याहि त्वं स्वेच्छया राम अहं यास्ये तपोवनम् ॥ १४६ ॥

इत्युक्त्वा पूजितस्तैस्तु मुनिभिः सोऽपि भार्गवः ।
महेन्द्राद्रिं जगामाथ तपसे धृतमानसः ॥ १४७ ॥

ततस्तु जातहर्षास्ते जना दशरथश्च ह ।
पुरीमयोध्यां संप्राप्तो रामेण सह पार्थिवः ॥ १४८ ॥

आत्तशोभां पुरीं कृत्वा तोरणैश्चोपशोभिताम्।
प्रत्युत्थाय ततः पौराः शङ्खतूर्यादिनिस्वनैः॥ १४९॥

विशन्तं राममागत्य कृतदारं रणोद्धितम्।
तं वीक्ष्य हर्षिताः सन्तो विविशुस्तेन च पुरम्॥ १५०॥

तौ दृष्ट्वा स मुनिश्रेष्ठो रामं लक्ष्मणमान्तिके।
दशरथाय तत्पित्रे मातृभ्यश्च विशेषतः॥ १५१॥

तौ समर्प्य मुनिश्रेष्ठस्तेन राज्ञानुपूजितः।
विश्वामित्रः सुशिष्यैश्च सह यातो वृषीश्वरैः॥ १५२॥

समर्प्य रामं स मुनिः सहानुजं
सभार्यमग्रे पितुरेकवल्लभम्।
पुनः पुनः स व्यहसन्महामुनि-
र्जगाम सिद्धाश्रममग्र्यवासिभिः (?)॥ १५३॥

मार्कण्डेय उवाच।

कृतदारो महातेजा रामः कमललोचनः।
मातापित्रोर्जनानां च प्रीतिमुत्पादयत्पराम्॥ १५४॥

अयोध्यायां स्थितो रामः सर्वभोगसमन्वितः।
प्रीत्या नन्दत्ययोध्यायां रामे रघुपतौ नृप।
भ्राता शत्रुघ्नसहितो भरतो मातुलं ययौ॥ १५५॥

ततो दशरथो राजा राममन्वीक्ष्य शोभनम्।
युवानं बलिनं योग्यं भूपतित्वे सुतं कविः॥ १५६॥

अभिषिच्य राज्यभारं रामे संस्थाप्य वैष्णवम्।
पदं प्राप्तुमहं यत्नं करिष्यामीत्यचिन्तयत्॥ १५७॥

संचिन्त्य तत्परो राजा सर्वदिक्षु समादिशत्।
प्रजाभृत्यान्महीपालो मन्त्रिणश्च त्वरान्वितः॥ १५८॥

रामाभिषेकद्रव्याणि ऋषिप्रोक्तानि यानि वै।
तानि भृत्याः समानीय शीघ्रमानेतुमर्हथ॥ १५९॥

अयोध्यापुरमत्यर्थमत्र शोभासमन्वितम्।
जनाः कुर्वन्तु सर्वत्र नृत्यगीतनिनादितम्॥ १६०॥

पुरवासिजनानन्दं देशवासिजनोत्तरम्।
रामाभिषेकं विपुलं श्वो भविष्यति जानत॥ १६१॥

श्रुत्वाथ मन्त्रिणः प्राहुस्तं नृपं प्रणिपत्य ह ।
शोभनं ते मतं राजन्यद्देतत्परिभाषितम् ।
रामाभिषेकमस्माकं सर्वेषां च प्रियंकरम् ॥ १६२ ॥

इत्युक्तो दशरथस्तैस्तु तान्सर्वान्पुनरब्रवीत् ।
आनीयन्तां द्रुतं सर्वे सभ्या रामं मम शासनात् ॥ १६३ ॥

सर्वतः सारभूता च पुरी चेयं समन्ततः ।
अद्य शोभान्विता कार्या कर्तव्यं यागमण्डपम् ॥ १६४ ॥

इत्येवमुक्ता राज्ञा ते मन्त्रिणः शीघ्रकारिणः ।
तथैव चक्रुस्ते सर्वे पुन पुनरदीक्षिता ।
प्राप्तहर्षः स राजा च शुभं दिनमुदैक्षत ॥ १६५ ॥

कौसल्या लक्ष्मणश्चैव सुमित्रा नगरीजना ।
रामाभिषेकमाकर्ण्य मुद प्राप्यातिहर्षिता ॥ १६६ ॥

श्वश्रूश्वशुरयोः सम्यक् शुश्रूषणपरा तु या ।
मुदान्विता स्थिता सीता भर्तुरारूपशोभना ॥ १६७ ॥

श्वोभाविन्यभिषेके तु रामस्य विदितात्मनः ।
दास्यासीन्मन्थरा नाम कैकय्या कुब्जरूपिणी ।
सा स्वामिनीं तु कैकेयीमिदं वचनमब्रवीत् ॥ १६८ ॥

शृणु राज्ञि महाभागे वचनं मम शोभने ।
त्वत्पतिस्तु महाराजस्तव नाशाय चोद्यत ।
रामं च कौसलापुत्रं श्वोऽभिषेक्ष्यति भूतले ॥ १६९ ॥

वसुवाहनकोपादि राज्यं च सकल शुभे ।
भविष्यत्यथ रामस्य भरतस्य न किंचन ॥ १७० ॥

भरतोऽपि गतो दूरं मातुलस्य गृहं प्रति ।
हा कष्टं मन्दभाग्यासि सपत्न्या मुषिता भृशम् ॥ १७१ ॥

सैवमाकर्ण्य कैकेयी तां कुब्जामिदमब्रवीत् ।
पश्य मे दक्षतां कुब्जे अद्यैवात्र विचक्षणे ॥ १७२ ॥

यथा तु सकलं राज्यं भरतस्य भविष्यति ।
रामस्य वनवासश्च तथा यत्नं करोम्यहम् ॥ १७३ ॥

इत्युक्त्वा मन्थरां सा तु उत्सृज्य स्वाङ्गभूषणम् ।
वस्त्र पुष्पाणि चोन्मुच्य स्थूलवासोधराभवत् ।
निर्माल्यपुष्पधृकष्टा कश्मलाङ्गी विरूपिणी ॥ १७४ ॥

भस्मधूल्या च दिग्धाङ्गी भस्मधूलितुपावृते ।
भूभागे शान्तदीपा सा शेते सुभृशदुःखिता ॥ १७५ ॥

संध्यामुपास्य स बहिः प्रविवेश सभां नृपः ।
मन्त्रिभिः सह कार्याणि संमन्त्र्य सकलानि तु ॥ १७६ ॥

पुण्याहस्वस्तिमङ्गल्ये स्थाप्य रामं तु मण्डपे ।
ऋषिभिस्तु वसिष्ठाद्यैः सर्वसंभारपूरिते ॥ १७७ ॥

वृद्धिजागरणायैव सर्वतस्तूर्यनादिते ।
गीतनृत्यसमाकीर्णे शङ्खकाहलनिस्वने ॥ १७८ ॥

स्वयं दशरथस्तत्र स्थित्वा प्रीत्यागतः पुनः ।
कैकेय्या वेश्मनो द्वारं अरङ्गिः परिपूरितम् ।
रामाभिषेकं कैकेय्यां कथयामास पार्थिवः ॥ १७९ ॥
कैकेयीभवनं प्राप्य सान्धकारमिवाब्रवीत् ।
अन्धकारमिदं कस्मादद्य ते भवनं प्रिये ॥ १८० ॥
रामाभिषेकसंहर्षादन्त्यजा अपि मत्पुरे ।
गृहालंकारकरणं कुर्वन्त्यद्य महोत्सवम् ॥ १८१ ॥
त्वयाद्य न कृतः कस्मादित्युक्त्वा स महीपतिः ।
ज्वालयित्वा गृहे दीपान्प्रविवेश गृहं नृपः ॥ १८२ ॥
अशोभनाङ्गीं कैकेयीं स्वपत्नीं पतितां भुवि ।
दृष्ट्वा दशरथः प्राह तस्याः प्रियमिदं त्विति ॥ १८३ ॥
आश्लिष्योत्थाप्य तां राजा शृणु मे परमं वचः ।
स्वमातुरधिकां नित्यं यस्ते भक्तिं करोति सः ।
तस्याभिषेको रामस्य श्वो भविष्यति शोभने ॥ १८४ ॥
इत्युक्ते पार्थिवे तस्मिन्किंचिन्नोवाच सा शुभा ।
मुञ्चन्ती दीर्घमुष्णं तु रोषोच्छ्वासं मुहुर्मुहुः ॥ १८५ ॥
तामुत्थाप्य स्वहस्ताभ्यां पार्थिवः प्राह रोषिताम् ।
किं ते कैकेयि दुःखस्य कारणं वद शोभने ॥ १८६ ॥
तत्त्वं गृह्णीष्व निःशङ्कं भण वाचं सुखीभव ।
बहु मानय रामस्य अभिषेकं महात्मनः ॥ १८७ ॥
इत्युक्ता राजवर्येण कैकेयी पापलक्षणा ।
निर्घृणा कुमतिर्दुष्टा कुब्जया शिक्षिताब्रवीत् ।
राजानं स्वपतिं धार्यं वरमत्यन्तनिष्ठुरम् ॥ १८८ ॥

रत्नानि सकलं यत्ते तन्ममैव न संशयः ।
देवासुरमहायुद्धे प्रीत्या यन्मे वरद्वयम् ।
पुरा दत्तं त्वया राजंस्तदिदानीं प्रयच्छ मे ॥ १८९ ॥

इत्युक्तः पार्थिवः प्राह कैकेयीमशुभां तदा ।
अदत्तमप्यहं दास्ये तव चान्यस्य वा शुभे ।
किमु प्रतिश्रुतं पूर्वं दत्तं नैव मया तव ॥ १९० ॥

शुभाङ्गि भव कल्याणी त्यज कोपमनर्थकम् ।
रामाभिषेकजं हर्षं भजोत्तिष्ठ सुखीभव ॥ १९१ ॥

इत्युक्ते राजनि प्रिये कैकेयी कलहप्रिया ।
उवाच परुषं वाक्यं राज्ञो मरणकारणम् ॥ १९२ ॥

वरद्वयं पूर्वदत्तं यदि दास्यसि मे विभो ।
श्वोभूते गच्छतु वनं रामोऽयं कौसलात्मजः ॥ १९३ ॥

द्वादशाब्दानि वसतु त्वद्वाक्याद्दण्डके वने ।
अभिषेकं च राज्यं च भरतस्य भवत्विह ॥ १९४ ॥

इत्याकर्ण्य स कैकेय्या वचनं घोरमप्रियम् ।
पपात भुवि निःशङ्को ( निःसंज्ञो? ) राजा सापि विभूषिता ॥ १९५ ॥

रात्रिशेषं नयित्वा तु प्रभाते सा मुदीर्वती (?) ।
दूतं सुमन्त्रमाहेदं राम आनीयतामिति ॥ १९६ ॥

रामश्च कृतपुण्याहः कृतस्वस्त्ययनो द्विजैः ।
यागमण्डपमध्यस्थः शङ्खतूर्यरवान्वितः ॥ १९७ ॥

समासाद्य ततो दूतः प्रणिपत्य पुरः स्थितः ।
राम राम महाबाहो आज्ञापयति ते पिता ।
द्रुतमुत्तिष्ठ गच्छ त्वं यत्र तिष्ठति ते पिता ॥ १९८ ॥

इत्युक्तस्तेन दूतेन शीघ्रमुत्थाय राघवः ।
अनुज्ञाप्य द्विजान्प्रातः कैकेय्या भवनं प्रति ॥ १९९ ॥

अद्यैव गम्यतां वीर तपसे धृतमानसः ।
न चिन्त्यमन्यथा वत्स स्वादुराकुरु मे वचः ॥ २०० ॥

एतच्छ्रुत्वा पितुर्वाक्यं रामः कमललोचनः ।
तथेत्याज्ञां गृहीत्वासौ नमस्कृत्य च तावुभौ ॥ २०१ ॥

निष्क्रम्य तद्गृहाद्रामो धनुरादाय वेश्मनः।
कौसल्यां च नमस्कृत्य सुमित्रां गन्तुमुद्यतः॥ २०२॥

तच्छ्रुत्वा ते ततः पौरा दुःखशोकपरिप्लुताः।
जिजृम्भे चाथ सौमित्रिः कैकेयीं प्रति रोषितः॥ २०३॥

ततस्तु राघवो दृष्ट्वा लक्ष्मणं रक्तलोचनम्।
धारयामास धर्मज्ञो धर्मवाग्भिर्महामतिः॥ २०४॥

ततस्तु तत्र ये वृद्धास्तान्प्रणम्य मुनींश्च सः।
रामो रथं ससूतं च प्रस्थानायारुरोह वै॥ २०५॥

उन्नतयौवनः श्रीमान्सर्वरोगविवर्जितः।
पितुराकर्ण्य वचनं प्रवेष्टुं वनमुद्यतः॥ २०६॥

आत्मीयं सकलं द्रव्यं ब्राह्मणेभ्यो नृपात्मजः।
श्रद्धया परया दत्वा वस्त्राणि विविधानि च॥ २०७॥

तिस्रः श्वश्रूः समामन्त्र्य श्वशुरं च विसंज्ञकम्।
जनयेदं चतुर्धातं (?) यत्नादश्रूणि नेत्रयोः।
पश्यन्ती सर्वतः सीता आरुरोह जवाद्रथम्॥ २०८॥

रथमारुह्य गच्छन्तं सीतया सह राघवम्।
दृष्ट्वा सुमित्रा वक्त्रं लक्ष्मणं प्राह दुःखिता॥ २०९॥

रामं दशरथं विद्धि मां विद्धि जनकात्मजाम्।
अयोध्यामटवीं विद्धि व्रज ताभ्यां गुणाकर॥ २१०॥

मात्रैवमुक्तो धर्मात्मा स्तनक्षीरास्तदेहया।
दत्वा तु मातुरानन्दमारुरोहाथ लक्ष्मणः॥ २११॥

गच्छतो लक्ष्मणो भ्राता सीता चैव पतिव्रता।
रामस्य पृष्ठतो यातः पुराद्बहिर्महामते॥ २१२॥

ते विच्छिन्नाभिषेकं तु रामं राजीवलोचनम्।
अयोध्यायां च निष्क्रान्तमनुयाताः पुरोहिताः॥ २१३॥

मन्त्रिणः पौरमुख्याश्च दुःखेन महतान्विताः।
चेतसा प्राप्य गच्छन्तं राममूचुरिदं वचः॥ २१४॥

राम राम महाबाहो गन्तुं नार्हसि शोभन।
राजपुत्र निवर्तस्व विहायास्मान्क गच्छसि॥ २१५॥

इत्युक्तो राघवस्तैस्तु तानुवाच दृढव्रतः ।
गच्छध्वं मन्त्रिणः पौराः पुरोधाश्च गतव्यथाः ॥ २१६ ॥

पित्रादेशं मया कार्यमतो यास्यामि वै वनम् ।
द्वादशाब्दमतं ह्येतत्तीर्णोऽहं दण्डके वने ॥ २१७ ॥

आगच्छामि पितुः पादौ मातॄणां द्रष्टुमञ्जसा ।
इत्युक्त्वा ताञ्जगामाथ रामः सत्यपरायणः ॥ २१८ ॥

तं गच्छन्तं पुनर्जाताः पृष्ठतो दुःखिता जनाः ।
पुनस्तानाह काकुत्स्थो गच्छध्वं नगरीमिमाम् ॥ २१९ ॥

मातॄश्च पितरं चैव शत्रुघ्नं नगरीमिमाम् ।
प्रजाः समस्तास्तत्रस्था राज्यं भरत एव च ।
पालयध्वं महाभागास्तपसे याम्यहं वनम् ॥ २२० ॥

अथ लक्ष्मणमाहेदं वचनं राघवस्तदा ।
सीतां प्रापय राजानं जनकं मिथिलेश्वरम् ।
पितृमातृवशे तिष्ठ गच्छ लक्ष्मण याम्यहम् ॥ २२१ ॥

इत्युक्तः प्राह धर्मात्मा लक्ष्मणो भ्रातृवत्सलः ।
नैवमाज्ञापय विभो ममाद्य करुणाकर ।
गन्तुमिच्छसि यत्र त्वमवश्यं तत्र याम्यहम् ॥ २२२ ॥

इत्युक्ते लक्ष्मणे तत्र सीतां तामाह राघवः ।
सीते गच्छ ममादेशात्पितरं प्रति शोभने ॥ २२३ ॥

सुमित्राया गृहे वापि कौसल्यायाः शुभानने ।
निवसस्व हिताय त्वं यावदागमनं मम ॥ २२४ ॥

इत्युक्ते राघवे तत्र सीता प्राह कृताञ्जलिः ।
यत्र गत्वा वने वासं त्वं करोषि महाव्रत ॥ २२५ ॥

तत्र गत्वा त्वया सार्धं वसाम्यहमरिंदम ।
वियोगं नोत्सहे राजंस्त्वया सत्यवता क्वचित् ॥ २२६ ॥

अतस्त्वां प्रार्थयिष्यामि दयां कुरु मयि प्रभो ।
गन्तुमिच्छसि यत्र त्वमवश्यं तत्र याम्यहम् ॥ २२७ ॥

नानायानैरुपगतानुजनान्वीक्ष्य तु पृष्ठतः ।
योगिनां च गणान्रामो वारयामास धर्मवित् ॥ २२८ ॥

निवर्त्य स्थीयतां स्वेच्छमयोध्यायां जनाः स्त्रियः।
गत्वाहं दण्डकारण्यं तपसे धृतमानसः।
कतिपयाब्दादिहायामि नान्यथा सत्यमीरितम्॥ २२९॥

लक्ष्मणेन सह भ्रात्रा वैदेह्या च स्वभार्यया।
बलान्निवर्त्य रामोऽसौ जगाम च गुहाश्रमम्॥ २३०॥

गुहश्च रामभक्तोऽसौ स्वभावादेव वैष्णवः।
कृताञ्जलिपुटो भूत्वा किं कर्तव्यमिति स्थितः॥ २३१॥

महता तपसानीता गुरुणा च दिवः पुरा।
भगीरथेन या भूमिं सर्वपापहरा शुभा॥ २३२॥

नानामुनिजनाकीर्णा मीननक्रसमाकुला।
गङ्गा तुङ्गोर्मिमालाढ्या स्फटिकाच्छजलावहा॥ २३३॥

गुहोपनीतनावां तु तां गङ्गां स महीपते।
उत्तीर्य गतवान्रामो भरद्वाजाश्रमं प्रति॥ २३४॥

प्रयाते तु ततस्तस्मिन्स्नात्वा तीर्थे यथाविधि।
लक्ष्मणेन सह भ्रात्रा राघवः सीतयान्वितः।
भरद्वाजोक्तमार्गेण चित्रकूटं शनैर्ययौ॥ २३५॥

नानाद्रुमलताकीर्णं नानामुनिनिषेवितम्।
नानापुष्पसमाकीर्णं पुण्यतीर्थमनुत्तमम्।
तापसं वेषमास्थाय जह्नुकन्यामतीत्य वै॥ २३६॥

गते रामे सभार्ये तु सभ्रातरि स सारथिः।
अयोध्यां तु पुनः प्राप्तो नष्टशोभां सुदुःखिताम्॥ २३७॥

पुत्रशोकाभिसंतप्तो राजा दशरथस्तदा।
विहाय देहं दुःखेन देवलोकं गतस्तदा॥ २३८॥

ततस्तस्यां महापुर्यामयोध्यायामरिंदम।
रुरुदुर्दुःखशोकार्ता जनाः सर्वे सयोषितः॥ २३९॥

कौसल्या च सुमित्रा च कैकेयी कष्टकारिणी।
परिवार्य मृतं तत्र रुरुदुः स्वपतिं नृप॥ २४०॥

ततः पुरोहितस्तस्य वसिष्ठः सर्वधर्मवित्।
तैलद्रोण्यां विनिक्षिप्य मृतं राजकलेवरम्।
दूतं च प्रेषयामास सह मन्त्रिजनैः स्थितः॥ २४१॥

स गत्वा यत्र भरतः शत्रुघ्नेन सह स्थितः।
तत्र प्राप्य यथावृत्तं स निवेद्य महामतिम्।
तावानीय ततः शीघ्रमयोध्यां पुनरागतः॥ २४२॥
अशकुनान्दृष्ट्वा भरतो अनिमित्तानि वै पथि।
विपरीतमयोध्यायामिति मेने स पार्थिवः॥ २४३॥
निःशोभां निर्गतश्रीकां दुःखशोकान्वितां पुरीम्।
कैकेय्यग्निविनिर्दग्धामयोध्यां प्रविवेश सः।
दुःखान्विता जनाः सर्वे दृष्ट्वा वै रुरुदुर्भृशम्॥ २४४॥
हा तात राम हा सीते लक्ष्मणेति पुनः पुनः।
रुरोद भरतस्तत्र शत्रुघ्नश्च सुदुःखितः॥ २४५॥
कैकेय्या यत्कृतं ज्ञात्वा चुक्रोध भरतस्तु ताम्।
दुष्टा त्वं दुष्टचित्ता च यया रामः प्रवासितः।
लक्ष्मणेन सह भ्रात्रा भार्यया सीतया वनम्॥ २४६॥
साहसं किं कृतं दुष्टे त्वयोत्पत्याल्पभाग्यया।
उद्वास्य सीतया रामं लक्ष्मणेन महात्मना॥ २४७॥
मामेव पुत्रं राजानं करोमीति तमब्रवीत्।
दुष्टाया नष्टभाग्याया नाहं राज्यं करोमि वै॥ २४८॥
यत्र रामो नरव्याघ्रः पद्मपत्रायतेक्षणः।
धर्मज्ञः सर्वशास्त्रज्ञः सर्वज्ञो बन्धुवत्सलः॥ २४९॥
सीता च यत्र वैदेही नियमव्रतचारिणी।
पतिव्रता महाभागा पितृभ्यामपि मे हिता॥ २५०॥
लक्ष्मणश्च महावीर्यो गुणवान्भ्रातृवत्सलः।
तत्र यास्यामि कैकेयि महत्पापं मया कृतम्॥ २५१॥
रामः सेव्य च मे भ्राता ज्येष्ठो मतिमतां वरः।
स एव राजा दुश्चेष्टे भृत्योऽहं तस्य वै सदा॥ २५२॥
इत्युक्त्वा मातरं तत्र रुरोद भृशदुःखितः।
हा राजन्पृथिवीपाल मां विहाय सुदुःखितम्।
क्व गतोऽस्यद्य मे तात किं करोमि च तद्वद॥ २५३॥
भ्राता पितृसमः क्वासौ ज्येष्ठो मे करुणाकरः।
सीता च मातृतुल्या मे क्व गतो लक्ष्मणश्च ह॥ २५४॥

इत्येवं प्रलपन्तं तं भरतं मन्त्रिभिः सह।
वसिष्ठो भगवानाह कालधर्मविधानवित् ॥ २५५ ॥

उत्तिष्ठोत्तिष्ठ वत्स त्वं न शोकं कर्तुमर्हसि।
कर्मकारवशादेव पिता ते स्वर्गमास्थितः।
तस्य संस्कारकादीनि कर्माणि कुरु शोभन ॥ २५६ ॥

रामोऽपि दुष्टनाशाय शिष्टानां पालनाय च।
अवतीर्णो जगत्स्वामी स्वांशेन भुवि मानवः ॥ २५७ ॥

प्रायस्तत्रस्थरामेण कर्तव्यं लक्ष्मणेन च।
यत्रासौ भगवान्वीरः कर्मणा तेन चोदितः।
तत्कृत्वा पुनरायाति रामः कमललोचनः ॥ २५८ ॥

इत्युक्तो भरतस्तेन वसिष्ठेन महात्मना।
संस्कारं लम्भयामास विधिदृष्टेन कर्मणा ॥ २५९ ॥

अग्निहोत्राग्निना दग्ध्वा पितुर्देहं विधानतः।
स्नात्वा तु सरयूतीरे कृत्वा तस्योदकाञ्जलिम् ॥ २६० ॥

शत्रुघ्नेन सह श्रीमान्मातृभिर्बान्धवैः सह।
तस्यौर्ध्वदेहिक कृत्वा मन्त्रिसामन्तनायकैः ॥ २६१ ॥

हस्त्यश्वरथपत्तीभिः सह यातो महामतिः।
भरतो राममन्वेष्टुं राममार्गेण सत्तम ॥ २६२ ॥

तमायान्तं महाशैल (?) रामस्यात्र विराधनम्।
मत्वा तं भरतं तत्र रामभक्तो गुहस्तदा।
महाबलपरीवारो ररोध भरतं पथि ॥ २६३ ॥

सभ्रातृकं सभार्यं मे रामं स्वामिनमुत्तमम्।
प्रेषयित्वा वने दुष्ट सांप्रतं हन्तुमिच्छया।
गमिष्यसि दुरात्मा त्वं सेनया सह दुर्मतिः ॥ २६४ ॥

इत्युक्तो भरतस्तत्र गुहेन नृपनन्दन।
तमुवाच विनीतात्मा रामायाथ कृताञ्जलिः ॥ २६५ ॥

यथा त्वं रामभक्तोऽसि तथाहं तत्र भक्तिमान्।
प्रोषिते मयि कैकेय्या कृतमेतन्महामते ॥ २६६ ॥

रामस्यानयनार्थाय व्रजाम्यत्र महामते।
स त्वत्पूर्वं गमिष्यामि पन्थानं देहि मे गुह ॥ २६७ ॥

इति विश्वासमानीय जाह्नवी तेन तारितः ।
नावां वृन्दैरनेकैस्तु स्नात्वासौ जाह्नवीजले ॥ २६८ ॥
भरद्वाजोऽथ तं प्राह कालेन कृतमीदृशम् ।
दुःखं तावन्न कर्तव्यं रामायेति त्वयाधुना ॥ २६९ ॥
वर्तते चित्रकूटेऽसौ रामः सत्यपराक्रमः ।
त्वयि तत्र गते चापि प्रायोऽसौ नागमिष्यति ।
तथापि तत्र गच्छ त्वं यदसौ वक्ति तत्कुरु ॥ २७० ॥
इत्युक्तो भरतस्तत्र भरद्वाजेन धीमता ।
उत्तीर्य यमुनां यातश्चित्रकूटं महानशम् (?) ॥ २७१ ॥
रामश्च सीतया सार्धं वनखण्डे स्थितः शुभे ।
लक्ष्मणस्तु महावीर्यो दुष्टालोकनतत्परः ॥ २७२ ॥
स्थितोऽसौ दृष्टवान्दूराद्वारुणीं चोत्तरां दिशम् ।
रामाय कथयित्वा तु तदादेशात्तु लक्ष्मणः ।
वृक्षमारुह्य मेधावी वीक्षमाणः प्रयत्नतः ॥ २७३ ॥
ततोऽसौ दृष्टवांस्तस्य आयान्तीं तां महाचमूम् ।
हस्त्यश्वरथसंयुक्तां दृष्ट्वा राममथाब्रवीत् ॥ २७४ ॥
हे भ्रातस्त्वं महाबाहो सीतापार्श्वे स्थिरो भव ।
आयाति बलवान्कश्चिद्धस्त्यश्वरथपत्तिभिः ॥ २७५ ॥
इत्याकर्ण्य वचस्तस्य लक्ष्मणस्य महात्मनः ।
आपात्संस्थाप्य सेनां तां भरतो विनयान्वितः ॥ २७६ ॥
ब्राह्मणैर्मन्त्रिभिः सार्धमथागत्य [तु] पादयोः ।
रामस्य निपपाताथ वैदेह्या लक्ष्मणस्य च ॥ २७७ ॥
मन्त्रिणोऽमात्यवर्गाश्च स्निग्धबन्धुसुहृज्जनाः ।
परिवार्य ततो रामं रुरुदुः शोककातराः ॥ २७८ ॥
स्वर्यातं पितरं ज्ञात्वा ततो रामो महामतिः ।
लक्ष्मणेन सह भ्रात्रा वैदेह्या च समन्वितः ॥ २७९ ॥
स्नात्वा मलापहे तीर्थे दत्त्वा च सलिलाञ्जलिम् ।
मात्रादीनभिवाद्याथ रामो दुःखसमन्वितः ।
उवाच भरतं राजन्दुःखेन महतान्वितम् ॥ २८० ॥
अयोध्यां गच्छ भरत नाम शीघ्रं महामते ।
राज्ञा विहीनां नगरीमनाथां परिपालय ॥ २८१ ॥

इत्युक्तो भरतः प्राह रामं राजीवलोचनम् ।
नगर्याः पालनं राजंस्त्वयि निक्षिपते पिता ।
स्वर्लोकं गतवान्वीर त्वं राजा सांप्रतं भव ॥ २८२ ॥

इत्युक्तो भरतेनाथ रामः प्राह च तं पुनः ।
पितुर्नियोगाद्वने वासं त्वं गच्छ परिपालय ॥ २८३ ॥

इत्युक्तो भरतः प्राह बाष्पपर्याकुलेक्षणः ।
यथा पिता तथा मे त्वं नात्र कार्या विचारणा ॥ २८४ ॥

त्वदादेशो मया कार्यो देहि त्वं पादुके मम ।
नन्दिग्रामे वसाम्यद्य पादुके द्वादशाब्दिकम् ।
यदे संसेवनं चेदं (?) तद्व्रतं मे महाव्रतम् ॥ २८५ ॥

द्वादशाब्दिकादूर्ध्वं त्वं यदि नायासि सत्तम ।
ततोऽहमग्नये चेदं प्रयच्छामि कलेवरम् ॥ २८६ ॥

इत्येवं समयं कृत्वा भरतोऽयं सुदुःखितः ।
बहुशः प्रदक्षिणं कृत्वा नमस्कृत्य च राघवम् ।
पादुके शिरसि स्थाप्य भरतः प्रस्थितः शनैः ॥ २८७ ॥

स कुर्वन्भ्रातुरादेशं नन्दिग्रामे स्थितो वशी ।
तपस्वी नियताहारः शाकमूलफलाशनः ॥ २८८ ॥

जटाकलापं शिरसा तु बिभ्र-
त्त्वचं च ** स तु वन्यभोजी ।
रामस्य वाक्याद्भरतोऽपि निश्वस-
न्बभार भूभारमनिन्दितात्मा ॥ २८९ ॥

मार्कण्डेयपुराणे—

गते तु भरते तस्मिन्रामः कमललोचनः ।
लक्ष्मणेन सह भ्रात्रा भार्यया सीतया सह ।
शाकमूलफलाहारैर्विचचार महावने ॥ २९० ॥

एकदा लक्ष्मणमृते रामदेवः प्रतापवान् ।
चित्रकूटवनोद्देशे वैदेह्या अङ्कमाश्रितः ॥ २९१ ॥

---

291 The quotation from the मार्कण्डेयपुराण cannot be traced to T

सुष्वाप स मुहूर्तं च ततः काको दुरात्मवान् ।
सीताभिमुखमभ्येत्य विददार स्तनान्तरम् ।
विदार्य वृक्षमारुह्य स्थितोऽसौ वायसाधमः ॥ २९२ ॥

ततः प्रबुद्धो रामोऽसौ दृष्ट्वा रक्तं स्तनान्तरम् ।
शोकाविष्टां तु सीतां तामुवाच कमलेक्षणः ॥ २९३ ॥

किमिदं स्तनान्तरे भद्रे तव रक्तस्य कारणम् ।
इत्युक्ता सा च तं प्राह भर्तारं विनयान्विता ॥ २९४ ॥

पश्य राजेन्द्र वृक्षाग्रे वायसं दुष्टचेष्टितम् ।
येनैतत्स्वकृतं कर्म सुप्ते त्वयि महामते ॥ २९५ ॥

रामोऽपि दृष्ट्वा तं काकं तस्मिन्क्रोधमथाकरोत् ।
पपकास्त्रं समादाय ब्रह्मास्त्रेणाभिमन्त्रितम् ।
काकमुद्दिश्य चिक्षेप सोऽभ्यधावद्भयान्वितः ॥ २९६ ॥

स त्विन्द्रस्य सुतो राजन्निन्द्रलोकं विवेश ह ।
रामास्त्रं प्रज्वलन्दीप्तं तस्यानु प्रविवेश वै ॥ २९७ ॥

विदितार्थश्च देवेन्द्रो देवैः सर्वैः समन्वितः ।
निष्कामयच्च तं दुष्टं राघवस्यापकारिणम् ॥ २९८ ॥

ततोऽसौ सर्वदेवैस्तु देवलोकाद्बहिष्कृतः ।
पुनः सोऽभ्येत्य रामं च राजानं शरणं गतः ॥ २९९ ॥

त्राहि राम महाबाहो अज्ञानादपकारिणम् ।
इति ब्रुवन्तं स प्राह रामः कमललोचनः ॥ ३०० ॥

अमोघाय ममास्त्राय अक्षि चैकं प्रयच्छ मे ।
ततो जीवसि दुष्टात्मन्मेऽपराधो महान्कृतः ॥ ३०१ ॥

इत्युक्तोऽसौ स्वकं नेत्रमेकमस्त्राय दत्तवान् ।
अस्त्रं च नेत्रमेकं तु भस्मीकृत्य रामं ययौ ॥ ३०२ ॥

ततःप्रभृति सर्वेषां काकानामेकनेत्रता ।
चक्षुषैकेन पश्यन्ति हेतुनानेन पार्थिव ॥ ३०३ ॥

उषित्वा सुचिरं कालं चित्रकूटे स राघवः ।
जगाम दण्डकारण्यं नानामुनिनिषेवितम् ॥ ३०४ ॥

सभ्रातृकः सभार्यश्च तपोनेत्रसमन्वितः ।
धनुर्भयरपाणिश्च इषुधिश्च महाबलः ॥ ३०५ ॥

ततो ददर्श तत्रस्थान्वायुभक्षान्महामुनीन् ।
अश्मकुट्टाननेकांश्च दन्तोलूखलिनस्तथा ॥ ३०६ ॥

चतुर्थकालिकानन्यान्षष्ठाष्टमकृतव्रतान् ।
पञ्चाग्निमध्यगानन्यानेवमुग्रतपश्चरान् ॥ ३०७ ॥

तान्दृष्ट्वा प्रणिपत्योच्चै रामस्तैश्चाभिपूजितः ।
ततोऽखिलं वनं द्रष्टुं रामः साक्षाज्जनार्दनः ।
भ्रातृभार्यासहायश्च संप्रतस्थे महामतिः ॥ ३०८ ॥

दर्शयित्वा तु सीताया वनं कुसुमितं शुभम् ।
नानाश्चर्यसमायुक्तं शनैर्गच्छन्स दृष्टवान् ॥ ३०९ ॥

कृष्णाङ्गं रक्तनेत्रं तु शैलशृङ्गं (?) समुच्छ्रितम् ।
शुक्लदंष्ट्रं महाबाहुं संध्याघनशिरोरुहम् ॥ ३१० ॥

मेघस्वनमशार्यं च शरं संधाय राघवः ।
विव्याध राक्षसं क्रोधाल्लक्ष्मणेन सह प्रभुः ॥ ३११ ॥

अन्यैरवध्यं हत्वा तं गिरिगर्ते महातनुम् ।
शिलाभिः प्रच्छाद्य गतवाञ्शरभङ्गाश्रमं प्रति ॥ ३१२ ॥

तं गत्वा तत्र विश्रम्य तत्कथातुष्टमानसः ।
तीक्ष्णाश्रममुपागम्य दृष्टवांस्तं महामुनिम् ॥ ३१३ ॥

तेनादिष्टेन मार्गेण गत्वागस्त्यं ददर्श सः ।
खड्गं तु विमलं तस्मादवाप रघुनन्दनः ।
इषुधीश्चाक्षयशरांश्चापं चैव तु वैष्णवम् ॥ ३१४ ॥

ततो गत्वाश्रमाद्रामो भ्रातृभार्यासमन्वितः ।
गोदावर्याः समीपे तु पञ्चवट्यामुवास सः ॥ ३१५ ॥

ततो जटायुरभ्येत्य रामं कमललोचनम् ।
नत्वा स्वकुलमाख्याय स्थितवान्गृध्रनायकः ॥ ३१६ ॥

रामोऽपि तत्र तं दृष्ट्वा आत्मवृत्तमशेषतः ।
कथयित्वा तु तं प्राह सीतां रक्ष महामते ॥ ३१७ ॥

इत्युक्तोऽसौ जटायुस्तं राममालिङ्ग्य सादरम् ।
कार्यार्थं त्वयि गते भ्रात्रा सह वनान्तरम् ।
अहं रक्षामि ते भार्यां स्थीयतामत्र शोभन ॥ ३१८ ॥

इत्युक्त्वा गतवान्पार्श्वं (?) गृध्रराजः स्वमाश्रमम् ।
समीपं दक्षिणं भागं नानापक्षिनिषेवितम् ॥ ३१९ ॥

अवसद्राघवस्तत्र सीतया सह कानने ।
नानाप्रकाररुचिराः कथयंस्तां महाकथाः ॥ ३२० ॥

कृत्वा मायामयं रूपं लावण्यगुणसंयुतम् ।
मदनाक्रान्तहृदया कदाचिद्रावणानुजा ॥ ३२१ ॥

गायन्ती सुस्वरं गीतं शनैरागत्य राक्षसी ।
ददर्श राममासीनं कालेन सह सीतया ॥ ३२२ ॥

अथ शूर्पणखा घोरा मायारूपधराशुभा ।
निःशङ्का दुष्टचित्ता सा राघवं प्रत्यभाषत ॥ ३२३ ॥

भज मां कान्त कल्याणीं भजन्तीं कामिनीमिह ।
भजमानां त्यजेद्यस्तु तस्य दोषो महान्भवेत् ॥ ३२४ ॥

इत्युक्तः शूर्पणखया रामस्तामाह पार्थिवः ।
ममास्ति भार्या सदने त्वया नास्ति प्रयोजनम् ॥ ३२५ ॥

इति श्रुत्वा पुनः प्राह राक्षसी कामरूपिणी ।
अतीव निपुणा चाहं रतिकर्मणि राघव ॥ ३२६ ॥

इत्युक्त्वेनानभिज्ञां (?) त्वं सीतां मा भज शोभन ।
इत्याकर्ण्य पुनः प्राह रामस्तां धर्मतत्परः ॥ ३२७ ॥

परस्त्रियं न गच्छेऽहं त्वमितो गच्छ लक्ष्मणम् ।
तस्य नास्ति वने भार्या त्वामसौ संग्रहीष्यति ॥ ३२८ ॥

इत्युक्ता सा पुनः प्राह रामं राजीवलोचनम् ।
यथा मे लक्ष्मणो भर्ता तथा त्वं देहि पत्रकम् ॥ ३२९ ॥

तयैवमुक्तो मतिमान्रामः कमललोचनः ।
छिन्ध्यस्या नासिकां शीघ्रं लिख्य पत्रं प्रदत्तवान् ॥ ३३०

सा गृहीत्वा तु तत्पत्रं गता तस्मान्मुदान्विता ।
गत्वा दत्तवती पत्रं लक्ष्मणाय महात्मने ॥ ३३१ ॥

तां दृष्ट्वा लक्ष्मणः प्राह राक्षसीं कामरूपिणीम् ।
अलङ्घ्यं राघववचो मया तिष्ठात्र कश्मले ॥ ३३२ ॥

तां प्रगृह्य ततः खड्गमुत्पाट्य विमलं बली ।
तेन तत्कर्णनासं तु चिच्छेद निष्ठुरन् ॥ ३३३ ॥

छिन्ने तु नासिके सा तु रुरोद भृशदुःखिता ।
हा दशास्य मम भ्रातः सर्वदेवविमर्दक ॥ ३३४ ॥

हा कष्टं कुम्भकर्णश्च जाता मे आपदा परा ।
हा हा कष्टं गुणनिधे विभीषण महामते ॥ ३३५ ॥

इत्येवमार्ता रोदन्ती सा गत्वा खरदूषणौ ।
त्रिशिरं च तदा दृष्ट्वा निवेद्यात्मपराभवम् ॥ ३३६ ॥

रामं चाह सह भ्रात्रा जनस्थाने महावने ।
श्रुत्वा ते राघवं क्रुद्धाः प्रेषयामासुरूर्जिताः ॥ ३३७ ॥

चतुर्दश सहस्राणि राक्षसानां बलीयसाम् ।
अग्रे निजभुस्ते चैव रक्षसां नायकास्त्रयः ॥ ३३८ ॥

रावणेन नियुक्तास्ते पुरैव तु महाबलाः ।
महाबलपरीवारा जनस्थानमुपागताः ॥ ३३९ ॥

क्रोधेन महताविष्टा दृष्ट्वा तां छिन्ननासिकाम् ।
रुदन्तीमसृग्दिग्धाङ्गीं भगिनीं रावणस्य तु ॥ ३४० ॥

रामोऽपि तद्बलं दृष्ट्वा राक्षसानां बलीयसाम् ।
संस्थाप्य लक्ष्मणं तत्र सीताया रक्षणं प्रति ।
गत्वा तु युयुधे तैस्तु राक्षसैर्बलदर्पितैः ॥ ३४१ ॥

चतुर्दशसहस्रं तु राक्षसानां महद्बलम् ।
क्षणेन निहतं तेन शरैरग्निशिखोपमैः ॥ ३४२ ॥

खरश्च निहतस्तेन दूषणश्च महाबलः ।
त्रिशिराश्च महाघोरो रणे रामेण घातितः ।
हत्वा तान्राक्षसान्दुष्टान्रामः स्वाश्रममाविशत् ॥ ३४३ ॥

शूर्पणखापि रुदती गत्वा लङ्कां ततो नृप ।
तच्छ्रुत्वा राक्षसः क्रुद्धो राक्षसानां क्षयं महत् ॥ ३४४ ॥

छिन्ननासां तु तां दृष्ट्वा रावणो भगिनीं निजाम् ।
मारीचं प्राह दुर्बुद्धिः सीताहरणकर्मणि ॥ ३४५ ॥

पुष्पकेण विमानेन गत्वाहं त्वं च मातुल ।
जनस्थानसमीपे तु स्थित्वा तत्र मदाज्ञया ॥ ३४६ ॥

सौवर्णमृगरूपं त्वमास्थाय च शनैः शनैः ।
गच्छ त्वं तत्र कार्यार्थं यत्र सीता व्यवस्थिता ॥ ३४७ ॥

दृष्ट्वा सा मृगपोतं त्वां सौवर्णं त्वयि मातुल ।
स्पृहां करिष्यति वने रामं च प्रेषयिष्यति ॥ ३४८ ॥

तद्वाक्यात्तत्र गच्छन्तं रामस्त्वामनुयास्यति ।
त्वां ग्रहीतुं महाबुद्धे धावस्व गहने वने ॥ ३४९ ॥

ततः पुष्पकमारुह्य मायारूपेण याम्यहम् ।
तां सीतामानयिष्यामि तस्यामासक्तमानसः ॥ ३५० ॥

त्वमपि स्वेच्छया पश्चादागमिष्यसि शोभन ।
इत्युक्तो रावणेनाथ मारीचो रावणं त्वब्रवीत् ॥ ३५१ ॥

त्वमेव गच्छ पापिष्ठ नाहं गच्छामि तत्र वै ।
पुरैव तेन रामेण व्यथितोऽस्मि मुनेर्मखे ॥ ३५२ ॥

एवमुक्ते च मारीचे रावणः क्रोधमूर्च्छितः ।
मारीचं हन्तुमारेभे मारीचोऽप्याह रावणम् ॥ ३५३ ॥

तव हस्ताद्वधाद्वीर रामेण मरणं वरम् ।
ततस्तत्र गमिष्यामि यत्र त्वं गन्तुमिच्छसि ।
अथ पुष्पकमारुह्य जनस्थानं तु तौ गतौ ॥ ३५४ ॥

मारीचस्तु स सौवर्णं मृगमास्थाय चाग्रतः ।
जगाम यत्र सीता सा वर्तते जनकात्मजा ॥ ३५५ ॥

सौवर्णमृगपोतं तु दृष्ट्वा सीता यशस्विनी ।
भाविकर्मवशाद्राममुवाच पतिमात्मनः ॥ ३५६ ॥

गृहीत्वा देहि सौवर्णं मृगपोतं नृपात्मज ।
अयोध्यायां तु मद्गेहे क्रीडनार्थमिदं मम ॥ ३५७ ॥

तयैवमुक्तो रामश्च लक्ष्मणं स्थाप्य तत्र वै ।
रक्षणार्थं तु सीताया गतोऽथ मृगपृष्ठतः ॥ ३५८ ॥

रामेणैवानुयातोऽसावभ्यधावद्वने [ततः] ।
मृगं शरेण विव्याध रामस्तु मृगपोतकम् ॥ ३५९ ॥

हा लक्ष्मणेति चोक्त्वासौ निपपात महीतले ।
मारीचः पर्वताकारस्तेन दृष्टो बभूव ह ॥ ३६० ॥

आकर्ण्य चैव तच्छब्दं सीता लक्ष्मणमब्रवीत् ।
गच्छ लक्ष्मण तत्र त्वं यत्रायं शब्द उत्थितः ॥ ३६१ ॥

भ्रातुर्ज्येष्ठस्य ते वत्स शब्दवच्छ्रूयते ध्वनिः ।
प्रायो रामस्य संदेहं लक्षयेऽहं महामते ॥ ३६२ ॥

इत्युक्तः सीतया प्राह लक्ष्मणस्तामनिन्दिताम् ।
न हि रामस्य संदेहो भयं वा विद्यते क्वचित् ॥ ३६३ ॥

इति ब्रुवाणं तं सीता भाविकर्मबलान्विता ।
लक्ष्मणं प्राह वैदेही विरुद्धं वचनं तदा ।
मृते रामे तु मामिच्छंस्ततस्त्वं न गमिष्यसि ॥ ३६४ ॥

इत्युक्तः स विनीतात्मा असहन्नप्रियं वचः ।
जगाम राममन्वेष्टुं तदा पार्थिवनन्दनः ॥ ३६५ ॥

संन्यासिवेषमास्थाय रावणोऽपि दुरात्मवान् ।
सीताश्रममथासाद्य वचनं त्विदमुक्तवान् ॥ ३६६ ॥

आगतो भरतः श्रीमानयोध्यातो महामतिः ।
रामेण सह संभाष्य स्थितवांस्तत्र कानने ॥ ३६७ ॥

मां च प्रेषितवान्रामो विमानमिदमारुह ।
अयोध्यां गच्छते रामो भरतेन प्रसादितः ॥ ३६८ ॥

मृगपोतं तु वैदेहि क्रीडार्थं ते गृहीतवान् ।
क्लेशितासि शुभेऽरण्ये बहुकालं त्वमीदृशी ॥ ३६९ ॥

संप्राप्तराज्यस्ते भर्ता स्थितो रामः शुभानने ।
लक्ष्मणश्च विनीतात्मा विमानमिदमारुह ॥ ३७० ॥

इत्युक्ता सा तथा मत्वा सीता तेन दुरात्मना ।
आरुरोह विमानं तं छद्मना प्रेरिता सती ॥ ३७१ ॥

क्षिप्रं तु स गतो वीरो रावणो दक्षिणां दिशम् ।
ततः सीता भयेनार्ता विललाप सुदुःखिता ॥ ३७२ ॥

विमानोपरि रोदन्त्याः कराग्रस्पर्शनेन सः ।
रावणः स्वेन रूपेण बभूवाथ महातनुः ॥ ३७३ ॥

दशग्रीवं महाकायं दृष्ट्वा सीता सुदुःखिता ।
हा राम वञ्चिताद्याहं केनापि छद्मरूपिणा ।
रक्षसा घोररूपेण त्रायस्वेति भयार्दिता ॥ ३७४ ॥

हा लक्ष्मण महाबाहो हृताद्य दुष्टरक्षसा ।
द्रुतमागत्य रक्षस्व ह्रियमाणामथाकुलाम् ॥ ३७५ ॥

एवं प्रलपमानायाः सीतायाश्च महास्वनम् ।
आकर्ण्य गृध्रराजोऽथ जटायुस्तत्र चागतः ॥ ३७६ ॥

तिष्ठ रावण दुष्टात्मन्मुञ्च मुञ्चाथ मैथिलीम् ।
इत्युक्त्वा युयुधे तेन जटायुस्तत्र वीर्यवान् ।
पक्षाभ्यां ताडयामास स जटायुं च वक्षसि ॥ ३७७ ॥

ताडयन्तं तु तं मत्वा बलवानिति रावणः ।
तुण्डचण्डप्रहारैस्तु भृशं तेन प्रपीडितः ॥ ३७८ ॥

तत उत्पत्य वेगेन खड्गं चन्द्रहासं महत् ।
जघान तेन दुष्टात्मा जटायुं धर्मचारिणम् ॥ ३७९ ॥
निपपात महीपृष्ठे जटायुः क्षीणचेतनः ।
उवाच च दशग्रीवं दुष्टात्मन्न त्वया हतः ॥ ३८० ॥
चन्द्रहासस्य वीर्येण हतोऽहं राक्षसाधम ।
निरायुधं को हनन्मूढ सायुधस्त्वामृते जनः ॥ ३८१ ॥
सीतापहारं जानीहि मृत्युस्ते दुष्टराक्षस ।
दुष्ट रावण रामस्त्वां वधिष्यति न संशयः ॥ ३८२ ॥
रुदन्ती दुःखशोकार्ता जटायुं प्राह मैथिली ।
मत्कृते मरणं यस्मात्तव प्राप्तं द्विजोत्तम ।
तस्माद्रामप्रसादेन विष्णुलोकमवाप्स्यसि ॥ ३८३ ॥
यावद्रामेण सङ्गस्ते भविष्यति महाद्विज ।
तावत्तिष्ठन्तु ते प्राणा इत्युक्त्वा तं खगोत्तमम् ॥ ३८४ ॥
ततो रत्नार्पितान्यङ्गाद्भूषणानि विमुच्य सा ।
तानि बद्ध्वा च वस्त्रेण रामहस्तं गमिष्यथ ।
इत्युक्त्वा पातयामास भूमौ सीता सुदुःखिता ॥ ३८५ ॥
एवं कृत्वा स सीतां (?) जटायुं पात्य भूतले ।
पुष्पकेण गतः शीघ्रं लङ्कां दुष्टनिशाचरः ॥ ३८६ ॥
अशोकवनिकामध्ये स्थापयित्वा स मैथिलीम् ।
इमामत्रैव रक्षध्वं राक्षस्यो विकृताननाः ।
इत्यादिश्य गृहं यातो राक्षसी राक्षसेश्वरः ॥ ३८७ ॥
लङ्कानिवासिनश्चोचुरेकान्ते च परस्परम् ।
अस्याः पुर्या विनाशार्थं स्थापितेयं दुरात्मना ।
राक्षसीभिर्विरूपाभी रक्ष्यमाणा समन्ततः ॥ ३८८ ॥

सीतापि दुःखिता तत्र स्मरन्ती राममेव सा ।
उवास वसतिं दुःखाद्दुःखिता रुदती भृशम् ॥ ३८९ ॥

सुग्रीवभृत्या[illegible]रयश्चलन्तोऽथ यदृच्छया ।
वस्त्रबद्धं तयोत्सृष्टं भूषणं गृह्य सत्वराः ॥ ३९० ॥

स्वभर्त्रे च निवेद्योचुः सुग्रीवाय महात्मने ।
अभूदत्र महद्युद्धं जटायो रावणस्य च ॥ ३९१ ॥

अथ रामश्च तं हत्वा मारीचं माययान्वितम् ।
निवर्त्य लक्ष्मणं दृष्ट्वा तेन गत्वा स्वमाश्रमम् ॥ ३९२ ॥

सीतामपश्यन्दुःखार्तः प्ररुरोद स राघवः ।
लक्ष्मणश्च महातेजा रुरोद भृशदुःखितः ॥ ३९३ ॥

बहुप्रकारमस्वस्थं रुदन्तं राघवं तदा ।
भूतले पतितं श्रीमानुत्थाप्याश्वास्य लक्ष्मणः ।
उवाच वचनं प्राप्तं तदायत्तः शृणुष्व मे ॥ ३९४ ॥

अतिवेलं महाराज न दुःखं कर्तुमर्हसि ।
उत्तिष्ठोत्तिष्ठ शीघ्रं त्वं सीतां मृगयितुं प्रभो ॥ ३९५ ॥

इत्येवमुक्त्वा रामः स लक्ष्मणेन महात्मना ।
उत्थापितो रघुपतिर्दुःखितो नष्टचेतनः ।
भ्रात्रा सह जगामाथ सीतां मृगयितुं वने ॥ ३९६ ॥

वनानि सर्वाणि विशोध्य राघवो
गिरींस्तु सर्वान्गिरिसार्थगोचरान् ।
तथा मुनीनामपि चाश्रमानटं-
स्तृणानि वल्लीगहनेषु भूमिषु ॥ ३९७ ॥

नदीतटेभ्यो विवरे गुहाशया-
न्निरीक्षमाणोऽपि महानुभावः ।
प्रियामपश्यन्भृशदुःखितस्तदा
जटायुमन्वैक्षदचेतनं नृपः ॥ ३९८ ॥

अहो भवान्येन हतस्त्वमीदृशीं
दशामवाप्यापि मृतो न जीवसि ।
संशाधि मर्त्यं मम दुःखितस्य मां
पत्नीवियोगादिह चागतस्य ॥ ३९९ ॥

एवं प्रलपमानायाः सीतायाश्च महास्वनम् ।
आकर्ण्य गृध्रराजोऽथ जटायुस्तत्र चागतः ॥ ३७६ ॥
तिष्ठ रावण दुष्टात्मन्मुञ्च मुञ्चाथ मैथिलीम् ।
इत्युक्त्वा युयुधे तेन जटायुस्तत्र वीर्यवान् ।
पक्षाभ्यां ताडयामास स जटायुं च वक्षसि ॥ ३७७ ॥
ताडयन्तं तु तं मत्वा बलवानिति रावणः ।
तुण्डचण्डप्रहारैस्तु भृशं तेन प्रपीडितः ॥ ३७८ ॥
तत उत्पत्य वेगेन खड्गं चन्द्रहासं महत् ।
जघान तेन दुष्टात्मा जटायुं धर्मचारिणम् ॥ ३७९ ॥
निपपात महीपृष्ठे जटायुः क्षीणचेतनः ।
उवाच च दशग्रीवं दुष्टात्मन्न त्वया हतः ॥ ३८० ॥
चन्द्रहासस्य वीर्येण हतोऽहं राक्षसाधम ।
निरायुधं को हनन्मूढ सायुधस्त्वामृते जनः ॥ ३८१ ॥
सीतापहारं जानीहि मृत्युस्ते दुष्टराक्षस ।
दुष्ट रावण रामस्त्वां वधिष्यति न संशयः ॥ ३८२ ॥
रुदन्ती दुःखशोकार्ता जटायुं प्राह मैथिली ।
मत्कृते मरणं यस्मात्तव प्राप्तं द्विजोत्तम ।
तस्माद्रामप्रसादेन विष्णुलोकमवाप्स्यसि ॥ ३८३ ॥
यावद्रामेण सङ्गस्ते भविष्यति महाद्विज ।
तावत्तिष्ठन्तु ते प्राणा इत्युक्त्वा तं खगोत्तमम् ॥ ३८४ ॥
ततो रत्नार्पितान्यङ्गाद्भूषणानि विमुच्य सा ।
तानि बद्ध्वा च वस्त्रेण रामहस्तं गमिष्यथ ।
इत्युक्त्वा पातयामास भूमौ सीता सुदुःखिता ॥ ३८५ ॥
एवं हृत्वा स सीतां (?) जटायुं पात्य भूतले ।
पुष्पकेण गतः शीघ्रं लङ्कां दुष्टनिशाचरः ॥ ३८६ ॥
अशोकवनिकामध्ये स्थापयित्वा स मैथिलीम् ।
इमामत्रैव रक्षध्वं राक्षस्यो विकृताननाः ।
इत्यादिश्य गृहं यातो राक्षसो राक्षसेश्वरः ॥ ३८७ ॥
लङ्कानिवासिनश्चोचुरेकान्ते च परस्परम् ।
अस्याः पुर्या विनाशार्थं स्थापितेयं दुरात्मना ।
राक्षसीभिर्विरूपाभी रक्ष्यमाणा समन्ततः ॥ ३८८ ॥

त्रिदिवं यामि धन्योऽस्मि त्वत्प्रसादान्न संशयः ।
त्वं सीताप्राप्तये सख्यं कुरु सूर्यसुतेन भोः ॥ ४११ ॥

वानरेन्द्रेण गत्वा तु सुग्रीवेण स ते सखा ।
भविष्यति नृपश्रेष्ठ ऋष्यमूकं गिरिं व्रज ॥ ४१२ ॥

इत्युक्त्वा तु गते तस्मिन्रामो लक्ष्मणसंयुतः ।
ददर्श शवरीं मार्गे सिद्धैस्तु मुनिभिः सह ॥ ४१३ ॥

तत्रस्थां तापसीं दृष्ट्वा सीतां संभाष्य संस्थिताम् ।
साम्येन पूजयित्वा तु स्वामवस्थां निवेद्य च ।
सीतां तां प्राप्स्यसीत्युक्त्वा प्रविश्याग्निं दिवं गता ॥ ४१४ ॥

ततो विनीतेन गुणान्वितेन
भ्रात्रा समेतो जगदेकनाथः ।
प्रियावियोगेन सुदुःखितात्मा
जगाम पम्पां स तु रामदेवः ॥ ४१५ ॥

–मार्कण्डेय उवाच ।

तस्यामिन्दीवराढ्यायां सरस्यां लक्ष्मणान्वितः ।
प्रियाभिवाहं पश्यन्तं (?) जटावल्कलधारिणौ ॥ ४१६ ॥

पश्यन्तौ सरसीं दिव्यां पद्मोत्पलदलावृताम् ।
मायारूपधरावेतौ तापसस्थानसेविनौ ॥ ४१७ ॥

वालिदूताविह प्राप्ताविति निश्चित्य सूर्यजः ।
उत्पपात भयत्रस्तो ऋष्यमूकाग्नगान्तरम् ।
[ जगाम ] वानरैः सर्वैरगस्त्याश्रममुत्तमम् ॥ ४१८ ॥

तत्र स्थित्वा स सुग्रीवः प्राह वायुसुतं पुनः ।
हनूमन्गच्छ शीघ्रं त्वं पम्पायां तापसवेषधृक् ॥ ४१९ ॥

तौ हि तस्य कुतो यातौ किमर्थं तत्र संस्थितौ ।
ज्ञात्वागच्छ मम ब्रूहि वायुपुत्र महामते ॥ ४२० ॥

इत्युक्तो हनुमान्गत्वा पम्पातटमनुत्तमम् ।
भिक्षुरूपी तु तं प्राह रामं भ्रात्रा समन्वितम् ॥ ४२१ ॥

को भवानिह संप्राप्तः [ कुतो ] ब्रूहि महामते ।
अरण्ये निर्जने घोरे कुतस्त्वं किं प्रयोजनम् ॥ ४२२ ॥

इत्युक्तमात्रे विहगोऽथ कृच्छ्रा-
दुवाच वाचं मधुरां तदानीम् ।
शृणुष्व राजन्मम वृत्तमत्र
वदामि दृष्टं च कृतं च सर्वम् ॥ ४०० ॥

दशाननस्तामपनीय मायया
सीतां समारोप्य विमानमुत्तमम् ।
जगाम खे दक्षिणदिक्षु सोऽसौ
सीता च भीता विललाप दुःखिता ॥ ४०१ ॥

आकर्ण्य सीतां वनमागतोऽहं
सीतां विमोक्तुं स्वबलेन राघव ।
युद्धं च तेनाहमतीव कृत्वा
हतः पुनः खड्गबलेन रक्षसा ॥ ४०२ ॥

वैदेहिवार्तामिह जीवता मया
दृष्टौ युवामुत्क्रमिष्यामि देहात् ।
त्वं मामशोकं कुरु भूमिपाल
यथातिदुष्टं सगणं तु नैर्ऋतम् ॥ ४०३ ॥

रामो जटायुनेरयुक्तः पुनस्तं प्राह शोकतः ।
स्वस्त्यस्तु ते द्विजवर गतिरस्तु परमास्तु ते ॥ ४०४ ॥

ततो जटायुः स्वं देहं विहाय गतवान्दिवम् ।
विमानेन सुरम्येण सेव्यमानोऽप्सरोगणैः ॥ ४०५ ॥

रामोऽपि दग्ध्वा तं देहं स्नात्वा दत्त्वा जलाञ्जलिम् ।
तत्रागच्छन्सुदुःखार्तोऽधोमुखीं पथि दृष्टवान् ॥ ४०६ ॥

उद्वहन्तीं महाल्कान्तां (?) विवृतास्यां भयंकरीम् ।
क्षयं नयन्तीं प्राणं पाययित्वा तु तां रुषा (?) ॥ ४०७ ॥

गच्छन्वनान्तरं रामः कबन्धं स ददर्श ह ।
विरूपं अरटं चोग्र दीर्घबाहुं भयंकरम् ॥ ४०८ ॥

स्कन्धान्तं च वने मार्गे तं हत्वासौ ददाह वै ।
दग्धोऽसौ दिव्यरूपी तु स्वस्थो राममभाषत ॥ ४०९ ॥

राम राम महाबाहो त्वया मम महामते ।
वैरूप्यं नाशितं वीर मुनिशापाच्चिरागतम् ॥ ४१० ॥

विध्वा महातरून्रामः सुग्रीवं प्राह वीर्यवान्।
वालिना गच्छ युध्यस्व धृतचिह्नो रवेः सुतः।
इत्युक्तः सूर्यपुत्रोऽसौ युद्धं चक्रेऽथ वालिना ॥ ४३७ ॥
रामोऽपि तत्र गत्वाथ शरेणैकेन वालिनम्।
विव्याध वीर्यवान्वाली पपात च ममार च ॥ ४३८ ॥
तारां मिश्राय दत्त्वा तु राज्यं च रविसूनवे।
धिन्नस्तं वालिपुत्रं तमङ्गदं विनयान्वितम्।
रणशौण्डं यौवराज्ये न्ययुङ्क्त राघवस्तथा ॥ ४३९ ॥
सुग्रीवं प्राह धर्मात्मा रामः कमललोचनः।
राज्यमन्वीक्ष्य गत्वा त्वं कपीनां पुनराव्रज ॥ ४४० ॥
त्वं सीतान्वेषणे यत्नं कुरु शीघ्रं कपीश्वर।
इत्युक्तः प्राह सुग्रीवो रामं लक्ष्मणसंयुतम् ॥ ४४१ ॥
प्रावृट्कालो महान्प्राप्तः सांप्रतं रघुनन्दन।
वानराणां गतिर्नास्ति वने वर्षति वासवे ॥ ४४२
गते प्रावृषि राजेन्द्र प्राप्ते शरदि निर्मले।
आगत्य प्रेषयिष्यामि वानरान्दिक्षु वीर्यवान् ॥ ४४३ ॥
इत्युक्त्वा रामतुष्टोऽसौ तं प्रणम्य कपीश्वरः।
पम्पापुरं प्रविश्याथ रेमे तारासमन्वितः ॥ ४४४ ॥
रामोऽपि विचरन्भ्रात्रा शैलशालैः महावने।
नवकुटजपुष्पाढ्यकदम्बकुसुमान्विते।
निवासं कृतवाञ्शैले नीलकण्ठे महामतिः ॥ ४४५ ॥
प्रावृट्काले गते कृच्छ्रे गते शरदि राघवः।
सीतावियोगव्यथितः सौमित्रिं प्राह लक्ष्मणम् ॥ ४४६ ॥
उल्लङ्घिते तु समये सुग्रीवेण ततो रुषा।
लक्ष्मणं प्राह काकुत्स्थो भ्रातरं भ्रातृवत्सलः ॥ ४४७ ॥
पश्य लक्ष्मण दुष्टोऽसौ नागतः कपिनायकः।
गते तु वर्षाकालेऽहमागमिष्यामि तेऽन्तिकम्।
अनेकवानरैः सार्धमित्युक्त्वासौ तदा गतः ॥ ४४८ ॥
तत्र गच्छ त्वरायुक्तो यत्रास्ते कपिनायकः।
तं प्रभुमग्रतः कृत्वा हरिसेनासमन्वितम्।
बलेन तावता सार्धं शीघ्रमागमनं कुरु ॥ ४४९ ॥

एवं वदन्तं तं प्राह लक्ष्मणो भ्रातुराज्ञया ।
प्रवक्ष्यामि निबोधेमं रामवृत्तान्तमादितः ॥ ४२३ ॥

राजा दशरथो नाम बभूव भुवि विश्रुतः ।
तस्य पुत्रो महाबुद्धे अयं ज्येष्ठो ममाग्रजः ।
अस्याभिषेकमारब्धं नानामुनिनिषेवितम् ॥ ४२४ ॥

जनस्थाने निवसतो रामस्य विदितात्मनः ।
भार्या सीता त्वपहृता वने केनापि पापिना ॥ ४२५ ॥

तामन्वान्वेषयन्वीरो रामः कमललोचनः ।
इहायातस्त्वया दृष्ट इति वृत्तान्तमीरितम् ॥ ४२६ ॥

श्रुत्वा सत्यं वचस्तस्य लक्ष्मणस्य महात्मनः ।
अभ्यर्चितात्मा विश्वासाद्धनुमान्मारुतात्मजः ॥ ४२७ ॥

तं मत्वा सुहृदन्वन्दे (?) रामं रघुपतिं तदा ।
तमाश्वास्याथ सुग्रीवं तयोः सख्यमकारयत् ॥ ४२८ ॥

शिरस्यारोप्य पादाब्जं रामस्य विदितात्मनः ।
सुग्रीवो वानरेन्द्रस्तमुवाच मधुराक्षरम् ॥ ४२९ ॥

अद्यप्रभृति राजेन्द्र त्वं स्वामी नात्र संशयः ।
अहं च तव भृत्यस्तु वानरैः सहितः प्रभो ॥ ४३० ॥

त्वच्छत्रुर्मम शत्रुः स्यादद्यप्रभृति राघव ।
मित्रं ते मम मित्रं तु त्वद्दुःखं तन्ममासुखम् ।
त्वत्प्रीतिरेव मत्प्रीतिरित्युक्त्वा पुनराह तम् ॥ ४३१ ॥

वाली नाम मम ज्येष्ठो महाबलपराक्रमः ।
महारहारी दुष्टात्मा महारासक्तमानसः ॥ ४३२ ॥

त्वामृते पुरुषव्याघ्र नास्ति हन्तास्य वालिनः ।
तं वध त्वं महाबाहो रामदेव रघूत्तम ॥ ४३३ ॥

इत्युक्तस्तं वधिष्यामीत्याह रामः कपीश्वरम् ।
तं हत्वा तव दास्यामि पत्नीं राज्यं च वालिनः ॥ ४३४ ॥

युगपत्सप्त सालांस्तु तरून्यो घातयिष्यति ।
स तं वधिष्यतीत्युक्तं पुराणैर्नृपात्मज ॥ ४३५ ॥

तत्प्रत्ययार्थं रामोऽपि नाराचस्यान्महातरून् ।
अर्धाकृष्टेन बाणेन बिभ्याध युगपद्भुवम् ॥ ४३६ ॥

नयिष्ये मृत्युसदनं सुग्रीवं वालिनं यथा।
स शरो विद्यतेऽस्माकं येन वाली हतः कपिः ॥ ४६४ ॥

लक्ष्मणेनैवमुक्तोऽथ सुग्रीवः कपिनायकः।
निर्गम्य तु नमश्चक्रे लक्ष्मणं मन्त्रचोदितम् ॥ ४६५ ॥

उवाच च महात्मानं लक्ष्मणं वानराधिपः।
अज्ञानकृतपापानामस्माकं क्षन्तुमर्हसि ॥ ४६६ ॥

समयः कृतो मया राज्ञा रामेणामिततेजसा।
यत्तदानीं महाराज न तमद्यापि लङ्घये ॥ ४६७ ॥

यास्यामि निखिलैरद्य कपिभिर्नृपनन्दन।
त्वया सह महावीर रामपार्श्वमसंशयः ॥ ४६८ ॥

सन्ति मे बहवः शूराः सीतान्वेषणकर्मणि।
तानहं प्रेषयिष्यामि दिक्षु सर्वासु पार्थिव ॥ ४६९ ॥

इत्युक्तः कपिराजेन सुग्रीवेण स लक्ष्मणः।
एहि शीघ्रं गमिष्यामो रामपार्श्वमितोऽधुना ॥ ४७० ॥

सर्वानाह्वय तान्वीरानृक्षाणां हरीणामपि।
यान्दृष्ट्वा प्रीतिमभ्येति राघवस्ते महामते ॥ ४७१ ॥

इत्युक्तो लक्ष्मणेनाथ सुग्रीवः स तु वीर्यवान्।
पार्श्वस्थं युवराजानमङ्गदं संज्ञयाब्रवीत्।
सोऽपि निर्गत्य नीलादीनाह सेनापतींस्तथा ॥ ४७२ ॥

तैराहूताः समायाता ऋक्षवानरकोटयः।
गुहास्थाः [ कांदरस्था ] श्च गिरिस्थाश्चैव वानराः ॥ ४७३ ॥

तैः सार्धं पर्वताकारैर्वानरैर्भीमविक्रमैः।
सुग्रीवः शीघ्रमागत्य ववन्दे राघवाय सः।
लक्ष्मणोऽपि नमस्कृत्य रामं भ्रातरमब्रवीत् ॥ ४७४ ॥

आगतोऽस्मि महावीर सुग्रीव कुशलं तव।
श्रुत्वेत्थं रामवाक्यं तु प्रसन्नो वानराधिपः।
शिरस्यञ्जलिमादाय सुग्रीवो राममब्रवीत् ॥ ४७५ ॥

तदा मे कुशलं राजन्सीतादेवी तव प्रभो।
अन्विष्य तु मया दत्ता यदा भवति नान्यथा ॥ ४७६ ॥

नात्रागच्छति सुग्रीवो यद्यसौ प्राप्तभूमिकः ।
तदा त्वयैवं वक्तव्यः सुग्रीवोऽनृतभाषकः ॥ ४५० ॥

शरो दुष्टहृदप्येकः करे मेऽद्यापि तिष्ठति ।
श्रुत्वैतदाचर कपे रामवाक्यं हितं तव ॥ ४५१ ॥

इत्युक्तः स तथेत्युक्त्वा रामं नत्वा च लक्ष्मणः ।
पम्पापुरं जगामाशु सुग्रीवो यत्र तिष्ठति ॥ ४५२ ॥

दृष्ट्वा स तत्र सुग्रीवं कपिराजं बभाष वै ।
ताराभोगाविषक्तस्त्वं रामकार्यपराङ्मुखः ॥ ४५३ ॥

किं त्वया विस्मृतं सर्वं रामाग्रे समयः कृतः ।
सीतामान्विष्य दास्यामि यत्र क्वापीति दुर्मते ॥ ४५४ ॥

हत्वा तु वालिनं राज्यं येन दत्तं पुरा तव ।
तं त्वामृते तु को रक्षां कुरुते पापचेतसम् ॥ ४५५ ॥

प्रतिश्रुत्य च रामस्य भार्याहीनस्य भूपते ।
साहाय्यं ते करोमीति देवाग्निजलसंनिधौ ॥ ४५६ ॥

ये ये ते शत्रवो राजंस्ते ते च मम शत्रवः ।
मित्राणि यानि ते देव तानि मित्राणि मे सदा ॥ ४५७ ॥

सीतामन्वेषितुं राजन्वानरैर्बहुभिर्वृतः ।
स त्वं यास्यसि पार्श्वस्थमित्युक्त्वा कोऽन्यथाकरोत् ॥ ४५८ ॥

त्वामृते पापिनं दुष्टं रामदेवस्य संनिधौ ।
कारयित्वा तु तेनैव स्वराज्यं दुष्टवानरम् ॥ ४५९ ॥

ऋषीणां वचनं सत्यं त्वयि दृष्टं मयाधुना ।
येन विख्यापितं लोके सर्वज्ञानां महात्मनाम् ॥ ४६० ॥

न तं पश्यामि लोकेऽस्मिन्कृते प्रतिकरोति यः ।
सर्वस्य हि कृतार्थस्य मतिरन्या प्रवर्तते ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ४६१ ॥

शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
कृतघ्नस्य कर्यदष्ट (?) न दृष्टा निष्कृतिः क्वचित् ।
कृतघ्नता न कार्या ते स्वरकृतं समयं स्मर ॥ ४६२ ॥

एहि त्वं गच्छ शरणं काकुत्स्थं हितपालकम् ।
यदि त्वं नायासि कपे रामवाक्यमिदं शृणु ॥ ४६३ ॥

अचिरादेव युज्यन्तां दृष्ट्वा सीतां यशस्विनीम्।
स्थानतो रूपतश्चैव शीलतश्च विशेषतः।
केन नीतास्ति कुत्रास्ते ज्ञात्वात्रागच्छ पुत्रक॥ ४८९॥

इत्युक्तः कपिराजेन पितृव्येण महात्मना।
अङ्गदस्तूर्णमास्थाय तस्याज्ञां शिरसा दधे॥ ४९०॥

इत्युक्ता हरयः स्थाप्य (?) वानरानथ जाम्बवान्।
रामं च लक्ष्मणं चैव सुग्रीवं मारुतात्मजम्।
एकतः स्थाप्य तानाह नीतिमान्नीतिमद्वचः॥ ४९१॥

श्रूयतां वचनं मह्यं सीतान्वेषणकर्मणि।
श्रुत्वापि तद् गृहाण त्वं रोचते चेन्नृपात्मज॥ ४९२॥

रावणेन जनस्थानान्नीयमाना तपस्विनी।
जटायुना तु सा दृष्टा शक्तौ युद्धं प्रकुर्वता॥ ४९३॥

भूषणानि च दृष्टानि तया क्षिप्तानि तत्र वै।
जटायुवाक्यं राजेन्द्र सत्यमित्यवधारय॥ ४९४॥

एतस्मात्कारणात्सीता नीता तेनैव रक्षसा।
रावणेन महाबाहो लङ्कायां वर्तते तु सा॥ ४९५॥

त्वां स्मरन्ती तु तत्रस्था त्वद्दुःखेन सुदुःखिता।
रक्षन्ती यत्नतो वृत्तं तत्रापि जनकात्मजा॥ ४९६॥

त्वदाश्रये च स्वप्राणान्धारयन्ती शुभानना।
स्थिता प्रायेण ते देवी सीता दुःखपरायणा॥ ४९७॥

यत एवमतो राजन्नुदधेर्लङ्घनक्षमम्।
वायुपुत्रं हनूमन्तं त्वमत्र द्रष्टुमर्हसि॥ ४९८॥
त्वं चाप्यर्हसि सुग्रीव प्रार्थितुं मारुतात्मजम्।
तमृते सागरं तर्तुं वानराणां न विद्यते॥ ४९९॥

बलं कस्यापि नो वीर इति मे मनसि स्थितम्।
क्रियतां मे वचः क्षिप्रं हितं पथ्यं च नः सदा॥ ५००॥

इत्युक्ते जाम्बवत्येनं नीतिमत्यक्षरान्विते।
वाक्ये वानरराजोऽसौ शीघ्रमुत्थाय चासनात्।
वायुपुत्रसमीपं तु गत्वा तं वाक्यमब्रवीत्॥ ५०१॥

इत्युक्ते वचने तेन हनुमान्मारुतात्मजः ।
नत्वा रामं चभाषे तं सुग्रीवं कपिनायकम् ॥ ४७७ ॥

शृणु सुग्रीव मे वाक्यं राजायं दुःखितो भृशम् ।
सीतावियोगेन सदा नाश्नाति च फलादिकम् ।
अस्य दुःखेन सततं लक्ष्मणोऽयं सुदुःखितः ॥ ४७८ ॥

एतयोरत्र यावस्था श्रुत्वा [ तां ] भरतोऽनुजः ।
दुःखी भवति तद्दुःखाद्दुःखं प्राप्नोति तज्जनः ।
अत एव महाराज सीतामन्वेषयाचिरम् ॥ ४७९ ॥

इत्युक्ते वचने तत्र वायुपुत्रे हनूमति ।
जाम्बवानतितेजस्वी नत्वा रामं पुरःस्थितम् ॥ ४८० ॥

स प्राह कपिराजानं नीतिमान्नीतिमद्वचः ।
यदुक्तं वायुपुत्रेण तथा तदवगच्छत ॥ ४८१ ॥

यत्र क्वापि स्थिता राम तव भार्या यशस्विनी ।
पतिव्रता महाभागा वैदेही जनकात्मजा ।
अद्यापि वृत्तसंपन्ना इति मे मनसि स्थितम् ॥ ४८२ ॥

न हि कल्याणचित्तायाः सीतायाः केनचिद्भुवि ।
पराभवोऽस्ति सुग्रीव प्रेषयाद्यैव वानरान् ॥ ४८३ ॥

इत्युक्तस्तेन सुग्रीवः प्रीतात्मा कपिनायकः ।
पश्चिमस्यां दिशि तदा प्रेषयामास तान्कपीन् ।
अन्वेष्टुं रामभार्यां तां महाबलपराक्रमान् ॥ ४८४ ॥

उत्तरस्यां दिशि तदा निपुणांस्तु वानरान् ।
प्रेषयामास धर्मात्मा सीतान्वेषणकर्मणि ॥ ४८५ ॥

पूर्वस्यामपि च कपीन्कपिराजः प्रतापवान् ।
प्रेषयामास रामस्य पत्नीमन्विषतेति वै ॥ ४८६ ॥

इति तान्प्रेषयित्वा तु वानरानथ नराधिपः ।
सुग्रीवो वालिपुत्रं तु अङ्गदं प्राह बुद्धिमान् ।
त्वं गच्छ दक्षिणं देशं सीतान्वेषणकर्मणि ॥ ४८७ ॥

जाम्बवांश्च हनूमांश्च मैन्दो द्विविद एव च ।
नीलाद्याश्चैव हरयो महाबलपराक्रमाः ।
अनुयास्यन्ति गच्छ त्वं त्वामद्य मम शासनात् ॥ ४८८ ॥

ज्ञात्वा त्वं गच्छ सकलं लक्षणं चावयोरिह ।
नान्यथा विश्वसेत्सा त्वामिति मे मनसि स्थितम् ॥ ५१५ ॥

इत्युक्तो रामदेवेन प्रभञ्जनसुतो बली ।
उत्थाय तं पुनः स्थित्वा कृताञ्जलिरुवाच तम् ॥ ५१६ ॥

जानामि लक्षणं सर्वं युवयोस्तु विशेषतः ।
गच्छामि कपिभिः सार्धं त्वं शोकं कुरु मा प्रभो ॥ ५१७ ॥

अन्यच्च देहाभिज्ञानं विश्वासो येन मे भवेत् ।
सीतायास्तव देव्यास्तु जानन्राजीवलोचन ॥ ५१८ ॥

इत्युक्तो वायुपुत्रेण रामः कमललोचनः ।
अङ्गुलीयकमुन्मुच्य ददत्स्वनामचिह्नितम् ॥ ५१९ ॥

तद् गृहीत्वा तदा सोऽपि हनूमान्मारुतात्मजः ।
रामं प्रदक्षिणीकृत्य लक्ष्मणं च कपीश्वर ।
नत्वा तथेश्वपतस्मा (?) त्वरया मारुतात्मजः ॥ ५२० ॥

सुग्रीवोऽपि च ताञ्ज्ञात्वा वानरान्गन्तुमुद्यतान् ।
आज्ञया ताञ्ज्ञापयति बलवान्बलदर्पितान् ॥ ५२१ ॥

शृण्वन्तु वानराः सर्वे शासनं मम भीतिदम् ।
विलम्बश्च न कर्तव्यो युष्माभिः पर्वतादिषु ॥ ५२२ ॥

द्रुतं गत्वा तु चान्विष्य आगन्तव्यमनिन्दिताम् ।
रामपत्नीं महाभागां स्थास्येऽहं रामसंनिधौ ।
कर्तनं वः करिष्यामि त्वन्यथा कर्णनासयोः ॥ ५२३ ॥

एवं तान्प्रेषयित्वा तु आज्ञापूर्वं कपीश्वराः (?) ।
अथ ये वानरा याताः पश्चिमादिषु दिक्षु वै ॥ ५२४ ॥

तेषु धि .. समस्तेषु (?) गिरीणामपि पर्वसु ।
नदीतीरेषु सर्वेषु मुनीनामाश्रमेषु च ॥ ५२५ ॥

कन्दरेषु च सर्वेषु वनेषु पवनेषु च ।
वृक्षमूलेषु गुल्मेषु गुहासु च शिलासु च ॥ ५२६ ॥

सह्यपर्वतपार्श्वेषु विन्ध्यसागरपार्श्वयोः ।
हिमवत्यपि शैलेषु तथा किंपुरुषादिषु ॥ ५२७ ॥

मेरुदेशेषु सर्वेषु सप्त (?) षा नरकेषु च ।
मध्यदेशेषु सर्वेषु काश्मीरेषु महाबलाः ॥ ५२८ ॥

शृणु मद्वचनं वीर हनूमन्मारुतात्मज ।
अयमिक्ष्वाकुतिलको राजा रामः प्रतापवान् ॥ ५०२ ॥

पितुरादेशमादाय भ्रातृभार्यासमन्वितः ।
प्रविष्टो दण्डकारण्यं साक्षाद्धर्मपरायणः ।
सर्वात्मा सर्वलोकेषु विष्णुर्मानुषरूपवान् ॥ ५०३ ॥

अस्य भार्या हृता केन दुष्टेनापि दुरात्मना ।
तद्वियोगजदुःखार्तो विचिन्वंस्तां वने वने ।
मया दृष्टो नृपः पूर्वमयं वीरः प्रतापवान् ॥ ५०४ ॥

आनीतेन तु सहसा वायुपुत्र त्वया वने ।
एतेन सह संगत्य सन्मानश्चापि कारितः ॥ ५०५ ॥

अनेन हि हतः शत्रुर्मम वाली महाबलः ।
अस्य प्रसादेन कपे राज्यं प्राप्तं मयाधुना ॥ ५०६ ॥

मया च यत्प्रतिज्ञातमस्य साहाय्यकर्मणि ।
तत्सर्वं कर्तुमिच्छामि त्वद्बलान्मारुतात्मज ॥ ५०७ ॥

उत्तीर्य सागरं वीर सीतां दृष्ट्वाप्यनिन्दिताम् ।
भूयस्तर्तुं बलं नास्ति वानराणां त्वया विना ॥ ५०८ ॥

अतस्त्वमेव जानासि स्वामिकार्यं महामते ।
बलबाद्धीतिमांश्चैव दक्षस्त्वं दौत्यकर्मणि ॥ ५०९ ॥

तेनैवमुक्तो हनुमान्सुग्रीवेण महात्मना ।
स्वामिनोऽर्थे किं न कार्यमसकृत्किं प्रभाषसे ॥ ५१० ॥

इत्युक्तो वायुपुत्रेण रामस्तत्पुरतः स्थितम् ।
प्राह वाक्यं महाबाहुर्बाष्पसंपूर्णलोचनः ।
सीतां स्मृत्वा सुदुःखार्तः कालयुक्तममित्रजित् ॥ ५११ ॥

त्वयि भारं समारोप्य समुद्रतरणादिकम् ।
सुग्रीवः स्थास्यते ह्यत्र मया सार्धं महामते ।
हनूमन्गच्छ भद्रं ते सुग्रीवस्य विशेषतः ॥ ५१२ ॥

प्रायेण रक्षसा नीता भार्या मे जनकात्मजा ।
तत्र गच्छ महावीर यत्र सा वर्ततेऽधुना ॥ ५१३ ॥

यदि पृच्छति मा दक्षा ममाकारमशेषतः ।
गतो निरीक्ष्य मां भूयो लक्ष्मणं च ममानुजम् ॥ ५१४ ॥

इत्युक्त्वा साग्रजस्तेषां योगादन्नं तपस्विनी ।
भोजयित्वा यथाकामं भूयस्तानाह भाविनी ॥ ५४२ ॥

सीतास्थानं तु जानाति संपातिर्नाम पक्षिराट् ।
यस्मिन्विद्रस्ते सोऽपि महेन्द्रे द्विजसत्तमः ॥ ५४३ ॥

मार्गेणानेन हृत्यस्तत्र यूयं गमिष्यथ ।
स वक्ति सीतां संपातिर्दूरदर्शी ह्ययं खगः ॥ ५४४ ॥

तेनाविघ्नं तु पन्थानं पुनरासाद्य गच्छथ ।
अवश्यं जानकीं सीतां द्रक्ष्यते पवनात्मजः ॥ ५४५ ॥

तयैवमुक्ताः कपयः परां प्रीतिमुपागताः ।
दृष्ट्वा ते घनमापन्नास्तां प्रणम्य प्रतस्थिरे ॥ ५४६ ॥

महेन्द्राद्रिं गता वीरा वानरास्तद्दिदृक्षया ।
तत्र संपातिमासीनं दृष्टवन्तः कपीश्वराः ॥ ५४७ ॥

तानुवाचाथ संपातिर्वानरानागतान्द्विजाः ।
के यूयमिह संप्राप्ताः कस्य वा ब्रूत माचिरम् ॥ ५४८ ॥

इत्युक्ता वानराः प्रोचुर्यथावृत्तमनुक्रमात् ।
रामदूता वयं सर्वे सीतान्वेषणकर्मणि ।
प्रेषिताः कपिराजेन सुग्रीवेण महात्मना ॥ ५४९ ॥

त्वां द्रष्टुमिह संप्राप्ताः सिद्धस्त्रीवचनाद्द्विजाः ।
सीतास्थानं महाभाग त्वं नो वद महामते ॥ ५५० ॥

इत्युक्तो वानरैः सोऽपि ईक्षांचक्रे स दक्षिणाम् ।
सीतां दृष्ट्वा स लङ्कायामशोकाख्ये महावने ॥ ५५१ ॥

स्थितेति कथिते तेन स जटायुर्मृतस्तव ।
भ्रातेति चोचुः स स्नात्वा दत्त्वा तस्योदकाञ्जलिम् ।
गत्वा महेन्द्रशृङ्गे तु समारुह्य क्षणं स्थिताः ॥ ५५२ ॥

सागरं वीक्ष्य ते सर्वे परस्परमथाब्रुवन् ।
रावणेनैव भार्या सा नीता रामस्य निश्चितम् ।
संपातिवचनादद्य संज्ञातं सकलं हि नः ॥ ५५३ ॥

वानराणां तु कस्यात्र उत्तीर्य लवणोदधिम् ।
लङ्कां प्रविश्य दृष्ट्वा तां रामपत्नीं यशस्विनीम् ।
पुनश्चोदधितरणे शक्तिं युतारिशोभनाः (?) ॥ ५५४ ॥

पूर्वदेशेषु सर्वेषु कामरूपेषु कोसले ।
तीर्थस्थानेषु सर्वेषु सप्तकोङ्कणकेषु च ।
यत्नतोऽन्विष्य ते सीतामदृष्ट्वा पुनरागताः ॥ ५२९ ॥

आगत्य ते नमस्कृत्य रामलक्ष्मणपादयोः ।
सुग्रीवस्य विशेषेण नास्माभिः कमलेक्षणा ।
दृष्टा सती महाभागा इत्युक्त्वा तत्र सस्थिरे ॥ ५३० ॥

ततस्तं दुःखितं प्राह रामदेवं कपीश्वरः ।
सीता दक्षिणदिग्भागे स्थिता द्रष्टुं च ते नृप ।
शक्या वा नरसिंहेन वायुपुत्रेण धीमता ॥ ५३१ ॥

दृष्ट्वा सीतामिहायाति हनूमानात्र संशयः ।
स्थिरो भव महाबाहो राम सत्यमिदं वचः ॥ ५३२ ॥

लक्ष्मणोऽप्याह शकुनं तत्र वाक्यमिदं तदा ।
सर्वथा दृष्टसीतस्तु हनूमानागमिष्यति ।
इत्याश्वास्य स्थितौ तत्र रामं सुग्रीवलक्ष्मणौ ॥ ५३३ ॥

अथाङ्गदं पुरस्कृत्य ये गता वानरोत्तमाः ।
यत्नादन्वेषमाणास्ते रामपत्नीं यशस्विनीम् ॥ ५३४ ॥

अदृष्ट्वा श्रममापन्ना कांदिग्भूतास्तदा वने ।
भक्षणेन विहीनास्ते क्षुधयापि प्रपीडिताः ॥ ५३५ ॥

भ्रमन्तो गहनेऽरण्ये क्वापि दृष्ट्वा स्वयंप्रभाम् ।
गुहानिवासिनीं सिद्धामृषिपत्नीमनिन्दिताम् ॥ ५३६ ॥

सा च तानागतान्दृष्ट्वा स्वाश्रमं प्रति वानरान् ।
आहारं कस्य यूयं तु कुतः किं च प्रयोजनम् ॥ ५३७ ॥

इत्युक्ते आम्यधानाह तां सिद्धां स महामतिः ।
सुग्रीवस्य वयं भृत्या आगता ह्यत्र शासने ॥ ५३८ ॥

रामकार्यार्थमनघे सीतान्वेषणकर्मणि ।
कांदिग्भूता निराहारा अदृष्ट्वा जनकात्मजा ॥ ५३९ ॥

इत्युक्ते आम्यवत्यत्र पुनस्तानाह सा शुभा ।
जानामि रामं सीतां च लक्ष्मणं च कपीश्वरम् ॥ ५४० ॥

भुञ्जध्वमन्नं मद्दत्तमाहारं वानरेश्वराः ।
रामकार्यप्रवृत्ता त्वां (?) यूयं रामः सखा मम ॥ ५४१ ॥

पितृमार्गेण यातस्य वायुपुत्रस्य धीमतः ।
रामकार्यपरस्याथ सागरेण प्रचोदितः ॥ ५६७ ॥

विश्रामार्थं समुत्तस्थौ मैनाको लवणोदधौ ।
तं निरीक्ष्य निपीड्याद्रिं ययौ वातजवः कपिः ॥ ५६८ ॥

सुरसामपि संभाष्य आगतं च कुतस्त्वया ।
आस्यं वृत्तं प्रविश्याथ नागमं तद्विनिःसृतः ॥ ५६९ ॥

उत्पतन्नम्बरे धीरः सिंहिकास्यान्महाकपिः ।
प्रगृह्य गतवाञ्शीघ्रं वायुपुत्रः प्रतापवान् ॥ ५७० ॥

अथमाल्लङ्घयित्वा तु सागरं पवनात्मजः ।
लङ्काख्ये नगरे रम्ये वृक्षाग्रे निपपात ह ॥ ५७१ ॥

तस्मिन्स पर्वते शेषदिनं नीत्वा दिनक्षये ।
संध्यामुपास्य हनुमान्गतो लङ्कां शनैर्निशि ॥ ५७२ ॥

लङ्काभिधानां निर्जित्य देवतां प्रविवेश ह ।
लङ्कामनेकरत्नाढ्यां लङ्काश्चर्यसमन्विताम् ॥ ५७३ ॥

राक्षसेषु प्रसुप्तेषु नीतिमान्पवनात्मजः ।
रावणस्य ततो वेश्म प्रविवेशाथ ऋद्धिमत् ॥ ५७४ ॥

शयानं रावणं दृष्ट्वा तल्पे महति वानरः ।
नासापूर्यैस्तु घोत्कारैर्विशद्भिर्वायुमेचकः ॥ ५७५ ॥

तथैव दशवक्त्रैस्तु दंष्ट्रोपेतैस्तु संयतम् ।
स्त्रीसहस्रं तु तद्दृष्ट्वा नानाभरणभूषितम् ॥ ५७६ ॥

तस्मिन्सीतामदृष्ट्वा तु रावणस्य गृहे शुभे ।
तत्पार्श्वे च गृहे शेते नायकानां च रक्षसाम् ॥ ५७७ ॥

दुःखितो वायुपुत्रस्तु संपातिवचनं स्मरन् ।
अशोकवनिकां प्राप्तो नानापुष्पसमन्विताम् ॥ ५७८ ॥

नम्यन्ती नयवानेन (?) मन्देन च सुगन्धिषु ।
प्रविश्य शिंशपावृक्षमाश्रितां जनकात्मजाम् ।
रामस्य पत्नीमद्राक्षीद्राक्षसीभिः सुरक्षिताम् ॥ ५७९ ॥

अशोकवृक्षमारुह्य पुष्पाढ्यं मृदुपल्लवम् ।
आसांचक्रे हरिस्तत्र सेयं सीतेति संस्मरन् ॥ ५८० ॥

इत्युक्ते जाम्बवानाह सर्वे शक्ताः स्म वानराः ।
सागरोत्तरणे किं तु कार्यमन्यच्च संभवेत् ।
तत्र दक्षोऽयमेवात्र हनुमानिति मे मतिः ॥ ५५५ ॥

कालक्षयो न कर्तव्यो मासार्धमधिकं गतम् ।
यत्र दृष्ट्वाद्य गच्छामो वैदेहीं वानरर्षभाः ॥ ५५६ ॥

किं तु नासादिकं स्वाङ्गं कृन्तिष्यति कपीश्वरः ।
तस्मात्प्रार्थनमस्माभिर्वायुपुत्रस्य मे मतम् ।
इत्युक्ते तं तथेत्यूचुर्वानरा वृद्धवानरम् ॥ ५५७ ॥

ततस्ते प्रार्थयामासुर्वानराः पवनात्मजम् ।
हनूमन्तं महाप्राज्ञं दक्षं कार्ये जवाधिकम् ॥ ५५८ ॥

गच्छ त्वं रामभृत्यत्वं रावणस्य भयाय च ।
रक्षस्व वानरकुलमशेषं चाञ्जनासुत ।
इत्युक्तस्तांस्तथेत्याह वानरान्पवनात्मजः ॥ ५५९ ॥

रामप्रयुक्तोऽथ पुनः स्वभर्तृणा
गिरौ महेन्द्रे कपिभिश्च चोदितः ।
गन्तुं प्रचक्रे मतिमञ्जनीसुतः
समुद्रमुत्तीर्य निशाचरालयम् ॥ ५६० ॥

मार्कण्डेय उवाच ।

स तु रावणनीतायाः सीतायाः परिमार्गणम् ।
इयेष पदमन्वेष्टुं रावणाचरिते पथि ॥ ५६१ ॥
अञ्जलिं प्राङ्मुखः कृत्वा पवनायात्मयोनये ।
मनसा वन्द्य रामं च लक्ष्मणं च महारथम् ॥ ५६२ ॥
सागरं सरितश्चैव प्रणम्य शिरसा कपिः ।
ज्ञातींश्च संपरिष्वज्य कृत्वा चैव प्रदक्षिणम् ॥ ५६३ ॥
अरिष्टं गच्छ पन्थानं पुण्यं वायुनिषेवितम् ।
पुनरागमनायेति वानरैरभिपूजितः ॥ ५६४ ॥
तेजः सत्त्वं तथा वीर्यमाविवेशाथ वीर्यवान् ।
मार्गमालोकयन्दूरादूर्ध्वप्रणिहितेक्षणः ॥ ५६५ ॥
सुपर्णमिव चात्मानं भावयित्वा महाबलः ।
उत्पत्य तद्गिरेः शृङ्गं निपीड्य गिरिमम्बरे ॥ ५६६ ॥

महत्या सेनया युक्तः सुग्रीवः कपिनायकः ।
तेन सार्धमिहागत्य रामस्तव पतिः प्रभुः ॥ ५९५ ॥

लक्ष्मणश्च महावीरो देवरस्ते शुभानने ।
क्षिप्रं पश्यति रामस्त्वां सत्यमेतद्ब्रवीमि ते ॥ ५९६ ॥

इत्याश्वास्य ततो देवीं दुःखितां जनकात्मजाम् ।
तच्छ्रुत्वा मणिमादाय श्रुत्वा काकपराभवम् ।
नत्वा तां प्रस्थितो वीरो गन्तुं कृतमतिः कपिः ॥ ५९७ ॥

ततो विमृश्य भङ्क्त्वा तु अशोकवनिकां कपिः ।
तोरणस्थो ननादोच्चैः रामो जयति वीर्यवान् ॥ ५९८ ॥

अनेकान्राक्षसान्हत्वा पञ्च सेनापतींस्तु सः ।
ततस्त्वक्षं कुमारं च बहुराक्षससैनिकम् ।
सौध्वं ससारथिं हत्वा इन्द्रजिद्वशमागतः ॥ ५९९ ॥

रावणस्य पुरः स्थित्वा रामं संकीर्त्य लक्ष्मणम् ।
सुग्रीवं च महावीर्यं दग्ध्वा लङ्कामशेषतः ॥ ६०० ॥

निर्भर्त्स्य रावणं दुष्टं पुनः संभाष्य जानकीम् ।
भूयः सागरमुत्तीर्य ज्ञातीनां सोऽद्य वीर्यवान् ॥ ६०१ ॥

सीतादर्शनमावेद्य हनूमांस्तैस्तु पूजितः ।
वानरैः सार्धमागत्य हनुमान्मधुवनं महत् ॥ ६०२ ॥

निहत्य रक्षः पालांस्तु पाययित्वा तु तान्मधु ।
यथेष्टं दधिमुखं पीत्वा हर्षितैर्हरिभिः सह ॥ ६०३ ॥

खं समाप्लुत्य संभाष्य रामलक्ष्मणपादयोः ।
नत्वा तु हनुमांस्तत्र सुग्रीवं च विशेषतः ॥ ६०४ ॥

आदितः सर्वमावेद्य समुद्रतरणादिकम् ।
कथयामास रामाय दृष्टा सीता मयेति वै ॥ ६०५ ॥

अशोकवनिकामध्ये सीतादेवी सुदुःखिता ।
राक्षसीभिः परिवृता स्मरन्ती त्वां च सर्वदा ॥ ६०६ ॥

अश्रुपूर्णमुखी दीना तव पत्नी वरानना ।
शीलवृत्तसमायुक्ता तत्र सा जनकात्मजा ।
सर्वत्रान्वेषमाणेन मया दृष्टा पतिव्रता ॥ ६०७ ॥

सीतां निरीक्ष्य वृक्षाग्रे यावदास्तेऽनिलात्मजः ।
स्त्रीभिः परिवृतस्तत्र रावणस्तावदागतः ॥ ५८१ ॥

आगत्य सीतां प्राहाथ प्रिये मां भज कामुकम् ।
भूषिता भव वैदेहि त्यज रामगतं मनः ॥ ५८२ ॥

इत्येवं भाषमाणं तमन्तर्धाय तृणं तु सा ।
प्राह वाक्यं ततः सीता कम्पमानाथ रावणम् ॥ ५८३ ॥

गच्छ रावण दुष्ट त्वं परदारहराधम ।
अचिराद्रामबाणास्ते पिबन्तु रुधिरं तव ॥ ५८४ ॥

तथेत्युक्तो भर्त्सयित्वा राक्षसीराह राक्षसः ।
द्विमासाभ्यन्तरं चैनां वशीकुरुत माचिरम् ॥ ५८५ ॥

न भजेद्यदि मां सीता ततः खादथ मानुषीम् ।
इत्युक्त्वा गतवान्दुष्टो रावणः संनिवेशनम् ॥ ५८६ ॥

ततोऽन्या अपि तां प्राहू राक्षस्यो जनकात्मजाम् ।
रावणं भज कल्याणि धनवन्तं सुखीभव ॥ ५८७ ॥

इत्युक्ता प्राह ता भर्ता राघवो लघुविक्रमः ।
निहत्य रावणं युद्धे सगणं मां नयिष्यति ॥ ५८८ ॥

नाहमन्यस्य भार्या स्यामृते रामं रघूत्तमम् ।
स त्वागत्य दशग्रीवं हत्वा मां पालयिष्यति ॥ ५८९ ॥

इत्याकर्ण्य वचस्तस्या राक्षस्यो वदशुभंयम् ।
हन्यतां हन्यतामेवा भक्ष्यतां भक्ष्यतामियम् ॥ ५९० ॥

ततस्तां त्रिजटा प्राह स्वप्नं दृष्टमनिन्दिता ।
शृणुध्वं दुष्टराक्षस्यो रावणस्य विनाशनम् ॥ ५९१ ॥

रक्षोभिः सह सर्वैस्तु रावणस्य मृतिप्रदः ।
लक्ष्मणेन सह भ्रात्रा रामस्य विजयप्रदः ।
स्वप्नोऽशुभो मया दृष्टः सीतायाश्च पतिव्रता (?) ॥ ५९२ ॥

त्रिजटायास्त्वमाकर्ण्य सीतापार्श्वे निसृज्य च ।
राक्षस्यः सुषुपुः सर्वाः सीतामाहाञ्जनासुतः ॥ ५९३ ॥

कीर्तयन्रामवृत्तान्तं सकलं पवनात्मजः ।
तस्या विश्वासमानीय दत्वा रामाङ्गुलीयकम् ।
संभाष्य लक्ष्मणं सर्वं रामलक्ष्मणयोः पुनः ॥ ५९४ ॥

ततो विभीषणेनोक्तस्त्वं विष्णुर्भुवनेश्वरः ।
अब्धिर्ददातु मार्गं ते देव तं याचयाद्य तु ।
इत्युक्ते वानरैः सार्धं शिश्ये तत्र स राघवः ॥ ६२१ ॥

सेतुबन्धनमात्रां तु महीं याच्य जनार्दने ।
सुप्ते रामे गतं तत्र त्रिरात्रममितद्युतिः ॥ ६२२ ॥

ततः क्रुद्धो जगन्नाथो रामोऽब्धौ रक्तलोचनः ।
संक्षोभमगमत्कर्तुमाग्नेयं चास्त्रमाददे ॥ ६२३ ॥

ततोत्थाय वचः प्राह लक्ष्मणस्तं रुषान्वितम् ।
प्रलयं हुतवहक्रोधमेतं जहि महामते ॥ ६२४ ॥

भूतानां रक्षणार्थाय अवतारस्त्वया कृतः ।
क्षन्तव्यं देवदेवेश इत्युक्त्वा धृतवान्करौ ॥ ६२५ ॥

ततो रात्रित्रये याते क्रुद्धं राममवेक्ष्य सः ।
आग्नेयास्त्रात्तु संत्रस्तः सागरोऽभ्येत्य मूर्तिमान् ॥ ६२६ ॥

आह रामं महादेवं रक्ष मामपराधिनम् ।
मार्गो दत्तो मया तेऽद्य कुशलः सेतुकर्मणि ॥ ६२७ ॥

नलश्च कथितो वीरस्तेन कारय राघव ।
यावदीप्सितविस्तीर्णं सेतुबन्धनमुत्तमम् ॥ ६२८ ॥

ततो नलमुखैरब्धौ वानरैरमितौजसैः ।
बन्धयित्वा महासेतुं तेन गत्वा स राघवः ।
सुवेलाख्यगिरिं प्राप्य स्थितौ तौ वानरैर्वृतौ ॥ ६२९ ॥

हर्म्यस्थितश्च तं द्रष्टुं रावणो वीक्ष्य तिष्ठति ।
हर्म्यस्थलं समारुह्य रामसैन्यं निरीक्षितुम् ॥ ६३० ॥

छत्रैराच्छादितो भानुर्धृतैस्तन्मस्तकोपरि ।
रामो निरीक्ष्य तच्छायां विभीषणमुवाच ह ॥ ६३१ ॥

किमर्थं मेघमालेयं छत्रच्छायावृतं नभः ।
रावणोपरि राजेन्द्र छत्राणां रत्नशोभिनाम् ॥ ६३२ ॥

रामस्तद्वचनात्तूर्णमर्धचन्द्राञ्शरान्दश ।
संधाय च्छित्त्वा छत्राणि पातयामास भूतले ॥ ६३३ ॥

तत्कौतुकं समालोक्य वानरा हर्षनिर्भराः ।
गतोऽयमिति चोक्त्वाशु जगर्जुस्तेऽथ सर्वतः ॥ ६३४ ॥

मया संभाषिता सीता विश्वस्ता रघुनन्दन ।
अलंकारः स्वमणिमांस्तया ते प्रेषितः प्रभो ॥ ६०८ ॥

इत्युक्त्वा दत्तवांस्तस्मै चूडामणिमनुत्तमम् ।
इदं च वचनं तस्याः पत्यभिप्रेषितं शृणु ॥ ६०९ ॥

त्रिकूटेषु मतङ्गेषु सुप्ते त्वयि महामते ।
वायसाभिभवं राजंस्तत्किल स्मर्तुमर्हसि ॥ ६१० ॥

अल्पापराधे राजेन्द्र त्वया बलिभुजि प्रभो ।
ब्रह्मास्त्रं च तदोत्सृष्टं रावणं किमुपेक्षसे ॥ ६११ ॥

इत्येवमादि बहुशः प्रोक्ता सीता रुरोद मे ।
एवं सुदुःखितां सीतां तां प्रोक्तं यत्र माधव (?) ॥ ६१२ ॥

इत्येवमुक्ते पवनात्मजेन
सीतावचस्तच्छुभभूषणे च ।
श्रुत्वा च तस्याः प्ररुरोद रामः
कपिं समालिङ्ग्य शनैः प्रतस्थे ॥ ६१३ ॥

मार्कण्डेय उवाच ।

इति श्रुत्वा प्रियावार्तां वायुपुत्रेण कीर्तिताम् ।
रामो गत्वा समुद्रान्तं वानरैः सह मिश्रितः ॥ ६१४ ॥

सागरस्य तटे रम्ये तालद्रुमविराजिते ।
सुग्रीवो जाम्बवांश्चैव वानरैरतिहर्षितैः ॥ ६१५ ॥

संख्यातीतैर्नृपः श्रीमान्नक्षत्रैरिव चन्द्रमाः ।
अनुजेन च वीरेण वीक्ष्य तस्थौ सरित्पतिम् ॥ ६१६ ॥

रावणेनाथ लङ्कायां साधूक्ते भर्त्सितोऽनुजः ।
विभीषणो महाबुद्धिः शास्त्रज्ञैर्मन्त्रिभिः सह ॥ ६१७ ॥

नारसिंहे महादेवे श्रीधरे भक्तवत्सले ।
वहन्रामेऽचलां भक्तिमागत्य वियता तदा ॥ ६१८ ॥

राम राम महाबाहो देवदेव जनार्दन ।
विभीषणोऽस्मि मां रक्ष अद्य ते शरणं गतः ।
इत्युक्त्वा निपपाताथ प्राञ्जली रामपादयोः ॥ ६१९ ॥

विदितार्थोऽथ रामस्तु समुत्थाप्य महामतिः ।
समुद्रतोयैस्तं वीरमभिषिच्य विभीषणम् ।
लङ्काराज्यं तवैवेति प्रोक्त्वा संभाष्य तस्थिवान् ॥ ६२० ॥

ततो विभीषणेनोक्तस्त्वं विष्णुर्भुवनेश्वरः ।
अब्धिर्ददातु मार्गं ते देव तं याचयाद्य तु ।
इत्युक्ते वानरैः सार्धं शिश्ये तत्र स राघवः ॥ ६२१ ॥

सेतुबन्धनमात्रां तु महीं याच्य जनार्दने ।
सुप्ते रामे गतं तत्र त्रिरात्रममितद्युतिः ॥ ६२२ ॥

ततः क्रुद्धो जगन्नाथो रामोऽब्धौ रक्तलोचनः ।
संक्षोभमगमत्कर्तुमाग्नेयं चास्त्रमाददे ॥ ६२३ ॥

ततोत्थाय वचः प्राह लक्ष्मणस्तं रुषान्वितम् ।
प्रलयं हुतवहक्रोधमेतं जहि महामते ॥ ६२४ ॥

भूतानां रक्षणार्थाय अवतारस्त्वया कृतः ।
क्षन्तव्यं देवदेवेश इत्युक्त्वा धृतवान्करौ ॥ ६२५ ॥

ततो रात्रित्रये याते क्रुद्धं राममवेक्ष्य सः ।
आग्नेयास्त्रात्तु संत्रस्तः सागरोऽभ्येत्य मूर्तिमान् ॥ ६२६ ॥

आह रामं महादेवं रक्ष मामपराधिनम् ।
मार्गो दत्तो मया तेऽथ कुशलः सेतुकर्मणि ॥ ६२७ ॥

नलश्च कथितो वीरस्तेन कारय राघव ।
यावदीप्सितविस्तीर्णं सेतुबन्धनमुत्तमम् ॥ ६२८ ॥

ततो नलमुखैरब्धौ वानरैरमितौजसैः ।
बन्धयित्वा महासेतुं तेन गत्वा स राघवः ।
सुवेलाख्यगिरिं प्राप्य स्थितौ तौ वानरैर्वृतौ ॥ ६२९ ॥

हर्म्यस्थितश्च तं द्रष्टुं रावणो वीक्ष्य तिष्ठति ।
हर्म्यस्थलं समारुह्य रामसैन्यं निरीक्षितुम् ॥ ६३० ॥

छत्रैराच्छादितो भानुर्धृतैस्तन्मस्तकोपरि ।
रामो निरीक्ष्य तच्छायां विभीषणमुवाच ह ॥ ६३१ ॥

किमर्थं मेघमालेयं छत्रच्छायावृतं नभः ।
रावणोपरि राजेन्द्र छत्राणां रत्नशोभिनाम् ॥ ६३२ ॥

रामस्तद्वचनात्तूर्णमर्धचन्द्राञ्शरान्दश ।
संधाय च्छित्त्वा छत्राणि पातयामास भूतले ॥ ६३३ ॥

तत्कौतुकं समालोक्य वानरा हर्षनिर्भराः ।
गतोऽयमिति चोक्त्वाशु जगर्जुस्तेऽथ सर्वतः ॥ ६३४ ॥

तच्छन्दपरिभीतोऽसौ रावणो गतवान्गृहम् ।
दृष्ट्वाथ विस्मिता देवाः कौतुकं परमेष्ठिनः ॥ ६३५ ॥

ततो रावणसेनाभिरसंख्याभिस्तदा वृताम् ।
रुरोध रावणपुरीं लङ्कां रामः प्रतापवान् ॥ ६३६ ॥

रामस्य वचनं श्रुत्वा वानरास्तमपश्य (?) वै ।
चक्रुर्महारवं घोरं श्रुत्वा भीतो दशाननः ।
लङ्कायाः परिरक्षार्थमादिदेश स राक्षसान् ॥ ६३७ ॥

रामेण गदितोत्प्लुत्य द्रुतमर्कसुतस्तदा ।
प्रादात्पादप्रहारं स रोपाद्रावणमूर्धनि ।
विस्मिताक्षैः सुरगणैर्वीक्षितो व्योम्नि वीर्यवान् ॥ ६३८ ॥

राघवस्य बलं ज्ञात्वा चारैस्तदनुजस्य च ।
वानराणां च भीतोऽपि निर्भीरिव दशाननः ।
लङ्कापुरस्य रक्षार्थमादिदेश स राक्षसान् ॥ ६३९ ॥

आदिश्य सर्वतो दिक्षु पुत्रानाह दशाननः ।
धूम्राक्षयूपयाक्षं (?) तु राक्षसा यान्तु मे पुरीम् ।
पाशैर्बध्नीत तौ मर्त्यावभिभ्रान्तकवीर्यवान् ॥ ६४० ॥

कुम्भकर्णोऽपि तद्भ्राता तूर्यनादैः प्रबोधितः ।
आशितुं दानवान्सर्वान्रावणास्यान्महाशनः ॥ ६४१ ॥

राक्षसास्ते समादिष्टा रावणेन महाबलाः ।
तस्याज्ञां शिरसादाय युयुधुर्वानरैः सह ॥ ६४२ ॥

युध्यमाना यथाशक्त्या कोटिसंख्यास्तु राक्षसाः ।
वानरैर्निधनं प्राप्ताः पुनरन्यानथादिशत् ॥ ६४३ ॥

पूर्वद्वारे दशग्रीवो राक्षसानमितौजसः ।
ते चापि युद्धा हरिभिर्नीलाद्यैर्निधनं गताः ॥ ६४४ ॥

तथा दक्षिणदिग्भागे रावणेन नियोजिताः ।
ते सर्वे वानरनखैर्दारितास्ते यमं गताः ॥ ६४५ ॥

पश्चिमेऽङ्गदमुख्यैश्च वानरैरतिगर्वितैः ।
राक्षसाः पर्वताकाराः प्रापिता यमसादनम् ॥ ६४६ ॥

तदुत्तरे तु दिग्भागे रावणेन निवेदिताः ।
ये तु ते राक्षसाः क्रूरा मैन्दाद्यैर्निधनं गताः ॥ ६४७ ॥

तांस्तान्वानरसंघास्तु लङ्काप्राकारमुच्छ्रितान् ।
उत्प्लुत्याभ्यन्तरस्थांश्च राक्षसान्बलदर्पितान् ।
हत्वा शीघ्रं पुनः प्राप्ताः स्वसेनामेव वानराः ॥ ६४८ ॥

एवं हतेषु सर्वत्र राक्षसेषु दशाननः ।
रोदमानासु च स्त्रीषु निःसृतः क्रोधमूर्च्छितः ॥ ६४९ ॥

द्वारे स पश्चिमे वीरो राक्षसैर्बहुभिर्वृतः ।
क्वासौ रामेति च वदन्धनुःपाणिः प्रतापवान् ॥ ६५० ॥

रथस्थः शरवर्षं च व्यसृजद्वानरेषु सः ।
ततस्तद्बाणभिन्नाङ्गा वानरा दुद्रुवुस्तदा ॥ ६५१ ॥

पलायमानांस्तान्दृष्ट्वा वानरान्राघवस्तदा ।
कस्मात्तु वानरा भग्नाः किमेषां भयमागतम् ॥ ६५२ ॥

इति रामवचः श्रुत्वा प्राह वाक्यं विभीषणः ।
शृणु राम महाबाहो रावणो निर्गतोऽधुना ।
तद्बाणभिन्ना हरयः पलायन्ति महामते ॥ ६५३ ॥

इत्युक्तो राघवस्तेन धनुरुद्यम्य चोत्थितः ।
ज्याघोषतलघोषाभ्यां पूरयामास खं दिशः ॥ ६५४ ॥

युयोध रावणेनाथ रामः कमललोचनः ।
सुग्रीवो जाम्बवांश्चैव हनूमानङ्गदस्तथा ।
विभीषणो वानराश्च लक्ष्मणश्चापि वीर्यवान् ॥ ६५५ ॥

इति रावणसेनां तां वर्षन्तीं सर्वसायकान् ।
हस्त्यश्वरथयुक्तां ते विनिजघ्नुर्महाबलाः ।
रामरावणयोर्युद्धमभूत्तत्रातिभीषणम् ॥ ६५६ ॥

रावणेन विसृष्टानि शस्त्रास्त्राणि च यानि वै ।
तानि छित्वा स्वशरैस्तु राघवः खे महाबलः ॥ ६५७ ॥

शरेण सारथिं हत्वा दशभिश्च महाहयान् ।
रावणस्य धनुश्छित्त्वा भिन्नेन च स राघवः ॥ ६५८ ॥

मुकुटभङ्गं दशभिः कृत्वा तन्मस्तकं पुनः ।
सुवर्णपुङ्खैर्दशभिः शरैर्निर्व्याध वीर्यवान् ॥ ६५९ ॥

ततो दशास्यो व्यथितो रामबाणैर्भृशं तदा ।
विवेश मन्त्रिभिर्नीतः स्वपुरं देवकण्टकः ॥ ६६० ॥

तच्छन्दपरिभीतोऽसौ रावणो गतवान्गृहम् ।
दृष्ट्वाथ विस्मिता देवाः कौतुकं परमेष्ठिनः ॥ ६३५ ॥

ततो रावणसेनाभिरसंख्याभिस्तदा वृताम् ।
रुरोध रावणपुरीं लङ्कां रामः प्रतापवान् ॥ ६३६ ॥

रामस्य वचनं श्रुत्वा वानरास्तमपश्य (?) वै ।
चक्रुर्महारवं घोरं श्रुत्वा भीतो दशाननः ।
लङ्कायाः परिरक्षार्थमादिदेश स राक्षसान् ॥ ६३७ ॥

रामेण गदितोत्प्लुत्य द्रुतमर्कसुतस्तदा ।
प्रादात्पादप्रहारं स रोषाद्रावणमूर्धनि ।
विस्मिताक्षैः सुरगणैर्वीक्षितो व्योम्नि वीर्यवान् ॥ ६३८ ।

राघवस्य बलं ज्ञात्वा चारैस्तदनुजस्य च ।
वानराणां च भीतोऽपि निर्भीरिव दशाननः ।
लङ्कापुरस्य रक्षार्थमादिदेश स राक्षसान् ॥ ६३९ ॥

आदिश्य सर्वतो दिक्षु पुत्रानाह दशाननः ।
धूम्राक्षयूपयाक्षं (?) तु राक्षसा यान्तु मे पुरीम् ।
पार्श्वैर्धीत तौ मर्त्याविमित्रान्तकवीर्यवान् ॥ ६४० ॥

कुम्भकर्णोऽपि तद्भ्राता तूर्यनादैः प्रबोधितः ।
आशितुं दानवान्सर्वान्रावणास्यान्महाशनः ॥ ६४१ ॥

राक्षसास्ते समादिष्टा रावणेन महाबलाः ।
तस्याशां शिरसादाय युयुधुर्वानरैः सह ॥ ६४२ ॥

युध्यमाना यथाशक्त्या कोटिसंख्यास्तु राक्षसाः ।
वानरैर्निधनं प्राप्ताः पुनरन्यानथादिशत् ॥ ६४३ ॥

पूर्वद्वारे दशग्रीवो राक्षसानमितौजसः ।
ते चापि युद्धा हरिभिर्नीलाद्यैर्निधनं गताः ॥ ६४४ ॥

तथा दाक्षिणदिग्भागे रावणेन नियोजिताः ।
ते सर्वे वानरनखैर्दारितास्ते यमं गताः ॥ ६४५ ॥

पश्चिमेऽङ्गदमुख्यैश्च वानरैरतिगर्वितैः ।
राक्षसाः पर्वताकाराः प्रापिता यमसादनम् ॥ ६४६ ॥

तदुत्तरे तु दिग्भागे रावणेन निवेदिताः ।
ये तु ते राक्षसाः क्रूरा मैन्द्राद्यैर्निधनं गताः ॥ ६४७ ॥

तांस्तान्वानरसंघास्तु लङ्काप्राकारमुच्छ्रितान् ।
उत्प्लुत्याभ्यन्तरस्थांश्च राक्षसान्बलदर्पितान् ।
हत्वा शीघ्रं पुनः प्राप्ताः स्वसेनामेव वानराः ॥ ६४८ ॥

एवं हतेषु सर्वत्र राक्षसेषु दशाननः ।
रोदमानासु च स्त्रीषु निःसृतः क्रोधमूर्च्छितः ॥ ६४९ ॥

द्वारे स पश्चिमे वीरो राक्षसैर्बहुभिर्वृतः ।
क्वासौ रामेति च वदन्धनुःपाणिः प्रतापवान् ॥ ६५० ॥

रथस्थः शरवर्षं च व्यसृजद्वानरेषु सः ।
ततस्तद्बाणभिन्नाङ्गा वानरा दुद्रुवुस्तदा ॥ ६५१ ॥

पलायमानांस्तान्दृष्ट्वा वानरान्राघवस्तदा ।
कस्मात्तु वानरा भग्नाः किमेषां भयमागतम् ॥ ६५२ ॥

इति रामवचः श्रुत्वा प्राह वाक्यं विभीषणः ।
शृणु राम महाबाहो रावणो निर्गतोऽधुना ।
तद्बाणभिन्ना हरयः पलायन्ति महामते ॥ ६५३ ॥

इत्युक्तो राघवस्तेन धनुरुद्यम्य चोत्थितः ।
ज्याघोषतलघोषाभ्यां पूरयामास खं दिशः ॥ ६५४ ॥

युयोध रावणेनाथ रामः कमललोचनः ।
सुग्रीवो जाम्बवांश्चैव हनूमानङ्गदस्तथा ।
विभीषणो वानराश्च लक्ष्मणश्चापि वीर्यवान् ॥ ६५५ ॥

इति रावणसेनां तां वर्षन्तीं सर्वसायकान् ।
हस्त्यश्वरथयुक्तां ते विनिजघ्नुर्महाबलाः ।
रामरावणयोर्युद्धमभूत्तत्रातिभीषणम् ॥ ६५६ ॥

रावणेन विसृष्टानि शस्त्रास्त्राणि च यानि वै ।
तानि छित्त्वा स्वशस्त्रैस्तु राघवः स महाबलः ॥ ६५७ ॥

शरेण सारथिं हत्वा दशभिश्च महाहयान् ।
रावणस्य धनुश्छित्वा भिन्नेन च स राघवः ॥ ६५८ ॥

मुकुटभङ्गं दशभिः कृत्वा तन्मस्तकं पुनः ।
सुवर्णपुङ्खैर्दशभिः शरैर्विव्याध वीर्यवान् ॥ ६५९ ॥

ततो दशास्यो व्यथितो रामबाणैर्भृशं तदा ।
विवेश मन्त्रिभिर्नीतः स्वपुरं देवकण्टकः ॥ ६६० ॥

बोधितस्तूर्यनादैस्तु गजयूथक्रमैश्च सः ।
सुप्राकारं समुल्लङ्घ्य कुम्भकर्णो विनिर्गतः ॥ ६६१ ॥

उत्तुङ्गस्वनदेहोऽसौ भीमदृष्टिर्महाबलः ।
वानरान्भक्षयन्दुष्टो विचचार क्षुधान्वितः ॥ ६६२ ॥

तं दृष्ट्वोत्पत्य सुग्रीवस्तलेनोरस्यताडयत् ।
कर्णद्वयं कराभ्यां तु छित्त्वा वक्त्रेण नासिकाम् ॥ ६६३ ॥

क्षणमात्रेण हृतवान्क्षिप्रकारी कपीश्वरः ।
ताडितो वानरेन्द्रेण कर्णनासैर्विनाकृतः ॥ ६६४ ॥

कुम्भकर्णोऽपि तद्रक्तं स्वकीयं घ्राणनिःसृतम् ।
रामं दृष्ट्वा वभापेऽथ युद्धाय समुपस्थितम् ॥ ६६५ ॥

कबन्धोऽहमस्मि नेति वदतोः सांप्रतं रणे ।
इत्युक्ते जहसुः सर्वे वानरा हृष्टमानसाः ॥ ६६६ ॥

धूम्राक्षकस्य नाशांश्च संख्यातीतान्निशाचरान् ।
सर्वतो युद्धमानांश्च रक्षोनाथान्रणेऽधिकान् ॥ ६६७ ॥

राघवो घातयित्वा तु वानरेन्द्रैः स्वयं ततः ।
चक्रे स विशिखैः स्थाणु कुम्भकर्णकबन्धकम् ॥ ६६८ ॥

अपनीयेन्द्रजित्पाशं गरुडेनागतेन सः ।
रामो भ्रात्रा सहोत्तिष्ठञ्शुशुभे वानरैर्वृतः ॥ ६६९ ॥

व्यर्थं गते इन्द्रजिति कुम्भकर्णे निपातिते ।
लङ्कानाथस्ततः क्रुद्धः पुत्रं त्रिशिरसं पुनः ॥ ६७० ॥
अतिकायमहाकायौ देवान्तकनरान्तकौ ।
यूय गत्वा तु तत्राद्य तौ नरावनिजघ्नत (?) ॥ ६७१ ॥
तान्नियुज्य दशग्रीवः पुत्रानेवं पुनर्ब्रवीत् ।
महोदरमहापार्श्वौ सर्वैरेतैर्महाबलैः ।
युवां व्रजत तौ हन्तुमुद्यतौ रामलक्ष्मणौ ॥ ६७२ ॥
दृष्ट्वा तानागतांश्चैव युध्यमानान्रणे रिपून् ।
आनिन्ये लक्ष्मणः षड्भिः शरैस्तीक्ष्णैर्यमालयम् ।
वानराणां समूहैश्च स्थिरांश्च रजनीचरान् ॥ ६७३ ॥
सुग्रीवेण हतः कुम्भो राक्षसो बलदर्पितः ।
निकुम्भो वायुपुत्रेण निहतो देवभीतिदः ॥ ६७४ ॥

विरूपाक्षं युध्यमानं गदया तु विभीषणः।
भीममेकाश्वपतिं च वानरेन्द्रो निजघ्नतुः।
अङ्गदो जाम्बवांश्चाथ हरयोऽन्यान्निशाचरान्॥ ६७५॥

युद्धमानस्तु तं भीमं मकराक्षं महाबलम्।
जघान रामो बाणेन बाणवृष्टिकरं नृपः॥ ६७६॥

इन्द्रजिन्मन्त्रलब्धं तु रथमारुह्य खे पुनः।
वानरेन्द्रेषु सर्वेषु शरवर्षं ववर्ष सः॥ ६७७॥

रात्रौ तद्बाणाभिन्नं तु वनं सर्वं स राघवः।
निश्चेष्टमाखिलं दृष्ट्वा जाम्बवत्प्रेरितस्तदा॥ ६७८॥

वीर्यादौषधमानीय हनूमान्मारुतात्मजः।
भूमौ शयानमुत्थाप्य रामं हरिगणांस्तदा॥ ६७९॥

तैरेव वानरैः सोऽथ ज्वलितोल्काकरैर्निशि।
दाहयामास लङ्कां तु हस्त्यश्वरथराक्षसाम्॥ ६८०॥

वर्षन्तं शरजालानि सर्वदिक्षु घनो यथा।
स्वभ्रात्रा मेघनादं तु घातयामास राघवः॥ ६८१॥

घातितेष्वथ रक्षस्सु पुत्रमित्रादिबन्धुषु।
कारितेष्वथ विघ्नेषु होमजप्यादिकर्मणाम्॥ ६८२॥

ततः क्रुद्धो दशग्रीवो लङ्काद्वारे विनिर्गतः।
क्वासौ राम इति ख्यातो मानुषस्तापसाकृतिः॥ ६८३॥

योद्धा कपिबलैः प्रोच्चैर्व्याहरन्राक्षसाधिपः।
वेगवद्भिर्विनीताश्वैर्युक्तश्चित्ररथे स्थितः॥ ६८४॥

अथायान्तं तु तं दृष्ट्वा रामः प्राह दशाननम्।
रामोऽहमत्र युद्धात्मन्नेहि रावण मां प्रति॥ ६८५॥

इत्युक्ते लक्ष्मणः प्राह रामं राजीवलोचनम्।
अनेन रक्षसा योत्स्ये त्वं तिष्ठेति महाबलः॥ ६८६॥

रुरोध स दशग्रीवं तयोर्युद्धमभून्महत्।
देवा व्योम्नि विमानस्था वीक्ष्य तस्थुर्महाबलम्॥ ६८७॥

ततो रावणशस्त्राणि भित्त्वा खे तीक्ष्णसायकैः।
लक्ष्मणः सारथिं हत्वा तस्याश्वानतिमल्लकैः॥ ६८८॥

बोधितस्तूर्यनादैस्तु गजयूथक्रमैश्च सः ।
सुप्राकारं समुल्लङ्घ्य कुम्भकर्णो विनिर्गतः ॥ ६६१ ॥

उत्तुङ्गस्वनदेहोऽसौ भीमदृष्टिर्महाबलः ।
वानरान्भक्षयन्दुष्टो विचचार क्षुधान्वितः ॥ ६६२ ॥

तं दृष्ट्वोत्पत्य सुग्रीवस्तलेनोरस्यताडयत् ।
कर्णद्वयं कराभ्यां तु छित्त्वा वक्त्रेण नासिकाम् ॥ ६६३ ॥

क्षणमात्रेण हृतवान्क्षिप्रकारी कपीश्वरः ।
ताडितो वानरेन्द्रेण कर्णनासैर्विनाकृतः ॥ ६६४ ॥

कुम्भकर्णोऽपि तद्रक्तं स्वकीयं घ्राणनिःसृतम् ।
रामं दृष्ट्वा यमापेऽय युद्धाय समुपस्थितम् ॥ ६६५ ॥

कथम्धोऽहमस्मि नेति वदतोः सांप्रतं रणे ।
इत्युक्ते जहसुः सर्वे वानरा हृष्टमानसाः ॥ ६६६ ॥

धूम्राक्षकस्य नादांश्च संख्यातीतान्निशाचरान् ।
सर्वतो युद्धमानांश्च रक्षोनाथान्रणेऽधिकान् ॥ ६६७ ॥

राघवो घातयित्वा तु वानरेन्द्रैः स्वयं ततः ।
चक्रे स विशिखैः स्थाण्णु कुम्भकर्णकबन्धकम् ॥ ६६८ ॥

अपनीयेन्द्रजित्पाशं गरुडेनागतेन सः ।
रामो भ्रात्रा सहोत्तिष्ठञ्शुशुभे वानरैर्वृतः ॥ ६६९ ॥

व्यर्थं गते इन्द्रजिति कुम्भकर्णे निपातिते ।
लङ्कानाथस्ततः क्रुद्धः पुत्रं त्रिशिरसं पुनः ॥ ६७० ॥
अतिकायमहाकायौ देवान्तकनरान्तकौ ।
यूयं गत्वा तु तत्राद्य तौ नराचनिजघ्नतः (?) ॥ ६७१ ॥
तान्नियुज्य दशास्यः पुत्रानेवं पुनर्ब्रवीत् ।
महोदरमहापार्श्वौ सर्ववीरैर्महाबलैः ।
युवां प्रजत तौ हन्तुमुद्यतौ रामलक्ष्मणौ ॥ ६७२ ॥
दृष्ट्वा तानागतांश्चैव युध्यमानान्रणे रिपून् ।
आनिन्ये लक्ष्मणः षड्भिः शरैस्तीक्ष्णैर्यमालयम् ।
वानराणां समूहैश्च स्थितांश्च रजनीचरान् ॥ ६७३ ॥
सुग्रीवेण हतः कुम्भो राक्षसो बलदर्पितः ।
निकुम्भो वायुपुत्रेण निहतो देवभीतिदः ॥ ६७४ ॥

विरूपाक्षं युध्यमानं गदया तु विभीषणः ।
भीममेकाश्वपतिं च वानरेन्द्रो निजघ्नतुः ।
अङ्गदो जाम्बवांश्चाथ हरयोऽन्यान्निशाचरान् ॥ ६७५ ॥

युद्धमानस्तु तं भीमं मकराक्षं महाबलम् ।
जघान रामो बाणेन बाणवृष्टिकरं नृपः ॥ ६७६ ॥

इन्द्रजिन्मन्त्रलब्धं तु रथमारुह्य खे पुनः ।
वानरेन्द्रेषु सर्वेषु शरवर्षं ववर्ष सः ॥ ६७७ ॥

रात्रौ तद्बाणभिन्नं तु बलं सर्वं स राघवः ।
निश्चेष्टमखिलं दृष्ट्वा जाम्बवत्प्रेरितस्तदा ॥ ६७८ ॥

वीर्यार्दौषधमानीय हनूमान्मारुतात्मजः ।
भूमौ शयानमुत्थाप्य रामं हरिगणांस्तदा ॥ ६७९ ॥

तैरेव वानरैः सोऽथ ज्वलितोल्काकरैर्निशि ।
दाहयामास लङ्कां तु हस्त्यश्वरथराक्षसाम् ॥ ६८० ॥

वर्षन्तं शरजालानि सर्वदिक्षु घनो यथा ।
स्वभ्रात्रा मेघनादं तु घातयामास राघवः ॥ ६८१ ॥

घातितेष्वथ रक्षस्सु पुत्रमित्रादिबन्धुषु ।
कारितेष्वथ विघ्नेषु होमजप्यादिकर्मणाम् ॥ ६८२ ॥

ततः क्रुद्धो दशग्रीवो लङ्काद्वारे विनिर्गतः ।
क्वासौ राम इति ख्यातो मानुषस्तापसाकृतिः ॥ ६८३ ॥

योद्धा कपिबलैः प्रोच्चैर्याहरन्राक्षसाधिपः ।
वेगवद्भिर्विनीताश्वैर्युक्ताश्चित्ररथे स्थितः ॥ ६८४ ॥

अथायान्तं तु तं दृष्ट्वा रामः प्राह दशाननम् ।
रामोऽहमत्र दुष्टात्मन्नेहि रावण मां प्रति ॥ ६८५ ॥

इत्युक्ते लक्ष्मणः प्राह रामं राजीवलोचनम् ।
अनेन रक्षसा योत्स्ये त्वं तिष्ठेति महाबलः ॥ ६८६ ॥

रुरोध स दशग्रीवं तयोर्युद्धमभून्महत् ।
देवा व्योम्नि विमानस्था वीक्ष्य तस्थुर्महाबलम् ॥ ६८७ ॥

ततो रावणशस्त्राणि भित्त्वा खे तीक्ष्णसायकैः ।
लक्ष्मणः सारथिं हत्वा तस्याश्वाननिमग्नकैः ॥ ६८८ ॥

रावणस्य धनुश्छित्वा ध्वजं च निशितैः शरैः ।
वक्षःस्थले महावीर्यो विव्याध परवीरहा ॥ ६८९ ॥

ततो रथान्निपत्याधः क्षिप्रं राक्षसनायकः ।
शक्तिं जग्राह कुपितो घण्टानादविनादिनीम् ।
अग्निज्वालाज्वलज्जिह्वां महोल्कासदृशद्युतिम् ॥ ६९० ॥

घण्टामुष्टिविनिक्षिप्ता शक्तिः सा लक्ष्मणोरसि ।
विदार्योर्व्यां प्रविष्टा तु देवकास्तास्ततोऽम्बरे ॥ ६९१ ॥

लक्ष्मणं पतितं दृष्ट्वा रुदद्भिर्वानरेश्वरैः ।
दुःखितः सत्त्वमास्थाय तत्पार्श्वं प्राप्य राघवः ॥ ६९२ ॥

शक्तिमुत्पाट्य बाहुभ्यां दिव्यौषधिबलेन च ।
अनुजं नीरुजं क्षिप्रं कारयामास राघवः ॥ ६९३ ॥

ततः क्रुद्धो जगन्नाथो रामः कमललोचनः ।
रावणस्य बलं शिष्टं हस्त्यश्वरथराक्षसम् ॥ ६९४ ॥

हत्वा क्षणेन वीर्यात्मा तच्छरीरं तु सायकैः ।
तीक्ष्णैर्जर्जरितं कृत्वा तस्थिवान्वानरैर्वृतः ॥ ६९५ ॥

अथाचेष्टो दशग्रीवः संज्ञां प्राप्य शनैः पुनः ।
उत्थाय रावणः क्रुद्धः सिंहनादं ननाद च ।
तन्नादश्रवणाद् व्योम्नि वित्रस्ता देवतागणाः ॥ ६९६ ॥

एतस्मिन्नेव काले तु रामं प्राप्य महामुनिः ।
रावणे बद्धवैरस्तु आगस्त्योऽर्कसमद्युतिः ।
आदित्यहृदयं नाम मन्त्रं प्रादाज्जयप्रदम् ॥ ६९७ ॥

तद्दत्तं वैष्णवं चापमतुलं सद्गुणे दृढम् ।
पूजयित्वा तदादाय सज्यं कृत्वा महाबलः ॥ ६९८ ॥

सौवर्णपुङ्खैस्तीक्ष्णैः सशरैर्मर्मविदारणैः ।
युयुधे राक्षसेन्द्रेण रघुनाथः प्रतापवान् ॥ ६९९ ॥

ज्याघोषतलघोषेण पादसंघर्षणेन च ।
त्रैलोक्यमखिलं पूर्णं रामरावणयोस्तदा ॥ ७०० ॥

तयोस्तु युध्यतोस्तत्र भीमशब्दयोर्महामते ।
परस्परविसृष्टास्त्रैर्व्योम्नि संमर्दनात्ततः ।
समुत्थिता नृपश्रेष्ठ महोल्केव समन्ततः ॥ ७०१ ॥

रावणेन चिरं युद्ध्वा रामो दाशरथिस्तदा।
दन्ताधरैस्तु दशभिस्त्र्यैर्युक्तानि वैरिणः॥ ७०२॥
शिरांसि तस्य चिच्छेद विरूपाणि रणे रिपोः।
सितदंष्ट्रैरुपेतानि दन्तकोलाहलानि च॥ ७०३॥
पुनः पुनः प्ररूढानि सिंहनादस्वराणि च।
छित्वा छित्वा शिरांस्यस्य पृथक्तै(?) रावणस्य च॥ ७०४॥
पञ्चवाजियुतं रम्यं रथं मातलिमेव च।
प्रेषयामास देवेन्द्रो महान्तं लोकविश्रुतम्॥ ७०५॥
वैरिघ्नं रथमारूढः स्तूयमानो दिवौकसैः।
मातल्युक्तोपदेशस्तु रामदेवः सनातनः॥ ७०६॥
ब्रह्मदत्तवरं दृष्ट्वा ब्रह्मास्त्रेण दशाननम्।
जघान वैरिणं क्रूरं रामरूपी जनार्दनः॥ ७०७॥
रामेण निहते तत्र रावणे सगणे रिपौ।
इन्द्राद्या देवताः सर्वाः परस्परमथाब्रुवन्॥ ७०८॥
रामो भूत्वा हरिस्तर्कमुत्तमं (?) वैरिणं रणे।
अन्यैरवध्यमपि तं जघान युधि रावणम्॥ ७०९॥
तस्मात्तं रामनामानमनन्तमजमच्युतम्।
पूजयामोऽवतीर्योर्व्यामित्युक्त्वा ते दिवौकसः॥ ७१०॥
नानाविमानैः श्रीमद्भिरवतीर्य महीतले।
रुद्रेन्द्रवसुचन्द्राद्या विजितारिदशाननम्॥ ७११॥
विष्णुं जिष्णुं जगन्मूर्तिं सानुजं राममव्ययम्।
तं पूजयित्वा विधिवत्परिवार्यावतास्थिरे॥ ७१२॥
रामोऽयं पश्यतां देवा लक्ष्मणोऽयं व्यवस्थितः।
सुग्रीवो रविपुत्रोऽयं वायुपुत्रोऽयमास्थितः।
अङ्गदाद्यास्त्विमे सर्वे इत्यूचुस्ते दिवौकसः॥ ७१३॥
गन्धामोदितनक्षत्रभ्रमराणिपदानुगा (?)।
देवस्त्रीकरसंयुक्ता राममूर्धनि शोभिता।
पपात पुष्पवृष्टिस्तु लक्ष्मणस्य च मूर्धनि॥ ७१४॥
ततो ब्रह्मा समागत्य हंसयानेन राघवम्।
अमोघाख्येन स्तोत्रेण स्तुत्वा राममबोधयत्॥ ७१५॥

त्वं विष्णुरादिर्भूतानां मनोज्ञानदृगव्ययः ।
त्वमेव शाश्वतं ब्रह्म वेदान्तावेदितं परम् ॥ ७१६ ॥
त्वया यदद्य निहतो रावणो लोकरावणः ।
तत्साधु सर्वलोकानां देवानां कर्म साधितम् ॥ ७१७ ॥
इत्युक्ते पद्मयोनौ तु शंकरः प्रीतिमास्थितः ।
प्रशस्य रामं तन्मैत्रं प्राप्तं दशरथं नृपम् ।
दर्शयित्वा ततो देवैः सीता शुद्धेत्यकीर्तयत् ७१८ ॥
ततो बाहुबलप्राप्तं विमानं पुष्पकं शुभम् ।
पूतात्मारोप्य तां सीतां विशोकां भूशदूषिताम् ॥ ७१९ ॥
वन्दितां वानरेन्द्रैस्तु सार्धं भ्रात्रा महाबलः ।
रामस्तीर्णप्रतिज्ञोऽसौ भरतासक्तमानसः ॥ ७२० ॥
यातोऽयोध्यापुरीं रम्यां गत्वा तस्यां द्विजोत्तमैः ।
अभिषिक्तो वशिष्ठाद्यैर्भरतेन प्रचोदितः ।
अकरोद्धर्मराज्यं तु चिरं रामः प्रतापवान् ॥ ७२१ ॥

ततस्तु संपूज्य विसृज्य नायकौ
शाखामृगाणामपि राक्षसानाम् ।
यज्ञादिकं कर्म निजं च कृत्वा
जनैश्च रामो दिवमारुरोह ॥ ७२२ ॥
राजन्मया ते कथितं समासतो
रामस्य हृद्याचरितं महात्मनः ।
इदं च भक्त्या पठतां च शृण्वतां
ददाति रामः स्वपदं जगत्पतिः ॥ ७२३ ॥

* * * *

अथ सूची ॥

एवं श्रीरामचन्द्रे निजचरणरजःस्पर्शमेध्यामयोध्यां
लब्ध्वा स्वां राजधानीमधिधरणि महाधीश्वरे राजमाने ।
कश्चिन्मूर्त्या विपश्चिद् द्विज इव दिविषद्वृन्दचेतोऽनुसारी
दूतो विघ्नैर्निहेतोस्त्रिदशपतिकृते काल एवाजगाम ॥ ७२४ ॥
सद्यः प्रोत्थाय दूरादतिरुचिरवचः सम्यगभ्यर्च्य पादौ
तस्योक्तं श्रोतुकामः सपदि निजरहः कल्पयामास रामः ।
तत्र द्वारि प्रसक्तक्षितिपतिनिवहं रोद्धुमुद्दामबाहु-
स्फूर्जद्दम्भोलिदम्भप्रतिहतपटवे लक्ष्मणायादिदेश ॥ ७२५ ॥

भालभ्राजद्भसिततिलकोद्भासिदिक्चक्रवालो
मौञ्ज्यावद्धाग्निकट * नटत्कृष्णसाराजिनः * * ।
तेजः साक्षादथ विधिवशाद् द्वारदेशानकस्मा-
द्दुर्वासा द्रष्टुकामो रघुकुलतिलकं स्वस्तलादाजगाम ॥ ७२६ ॥

श्वासादेतस्य गत्वा रहसि रघुपतेर्लक्ष्मणो नम्रमौलि-
र्नत्वा प्रोवाच तस्यागमनमथ दृशा वीक्ष्य तं रामभद्रः ।
सद्यः स्मृत्वा प्रतिज्ञामथ चरणनते भ्रातरि स्वानुबन्धं
चेचो दोलायमानः क्षणमिव विमृशन्मौनमङ्गीचकार ॥ ७२७ ॥

ज्ञात्वा नत्वा ततोऽगाद् द्रुयमथ शरयूतीरमासाद्य धीरो
धृत्वा ध्यानावधानं मनसि निजतनुं त्यक्तवान्शेषवेदः ।
श्रुत्वैतद्रामभद्रः सपदि जगदिदं शून्यवन्मन्यमानः
स्वर्लोकं देवयानैः सह निखिलजनैरादरादारुरोह ॥ ७२८ ॥

[ इत्यवतारसौख्ये रामावतारो नाम सप्तमो हर्षः ॥ ]

२.८ ।

अथ श्रीकृष्णावतारः ॥ तत्र श्रीभागवते-

कथितो वंशविस्तारो भवता सोमसूर्ययोः ।
राज्ञां चोभयवंश्यानां चरितं परमाद्भुतम् ॥ १ ॥

यदोश्च धर्मशीलस्य नितरां मुनिसत्तम ।
तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः ॥ २ ॥

[ भाग० १०-१-१-२ ]

इत्यादिपरीक्षित्प्रश्नानतरं श्रीशुक उवाच ।
सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम ।
वासुदेवकथायां ते यज्जाता नैष्ठिकी रतिः ॥ ३ ॥

वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि ।
वक्तारं पृच्छकं श्रोतृंस्तत्पादसलिलं यथा ॥ ४ ॥

[ भाग० १०-१-१५-१६ [

आद्यावतारकारणमाह ।

भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥ ५ ॥

गौर्भूत्वाश्रुमुखी खिन्ना क्रन्दन्ती करुणं विभोः ।
उपस्थितान्तिके तस्मै व्यसनं स्वमवोचत ॥ ६ ॥

ब्रह्मा तदवधार्याथ सह देवैस्तया सह ।
जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥ ७ ॥

तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ।
पुरुषं पुरुषसूक्तेन ह्युपतस्थे समाहितः ॥ ८ ॥

गिरं समाधौ गगने समीरितां
निशम्य वेधास्त्रिदशानुवाच ह ।
गां पौरुषीं मे शृणुतामराः पुन-
र्विधीयतामाशु तथैव माचिरम् ॥ ९ ॥

[ भाग० १०.१.१७–२१ ]

पौरुषीं पुरुषो भगवांस्तत्संबन्धिनीम् । गां वाचम् । मे मत्तः ।

पुरैव पुंसावधृतो धराज्वरो
भवद्भिरंशैर्यदुषूपजन्यताम् ।
स यावदुर्व्या भरमीश्वरेश्वरः
स्वकालशक्त्या क्षपयंश्चरेद्भुवि ॥ १० ॥

वसुदेवगृहे साक्षाद्भगवान्पुरुषः परः ।
जनिष्यते तत्प्रियार्थं संभवन्तु सुरस्त्रियः ॥ ११ ॥

वासुदेवकलानन्तः सहस्रवदनः स्वराट् ।
अग्रजो भविता देवो हरेः प्रियचिकीर्षया ॥ १२ ॥

विष्णोर्माया भगवती यया संमोहितं जगत् ।
आदिष्टा प्रभुणांशेन कार्यार्थे संभविष्यति ॥ १३ ॥

---

7a T तदुपधार्य for तदवधार्य. 8d T उपतस्थे for ह्युपतस्थे. 11c A तत्प्रार्थे for तत्प्रियार्थ. 12c T अग्रतो for अग्रजो.

इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः ।
आश्वास्य च महीं गीर्भिः स्वं धाम परमं ययौ ॥ १४ ॥

[ भाग. १०.१.२२–२६ ]

अथ कंसकारागारे भगवदवतारं प्रस्तौति ।

शूरसेनो यदुपतिर्मथुरामवसत्पुरीम् ।
माथुराञ्शूरसेनांश्च विषयान्बुभुजे पुरा ॥ १५ ॥

राजधानी ततः साभूत्सर्वयादवभूभुजाम् ।
मथुरा भगवान्यत्र नित्यं संनिहितो हरिः ॥ १६ ॥

तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ।
देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥ १७ ॥

सूर्यया नवोढया । .

उग्रसेनसुतः कंसो भगिन्याः प्रियकाम्यया ।
रश्मीन्हयानां जग्राह रौक्मै रथशतैर्वृतः ॥ १८ ॥

[ भाग. १०.१.२७–३० ]

अथ सूची ॥

गजानामश्वानां शतमथ च रत्नानि विविध-
स्सुताप्रीत्या प्रादादतिरुचिररोचींषि नृपतिः ।
मृदङ्गाद्यैर्वाद्यैः परमरुचिरैर्हृष्टहृदयो
वियद्वाणीं कंसः श्रवणविषये नूनमकरोत् ॥ १९ ॥

गर्भोऽष्टमोऽस्यास्तव नाशकारी
भविष्यतीत्यम्बरतो वचांसि ।
आकर्ण्य सद्यः स्फुरिताधरश्री-
र्निहन्तुमेनामसिमाचकर्ष ॥ २० ॥

तं सान्त्वयन्सपदि तत्त्वपराणि भूय-
स्तस्मै वचांसि वसुदेव उदाजहार ।
श्रुत्वाप्यसौ न विरराम यदा विमृश्य
स स्वीचकार तनयान्स्वयमेव दातुम् ॥ २१ ॥

---

15b T आवसत् for अवसत्       18b T स्वस प्रियचिकीर्षया.

कंसे निवृत्ते भगिनीविनाश-
हेतोर्व्यतीते समये सुखेन ।
सा देवकी सूनुमसूत सौम्य-
माद्यं सुराणामपि वन्दनीयम् ॥ २२ ॥

* कंसायातिनृशंसाय सुतमानकदुन्दुभिः ।
जातमात्रं न्यवेदयामास प्रीतस्तत्याज तं च सः ॥ २३ ॥

अथ श्रीभागवते ।

नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः ।
वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥ २४ ॥
सर्वे ते देवताप्राया उभयोरपि भारत ।
ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः ॥ २५ ॥

[ भाग १०·१·६२–६३ ]

[ गतेऽथ वसुदेवे तु देवकार्यार्थमुद्यतः । ]
एतत्कंसाय भगवाञ्शशंसाभ्येत्य नारदः ।
भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम् ॥ २६ ॥

[ भाग. १०·१·६४ ]

उभयोः वसुदेवनन्दयोः । वधोद्यमं देवकृतमिति शेषः ॥

ऋषेर्विनिर्गमे कंसो यदून्मत्वा सुरानिति ॥
देवक्यां गर्भसंभूतं विष्णुं च स्ववधं प्रति ॥ २७ ॥
देवकीं वसुदेवं च निगृह्य निगडेऽग्रहीत् ।
जातं जातमहन्पुत्रं तयोरजनशङ्कया ॥ २८ ॥

अजनो विष्णुः ॥ [ भाग० १०·१ ६५–६६ ]

आत्मानमिह संजातं जानन्प्राग्विष्णुना हतम् ।
महासुरं कालनेमिं यदुभिः स व्यरुध्यत ॥ २९ ॥

[ भाग० १०·१·६८ ]

मातरं पितरं भ्रातृन्भार्याश्च सुहृदः सखीन् ।
घ्नन्ति ह्यसुतृपो लुब्धा राजानः प्रायशो भुवि ॥ ३० ॥

[ भाग० १०·१·६७ ]

---

26ab Not found in T. 28b T निगडैर्गृहे for निगडेऽग्रहीत 30b T मर्त्यांश्च गृहदस्तथा.

उग्रसेनं च पितरं यदुभोजान्धकाधिपम् ।
स्वयं निगृह्य बुभुजे शूरसेनान्महाबलः ॥ ३१ ॥

[ भाग० १०.१.६९ ]

यदूनां विरोधमाह ।

प्रलम्बबकचाणूरतृणावर्तमहाशनैः ।
मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥ ३२ ॥

अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्वृतः ।
यदूनां कदनं चक्रे बली मागधसंश्रयः ॥ ३३ ॥

[ भाग० १०.२.१–२]

भगवानपि विश्वात्मा विदित्वा कंसजं भयम् ।
यदूनां निजनाथानां योगमायां समादिशत् ॥ ३४ ॥

[ भाग० १०.२.६ ]

देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ।
तत्संनिकृष्य रोहिण्या उदरे संनिवेशय ॥ ३५ ॥

अथाहमंशभागेन देवक्याः पुत्रतां शुभे ।
प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि ॥ ३६ ॥

अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ।
धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥ ३७ ॥

नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ।
दुर्गेति भद्रकालीति विजया वैष्णवीति च ॥ ३८ ॥

कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च ।
माया नारायणीशानी शारदेत्यम्बिकेति च ॥ ३९ ॥

गर्भसंकर्षणात्तं वै प्राहुः संकर्षणं भुवि ।
रामेति लोकरमणाद्बलं बलवदुच्छ्रयात् ॥ ४० ॥

संदिष्टैवं भगवता तथेत्योमिति तद्वचः ।
प्रतिगृह्य प्रतिश्रुत्य गां गता तत्तथाकरोत् ॥ ४१ ॥

गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया ।
अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः ॥ ४२ ॥

---

33*b* T युत for वृत  39*a* A मुकुदा for कुमुदा.

भगवानपि विश्वात्मा भक्तानामभयंकरः ।
आविवेशांशभागेन मन आनकदुन्दुभेः ॥ ४३ ॥

स बिभ्रत्पौरुषं धाम भ्राजमानो यथा रविः ।
दुरासदो दुर्विषहो भूतानां संबभूव ह ॥ ४४ ॥

ततो जगन्मङ्गलमच्युतांशं
समाहितं शूरसुतेन देवी ।
दधार सर्वात्मकमात्मभूतं
काष्ठा यथानन्दकरं मनस्तः ॥ ४५ ॥

सा देवकी सर्वजगन्निवास-
निवासभूता नितरां न रेजे ।
भोजेन्द्रगेहेऽग्निशिखेव रुद्धा
सरस्वती ज्ञानखले यथा सती ॥ ४६ ॥

तां वीक्ष्य कंसः प्रभयाजितान्तरां
विरोचयन्तीं भवनं शुचिस्मिताम् ।
आहैष मे प्राणहरो हरिर्गुहां
ध्रुवं श्रितो यन्न पुरेयमीदृशी ॥ ४७ ॥

किमद्य तस्मिन्करणीयमाशु मे
यदर्थतन्त्रो न विहन्ति पौरुषम् ।
स्त्रियाः स्वसुर्गुरुमत्या वधोऽयं
यशः श्रियं हन्त्यनु कालमायुः ॥ ४८ ॥

स्वयं स जीवन्खलु संपरेतो
वर्तेत योऽत्यन्तनृशंसितेन ।
देहे मृते तं मनुजाः शपन्ति
गन्ता तमोऽन्धं तनुमानिनो ध्रुवम् ॥ ४९ ॥

इति घोरतमाद्भावात्संनिवृत्तः स्वयं प्रभुः ।
आस्ते प्रतीक्षंस्तज्जन्म हरेर्वैरानुबन्धकृत् ॥ ५० ॥

आसीनः संविशंस्तिष्ठन्भुञ्जानः पर्यटन्महीम् ।
चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत् ॥ ५१ ॥

---

44c T अतिदुर्धर्षो for दुर्विषहो. 48b T विक्रम for पौरुषं.

ब्रह्मा भवश्च तत्रैत्य मुनिभिर्नारदादिभिः ।
देवैः सानुचरैः साकं गीर्भिर्वृषणमैडयन् ॥ ५२ ॥

[ भाग० १०.२.८–२५ ]

वृषणं कामवर्षिणम् ॥

अथ सूची ॥

ब्रह्मेशानपुरोगमा दिविषदो ज्ञात्वा हरिं देवकी-
गर्भस्थं सपदि प्रफुल्लकमलप्रोल्लासिनेत्रश्रियः ।
सत्यत्वेन जगत्प्रपञ्चकतया देवं दयावारिधिं
भूभारोद्धरणक्षमं मधुरया वाचा चिरं तुष्टुवुः ॥ ५३ ॥

श्रीभागवते । श्रीशुक उवाच ।

अथ सर्वगुणोपेतः कालः परमशोभनः ।
यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम् ॥ ५४ ॥

दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ।
मही मङ्गलभूयिष्ठपुरग्रामव्रजाकरा ॥ ५५ ॥

नद्यः प्रसन्नसलिला ह्रदा अम्बुरुहश्रियः ।
द्विजालिकुलसंनादस्तबका वनराजयः ॥ ५६ ॥

ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ।
अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥ ५७ ॥
मनांस्यासन्प्रसन्नानि साधूनामसुरद्रुहाम् ।
जायमानेऽजने तस्मिन्नेदुर्दुन्दुभयो दिवि ॥ ५८ ॥
जगुः किंनरगन्धर्वास्तुष्टुवुः सिद्धचारणाः ।
विद्याधर्यश्च ननृतुरप्सरोभिः समं ततः ॥ ५९ ॥
मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः ।
मन्दं मन्दं जलधरा जगर्जुरनुसागरम् ॥ ६० ॥
निशीथे तम उद्भूते जायमाने जनार्दने ।
देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः ।
आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः ॥ ६१ ॥

[ भाग० १०-३-१–८

56*b* T जलरुहश्रियः for अम्बुरुह°. 59*d* T तदा for तत. 61*d* T सर्वगुहाशय for °गुहाशय..

अथ सूची ॥

लोलत्कुण्डलचारुगण्डयुगलं स्फूर्जन्मुखाम्भोरुहं
कञ्जाभेषु चतुर्षु बाहुषु गदाचक्राब्जशङ्खश्रियम् ।
दीप्तं वक्षसि कौस्तुभद्युतिभरैरालोक्य जातं हरिं
हर्षादानकदुन्दुभिः प्रतिपदं तुष्टाव दिष्ट्या शनैः ॥ ६२ ॥

कंसघासवशादयं च मनसा लक्षं गवां प्राद्दा-
द्विप्रेभ्यो विधिवच्चकार मनसा तत्कालकृत्याः क्रियाः ।
सद्योजातमजं निरीक्ष्य नितरां निर्वर्ण्य वक्त्रश्रियं
हर्षोत्फुल्लविलोचनाथ शनकैरस्तौदमुं देवकी ॥ ६३ ॥

विष्णो रूपं दिव्यमीदृक्त्वदीयं
संहृत्यास्मांस्त्राहि कंसस्य भीतेः ।
एतज्ज्ञाने गर्भगोऽयं त्वमासी-
रीश व्यक्ता यद्धनैया जनानाम् ॥ ६४ ॥

प्राचीनेषु विधाय जन्मसु युवामुग्रं तपो मत्कृते
विष्णुर्वामनरूपधारिणमहो मामात्मजं प्रापतुः ।
भूयो भक्तिभरेण वां करुणया जातोऽस्मि युष्मद्गृहे
पित्रोरेतदुदीर्य दैवतमणिर्बालोऽभवत्प्राकृतः ॥ ६५ ॥

अथ श्रीभागवते ॥

ततश्च शौरिर्भगवत्प्रणोदितः
सुतं समादाय स सूतिकागृहात् ।
यदा बहिर्गन्तुमियेष तर्ह्यजा
या योगमायाजनि नन्दजायया ॥ ६६ ॥

तया हृतप्रत्ययसर्ववृत्तिषु
द्वाःस्थेषु पौरेष्वपि शायितेष्वथ ।
द्वारस्तु सर्वाः पिहिता दुरत्यया
बृहत्कपाटायसकीलशृङ्खलैः ॥ ६७ ॥

ताः कृष्णवाहे वसुदेव आगते
स्वयं व्यदीर्यन्त तमो यथा रवेः ।
ववर्ष पर्जन्य उपांशुगर्जितः
शेषोऽन्वगाद्वारि निवारयन्फणैः ॥ ६८ ॥

---

66 *a* T प्रचोदित- for प्रणोदित .

मघोनि वर्षत्यसकृद्यमानुजा
गम्भीरतोयौघजवोर्मिफेनिला ।
भयानकावर्तशताकुला नदी
मार्गं ददौ सिन्धुरिव श्रियः पतेः ॥ ६९ ॥

नन्दव्रजं शौरिरुपेत्य तत्र ता-
न्गोपान्प्रसुप्तानुपलभ्य निद्रया ।
सुतं यशोदाशयने निधाय त-
त्सुतामुपादाय पुनर्गृहानगात् ॥ ७० ॥

देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ।
प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥ ७१ ॥

यशोदा नन्दपत्नी च जातं परमबुध्यत ।
न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृतिः ॥ ७२ ॥

[ भाग० १०. ३. ४७-५३ ]

श्रीशुक उवाच ।

बहिरन्तःपुरद्वारः सर्वाः पूर्ववदावृताः ।
ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ ७३ ॥

ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् ।
आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ ७४ ॥

स तल्पात्तूर्णमुत्थाय कालोऽयमिति विह्वलः ।
सूतीगृहमगाच्छीघ्रं प्रस्खलन्मुक्तमूर्धजः ॥ ७५ ॥

तमाह भ्रातरं देवी कृपणा करुणं सती ।
स्नुषेयं तव कल्याण स्त्रियं नो हन्तुमर्हसि ॥ ७६ ॥

बहवो हिंसिता भ्रातः शिशवः पावकोपमाः ।
त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ७७ ॥

नन्वहं ते ह्यवरजा दीना हतसुता विभो ।
दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम् ॥ ७८ ॥

श्रीशुक उवाच ।

उपगूह्यात्मजामेवं रुदत्या दीनदीनवत् ।
याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥ ७९ ॥

75 c T तूर्णं for शीघ्रं 76 d T मा for नो.

तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम् ।
अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥ ८० ॥

सा तद्धस्तात्समुत्पत्य सद्यो देव्यम्बरं गता ।
अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥ ८१ ॥

दिव्यस्रगम्बरालेपरत्नाभरणभूषिता ।
धनुश्शूलेषुचर्मासिशङ्खचक्रगदाधरा ॥ ८२ ॥

सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः ।
उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ८३ ॥

चण्डिकोवाच ।

किं मया हतया मन्द जातः खलु तवान्तकृत् ।
यत्र क्वचित्पूर्वशत्रुर्मा हिंसीः कृपणान्वृथा ॥ ८४ ॥

श्रीशुक उवाच ।

इति प्रभाष्य तं देवी माया भगवती भुवि ।
बहुनामनिकेतेषु बहुनामा बभूव ह ॥ ८५ ॥

तयाभिहितमाकर्ण्य कंसः परमविस्मितः ।
देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥ ८६ ॥

कंस उवाच ।

अहो भगिन्यहो भाम मया वां बत पाप्मना ।
पुरुषाद इवापत्यं बहवो हिंसिताः सुताः ॥ ८७ ॥

स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः ।
काँल्लोकान्वै गमिष्यामि ब्रह्महेव मृतः श्वसन् ॥ ८८ ॥

दैवमप्यनृतं वक्ति न मर्त्या एव केवलम् ।
यद्विश्रम्भादहं पापः स्वसुर्निहतवाञ्छिशून् ॥ ८९ ॥

मा शोचतं महाभागावात्मजान्स्वकृतभुजः ।
जन्तवो न सदैकत्र दैवाधीना महामते ॥ ९० ॥

भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च ।
नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥ ९१ ॥

---

82c T धनुश्शूलेषुचर्मासि° 90b T स्वात्मजान् for आत्मजान्, d T तदामते. T notes v l सहासने for महामते

यथानेवंविदो भेदो यत आत्मविपर्ययः ।
देहयोगवियोगौ च संसृतिर्न निवर्तते ॥ ९२ ॥

तस्माद्भद्रे स्वतनयान्मया व्यापादितानपि ।
मानुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः ॥ ९३ ॥

यावद्धतोऽस्मि हन्तास्मीत्यात्मानं मन्यते स्वदृक् ।
तावत्तदभिमान्यज्ञो बाध्यबाधकतामियात् ॥ ९४ ॥

क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः ।
इत्युक्त्वाश्रुमुखः पादौ श्यालः स्वस्रोरथाग्रहीत् ॥ ९५ ॥

मोचयामास निगडाद्विश्रब्धः कन्यकागिरा ।
देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम् ॥ ९६ ॥

भ्रातुः समनुतप्तस्य क्षान्तरोषा च देवकी ।
व्यसृजद्वसुदेवश्च प्रहस्य तमुवाच ह ॥ ९७ ॥

वसुदेव उवाच ।

एवमेतन्महाभाग यथा वदसि देहिनाम् ।
अज्ञानप्रभवाहंधीः स्वपरेति भिदा यतः ॥ ९८ ॥

शोकहर्षभयद्वेषलोभमोहमदान्विताः ।
मिथो घ्नन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः ॥ ९९ ॥

श्रीशुक उवाच ।

कंस एवं प्रसन्नाभ्यां विशुद्धं प्रतिभाषितः ।
देवकीवसुदेवाभ्यामनुज्ञातोऽविशद्गृहम् ॥ १०० ॥

तस्यां रात्र्यां व्यतीतायां कंस आहूय मन्त्रिणः ।
तेभ्य आचष्ट तत्सर्वं यदुक्तं योगमायया ॥ १०१ ॥

आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः ।
देवान्प्रतिकृतामर्षा दैतेया नातिकोविदाः ॥ १०२ ॥

दैत्या ऊचुः ।

एवं चेत्तर्हि भोजेन्द्र पुरग्रामव्रजादिषु ।
अनिर्दशान्निर्दशांश्च हनिष्यामोऽद्य वै शिशून् ॥ १०३ ॥

किमुद्यमैः करिष्यन्ति देवाः समरभीरवः ।
नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥ १०४ ॥

अस्यतस्ते शरव्रातैर्हन्यमानाः समन्ततः ।
जिजीविषय उत्सृज्य पलायनपरा ययुः ॥ १०५ ॥

केचित्प्राञ्जलयो भीता न्यस्तशस्त्रा दिवौकसः ।
मुक्तकच्छशिखाः केचिद्भीताः स्म इति वादिनः ॥ १०६ ॥

न त्वं विस्मृ(स्मृ)तशस्त्रास्त्रान्विरथान्भयसंनतान् ।
हंस्यन्यासक्तविमुखान्भग्नचापानयुध्यतः ॥ १०७ ॥

किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ।
रहोजुषा किं हरिणा शंभुना वा वनौकसा ॥ १०८ ॥

किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ।
तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ।
ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान् ॥ १०९ ॥

यथामयोऽङ्गे समुपेक्षितो नृभि-
र्न शक्यते रूढपदश्चिकित्सितुम् ।
यथेन्द्रियग्राम उपेक्षितस्तथा
रिपुर्महान्बद्धबलो न चाल्यते ॥ ११० ॥

मूलं हि विष्णुर्देवानां यतो धर्मः सनातनः ।
तस्य च ब्रह्मगोविप्रास्तपो यज्ञाः सदक्षिणाः ॥ १११ ॥

[ भाग० १०.४.१–३१ ]

विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः ।
श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः ॥ ११२ ॥

स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः ।
तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ॥ ११३ ॥

एवं दुर्मन्त्रिभिः कंसः सह संमन्त्र्य दुर्मतिः ।
ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥ ११४ ॥

संदिश्य साधुलोकस्य कदने कदनप्रियान् ।
कामरूपधरान्दिक्षु दानवान्गृहमाविशत् ॥ ११५ ॥

ते वै रजःप्रकृतयस्तमसा मूढचेतसः ।
सतां विद्वेषमाचेरुरारादागतमृत्यवः ॥ ११६ ॥

[ भाग० १०.४.४०–४५ ]

---

106 *a* T दीना for भीता. T notes: भीता इति पाठ. 107 *b* T भयसंनतान् for भयसनतान्. 111*a* T हि विष्णु (by transp.); *b* T यत्र for यतो.

श्रीशुक उवाच ।

नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ।
आहूय विप्रान्वेदज्ञान्स्नातः शुचिरलंकृतः ॥ ११७ ॥

वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै ।
कारयामास विधिवत्पितृदेवार्चनादिकम् ॥ ११८ ॥

धेनूनां नियुते प्रादाद्विप्रेभ्यः समलंकृते ।
तिलाद्रीन्सप्त रत्नौघान्शातकौम्भाम्बरावृतान् ॥ ११९ ॥

कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया ।
शुध्यन्ति दानैः संतुष्ट्या द्रव्याण्यात्मात्मविद्यया ॥ १२० ॥

सौमङ्गल्यगिरो विप्राः सूतमागधवन्दिनः ।
गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मुहुः ॥ १२१ ॥

व्रजः संमृष्टसंसिक्तद्वाराजिरगृहान्तरः ।
चित्रध्वजपताकास्रक्चैलपल्लवतोरणः ॥ १२२ ॥

गावो वृषाश्च वत्साश्च हरिद्रातैलरूषिताः ।
विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः ॥ १२३ ॥

महार्हवस्त्राभरणाः कञ्चुकोष्णीषभूषिताः ।
गोपाः समाययू राजन्नानोपायनपाणयः ॥ १२४ ॥

गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम् ।
आत्मानं भूषयांचक्रुर्वस्त्राकल्पाञ्जनादिभिः ॥ १२५ ॥

नवकुङ्कुमकिञ्जल्कमुखपङ्कजभूतयः ।
बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ॥ १२६ ॥

गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठा-
श्चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः ।
नन्दालयं सवलयो व्रजतीर्विरेजु-
र्व्यालोलकुण्डलपयोधरहारशोभाः ॥ १२७ ॥

[ भाग० १० ५ १–११.

---

118 *d* T °र्चन तथा for °र्चनादिक 119*c* T रत्नौघ° for रत्नौघान् 122 *d* T °तोरणैः for तोरणः 123*a* T गावो वृषा वत्सतरा 127*a* T °निष्क-कण्ठ्य for निष्ककण्ठा , c T सवल्या for सवलयो

अथ सूची ॥

गोप्यो गानपरायणा इतइतो नृत्यन्ति वीतत्रपा
गोपाः पीतपटावृता दधिजलैः सिञ्चन्ति तत्रागतान् ।
नन्दो वेदविचक्षणाय विदुषे वृन्दं गवां प्राददा-
दानन्दो व्रजवासिनामुदभवन्नन्दस्य पुत्रोऽभवत् ॥ १२८ ॥

श्रीभागवते ॥

नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह ।
गोपान्गोकुलरक्षायां निरूप्य मथुरां गतः ॥ १२९ ॥

वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम् ।
ज्ञात्वा दत्तकरं राज्ञे ययौ तदवमोचनम् ॥ १३० ॥

तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् ।
प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः ॥ १३१ ॥

[ भाग० १० ५ १९–२१ ]

वसुदेव उवाच ।

दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते ।
प्रजाशाया निवृत्तस्य प्रजा यत्समपद्यत ॥ १३२ ॥

दिष्ट्या संसारचक्रेऽस्मिन्वर्तमानः पुनर्भवः ।
उपलब्धो भवानद्य दुर्लभं प्रियदर्शनम् ॥ १३३ ॥

नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् ।
ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा ॥ १३४ ॥

कच्चित्पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् ।
बृहद्वनं तदधुना यत्रास्से त्वं सुहृद्वृतः ॥ १३५ ॥

भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे ।
तातं भवन्तं मन्वानो भवद्भ्यामुपलालितः ॥ १३६ ॥

पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः ।
न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते ॥ १३७ ॥

129 T Transp *ab* and *cd*

नन्द उवाच ।

अहो ते देवकीपुत्राः कंसेन बहवो हताः ।
एकावशिष्टावरजा कन्या सापि दिवं गता ॥ १३८ ॥

नूनं ह्यदृष्टनिष्ठोऽयमदृष्टपरमो जनः ।
अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति ॥ १३९ ॥

वसुदेव उवाच ।

करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः ।
नेह स्थेयं बहुतिथं सन्त्युत्पाताश्च गोकुले ॥ १४० ॥

श्रीशुक उवाच ।

इति नन्दादयो गोपाः प्रोक्तास्ते शौरिणा ययुः ।
अनोभिरनडुद्युक्तैस्तमनुज्ञाप्य गोकुलम् ॥ १४१ ॥

[ भाग० १०-५-२३-३२ ]

अथ सूक्ती ॥

नन्दे निजव्रजगते वसुदेववाचा
संचिन्त्य चारु चरणाम्बुजमेव विष्णोः ।
औत्पातिकानि किल कंसवचोनुसारि-
तद्भृत्यवर्गविहितानि समाहृतानि ॥ १४२ ॥

योषिद्वेषमुपेत्य सुन्दरतरं प्राप्ता व्रजं पूतना
कंसादेववशादुपेत्य भवनं नन्दस्य चाटूक्तिभिः ।
कृष्णं वीक्ष्य निरन्तरेण नितरामाघ्राय मौलिं हरे-
रङ्के किं च निधाय नीरदरुचे स्तन्यं स्वकीयं ददौ ॥ १४३ ॥

स्त्रीपीयूषमयूखनिर्मलमुखीं कुन्दावदाताम्बरा-
मापल्लम्बितकेशपाशविलसत्पुष्पश्रियोल्लासिनीम् ।
सम्यग्वीक्ष्य दृगञ्चलेन भगवान्विज्ञाय तां डाकिनी-
मस्याः पाणिसरोजपीडितकुचं प्राणान्पयोभिः पपौ ॥ १४४ ॥

सा सद्योऽतिकरालपीवरतनुर्मां मुञ्च मुञ्चाधुना
मुञ्चेत्यस्फुटभाषिणी निपतिता भूमौ व्यसू राक्षसी ।
बालं तत्र विलोक्य वक्षसि सुखं क्रीडन्तमस्यास्तनौ
गोपा विस्मयमागताः प्रतिपदं रक्षां च चक्रुर्हरेः ॥ १४५ ॥

मुदा यशोदा सह गोपिकाभि-
राघ्राय मौलिं मधुसूदनस्य ।
सविस्मयोत्फुल्लविलोचनान्ता
नीराजनामादरतश्चकार ॥ १४६ ॥

अहो महत्त्वं पुरुषोत्तमस्य
दत्वा स्तनं कृष्णजिघांसयापि ।
या योगिभिर्ध्यानपरैरुपेया
तां पूतना सद्गतिमाससाद ॥ १४७ ॥

औत्थानिकोत्सवविधौ सह गोपिकाभि-
रुक्त्वा शिशुं विमलशिल्पतले चकार ।
ऊर्ध्वं विधाय नवकोमलपादपद्मं
कौतूहलेन शकटं भगवान्बभञ्ज ॥ १४८ ॥

तत्रागत्याथ गोपाः शकटमति शिशोः पार्श्वतो भग्नभाण्डं
दृष्ट्वा हा कष्टमेतत्किमिति किमिति च प्रोचुरादाय कृष्णम् ।
विप्राः सूक्तैः सतुक्तैरतिरुचिरवचो रक्षणादीनि चक्रु-
र्मूर्धन्याघ्राय माता हरिममितगुणग्राममङ्के चकार ॥ १४९ ॥

यशोदा स्वाद्ङ्गादतिगुरुतया तं शिशुमपि
क्षितौ धृत्वा विष्णोश्चरणकमलध्यानमकरोत् ।
तृणावर्तो दैत्योऽप्यतिविषमवात्याकृतिरसौ
जहार श्रीकृष्णं वियति विसरत्पांसुविषमः ॥ १५० ॥

अपश्यन्ती बालं विकलहृदया हन्त जननी
निरानन्दो नन्दः सपदि सुहृदो मूढमनसः ।
इति ज्ञात्वा कृष्णो वियति विचरन्तं दितिसुत
गले गाढं धृत्वा सपदि गलितप्राणमकरोत् ॥ १५१ ॥

श्रीभागवते ॥

तमन्तरिक्षात्पतितं शिलायां
विशीर्णसर्वावयवं करालम् ।
पुरं यथा रुद्रशरेण विद्धं
स्त्रियो रुदन्त्यो ददृशुः समेता ॥ १५२ ॥

---

152 a A पुनर् for पुरं

आदाय मात्रे प्रतिहृत्य विस्मिताः
कृष्णं च तस्योरसि लम्बमानम् ।
तं स्वस्तिमन्तं पुरुषादनीतं
विहायसा मृत्युमुखात्प्रमुक्तम् ॥ १५३ ॥

गोप्यः सगोपाः किल नन्दमुख्या
लब्धाशिषः प्रापुरतीव मोदम् ।
अहो बतात्यद्भुतमेष रक्षसा
बालोऽनिवृत्तिं गमितोऽभ्यगात्पुनः ॥ १५४ ॥

हिंस्रः स्वपापेन च हिंसितः खलः
साधुः समत्वेन भयात्प्रमुच्यते ।
किं नस्तपश्चीर्णमधोक्षजार्चनं
पूर्तेष्टदत्तमुत भूतसौहृदम् ।
यत्संपरेतः पुनरेव बालको
दिष्ट्या स्वबन्धून्प्रणयादुपस्थितः ॥ १५५ ॥

दृष्ट्वाद्भुतानि बहुशो नन्दगोपो बृहद्वने ।
वसुदेववचो भूयो मानयामास विस्मितः ॥ १५६ ॥

तृणावर्तागमे दृष्टगौरवाशङ्किनीं प्रसूम् ।
बोधयन्दर्शयामास जृम्भमाणो मुखे जगत् ॥ १५७ ॥

एकदार्भकमादाय स्वाङ्कमारोप्य भामिनी ।
प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता १५८ ॥

पीतप्रायस्य जननी सा तस्य रुचिरस्मितम् ।
मुखं लालयती राजञ्जृम्भतो ददृशे इदम् ॥ १५९ ॥

खं रोदसी ज्योतिरनीकमाशाः
सूर्येन्दुवह्निश्वसनाम्बुधींश्च ।
द्वीपान्नगांस्तद्दुहितुर्वनानि
भूतानि यानि स्थिरजङ्गमानि ॥ १६० ॥

सा वीक्ष्य विश्वं सहसा राजन्संजातवेपथुः ।
संमील्य मृगशावाक्षी नेत्रे आसीत्सुविस्मिता ॥ १६१ ॥

[ भाग० १०-७ २९-३७ ]

---

154 *a* T च गोपा for सगोपा, *b* T लब्ध्वा पुन for लब्धाशिष 155 *a* T वैहिंसित for च हिंसित., *b* T विमुच्यते for प्रमुच्यते. 155 *d* T प्रणयन् for प्रणयाद्.

अथ सूची ॥

व्रजं गर्गो गत्वा यदुकुलगुरुः शौरिवचसा
समायातो नन्दालयमथ शिशुं वीक्ष्य मुदितः ।
तयोर्नामान्यर्थैरनुगतपदान्येव विदधे
विधिज्ञः संगुप्तं रहसि निवसन्कंसभयतः ॥ १६२ ॥

चरन्तौ जानुभ्यामथ करयुगाभ्यामधिमहि
स्फुरन्तौ प्रत्यङ्गं परिणतरजोरूषितरुची ।
कदाचिज्जम्बालाकुलितललितौ कैतवशिशू
मुदा मात्रोः प्रीतिं प्रतिपदमुदारां विदधतुः ॥ १६३ ॥

वत्सान्मुञ्चति गा रुणद्धि चपलो मुष्णाति कृष्णो दधि
क्षीराणि क्षिपति क्षितौ तव सुतो दृष्टः क्वचिल्लीयते ।
भाण्डं स्फोटयति स्वयं च शिशुभिः सर्पींषि भुङ्क्ते बला-
च्छ्रुत्वैवं गुरुगोपिकाजनवचो लेभे यशोदा मुदम् ॥ १६४ ॥

बालक्रीडनया मया सह गतः कृष्णो मृदं भुक्तवा-
ञ्छ्रुत्वैवं बलवाचमाह जननी किं कृष्ण सत्यं वचः ।
मिथ्या मातरिदं विलोकय मुखं व्यादेहि मत्संमुखं
व्यादीर्णे वदने शिशोरथ जगद् दृष्ट्वा ययौ विस्मयम् ॥ १६५ ॥

श्रीभागवते ॥

इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः ।
वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः ॥ १६६ ॥

सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजम् ।
प्रवृद्धस्नेहकलिलहृदयास यथा पुरा ॥ १६७ ॥

त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः ।
उपगीयमानमाहात्म्यं हरिं सामन्यतात्मजम् ॥ १६८ ॥

[ भाग० १० ८.४३–४५ ]

अथ सूची ॥

दध्नो मन्थनकर्मणाकुलमतिर्माता कदाचित्सुतं
पीतस्तन्यमवेक्ष्य चञ्चलतरं दाम्ना दृढोलूखले ।
बद्ध्वा गाढमवेक्ष्य पङ्कजमले कृष्णस्य मृदुस्मिता
गायन्ती चरितं हरेरथ दधि स्फीतं ममन्थ स्वयम् ॥ १६९ ॥

---

167 *d* T °हृदयासीद् for °हृदयास

श्रीभागवते ॥

तद्दाम वध्यमानस्य स्वात्मजस्य कृतागसः।
द्व्यङ्गुलोनमभूत्तेन संदधेऽन्यच्च गोपिका ॥ १७० ॥

यदास तदपि न्यूनं तेनान्यदपि संदधे।
तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम् ॥ १७१ ॥

एवं स्वगेहदामानि यशोदा संदधत्यपि।
गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताभवत् ॥ १७२ ॥

स्वमातुः स्विन्नगात्राया विस्रस्तकबरस्रजः।
दृष्ट्वा परिश्रमं कृष्णः कृपयासीत्स्वबन्धने ॥ १७३ ॥

[ भाग० १०.९.१५–१८ ]

अथ सूची ॥

लोकेभ्यो निजभक्तभक्तिवशतां संदर्शयन्नम्बया
बद्धोलूखलमाचकर्ष पुरतो दृष्ट्वा द्रुमावर्जुनौ।
तावुद्धर्तुमना बभञ्ज विचरन्मध्ये हरिर्लीलया
पुत्राभ्यां धनदस्य च स्तुतिपदं प्राप्तः श्रियं यच्छतु ॥ १७४ ॥

श्रीभागवते ॥

[ एवं संदर्शिता ह्यङ्ग हरिणा भृत्यवश्यता। ]
स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशे ॥ १७५ ॥

नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया।
प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् ॥ १७६ ॥

नायं सुखापो भगवान्देहिनां गोपिकासुतः।
ज्ञानिनां चात्मपोतानां यथा भक्तिमतामिह ॥ १७७ ॥

कृष्णस्तु गृहकृत्येषु व्यग्रायां मातरि प्रभुः।
अद्राक्षीदर्जुनौ पूर्वं गुह्यकौ धनदात्मजौ ॥ १७८ ॥

पुरा नारदशापेन वृक्षतां प्रापितौ मदात्।
नलकूवरमणिग्रीवाविति ख्यातौ श्रियान्वितौ ॥ १७९ ॥

[ भाग० १०.९.१९–२३ ]

---

171 *a* T यदासीत् for यदास. 173 *a* T स्निग्धगात्राया for स्विन॰. 175 *a* not found in A. 177 *c* T आत्मभूताना for ॰पोताना, T notes आत्मपोताना as v.l.

श्रीभागवते ॥

गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम् ।
तत्राजग्मुः कुरुश्रेष्ठ निर्घातभयशङ्किताः ॥ १८० ॥

भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ ।
बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम् ॥ १८१ ॥

उलूखलं विकर्षन्त दाम्ना बद्धं च बालकम् ।
कस्येदं कुत आश्चर्यमुत्पातभयशङ्किताः ॥ १८२ ॥

बाला ऊचुरनेनेति तिरश्चीनमुलूखलम् ।
विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥ १८३ ॥

न ते तदुक्तं जगृहुर्न घटेतेति कस्यचित् ।
बालस्योत्पाटनं तर्वोः केचित्संदिग्धचेतसः ॥ १८४ ॥

उलूखलं विकर्षन्तं दाम्ना बद्धं स्वबालकम् ।
विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह ॥ १८५ ॥

[ भाग० १० ११ १–६ ]

अथ सूची ॥

भक्तानामनुकम्पया प्रकटयन्स्वं बालरूपं वपु-
र्मातुः पाणिसरोरुहाङ्कुलिदलालम्बाञ्चनैरञ्चितः ।
गोपस्त्रीकरतालिकाभिरभितो नृत्यन्यशोदापुरो
गोपीनां मुदमाततान जगदानन्दैककन्दो हरिः ॥ १८६ ॥

श्रीभागवते ॥

गोपवृद्धा महोत्पातानुभूय बृहद्वने ।
नन्दादयः समागम्य व्रजकार्यममन्त्रयन् ॥ १८७ ॥

[ भाग० १० ११ २० ]

[ रन्तुं वृन्दावनं गन्तुमन्तः कृष्णेन यन्त्रिता ।
स्वतन्त्रा इव नन्दाद्या मन्त्रमेतममन्त्रयन् ॥ १८८ ॥ ]

[ टीकाकृच्छ्लोकः । ]

तत्रोपनन्दनामाह गोपो ज्ञानवयोधिकः ।
देशकालार्थतत्त्वज्ञः प्रियकृद्रामकृष्णयोः १८९ ॥

---

182 *d* T उत्पाद इति कातरा T notes v l उत्पातभयकातरा 183 *b* T तिरश्चगत for तिरश्चीन 188 A stanza taken from श्रीधरी टीका

उपनन्द उवाच ।

उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः ।
आयान्त्यत्र महोत्पाता बालानां नाशहेतवः ॥ १९० ॥

मुक्तः कथंचिद्राक्षस्या बालघ्न्या बालको ह्यसौ ।
हरेरनुग्रहान्नूनमनश्चोपरि नापतत् ॥ १९१ ॥

चक्रवातेन नीतोऽयं दैत्येन विपदं वियत् ।
शिलायां पतितस्तत्र परित्रातः सुरेश्वरैः ॥ १९२ ॥

यन्न मृतोऽयं द्रुमयोरन्तरं प्राप्य बालकः ।
असावन्यतमो वापि तदप्यच्युतरक्षणम् ॥ १९३ ॥

यावदौत्पातिको रिष्टो व्रजं नाभिभवेदितः ।
तावद्बालानुपादाय यास्यामोऽन्यत्र सानुगाः ॥ १९४ ॥

वनं वृन्दावनं नाम पशव्यं नवकाननम् ।
गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम् ॥ १९५ ॥

तत्तत्राद्यैव यास्यामः शकटान्युङ्क्त माचिरम् ।
गोधनान्यग्रतो यान्तु भवतां यदि रोचते ॥ १९६ ॥

श्रीशुक उवाच ।

तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः ।
व्रजान्स्वान्स्वान्समायुज्य ययू रूढपरिच्छदाः ॥ १९७ ॥

वृद्धान्बालान्स्त्रियो राजन्सर्वोपकरणानि च ।
अनस्स्वारोप्य गोपाला यत्ता आत्तशरासनाः ॥ १९८ ॥

गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः ।
तूर्यघोषेण महता ययुः सहपुरोहिताः ॥ १९९ ॥

गोप्यो रूढरथा नूत्नकुचकुङ्कुमकान्तयः ।
कृष्णलीलां जगुः प्रीता निष्ककण्ठ्यः सुवाससः ॥ २०० ॥

तथा यशोदारोहिण्यावेकं शकटमास्थिते ।
रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके ॥ २०१ ॥

वृन्दावनं संप्रविश्य सर्वकालसुखावहम् ।
तत्र चक्रुर्व्रजावासं शकटैरर्धचन्द्रवत् ॥ २०१ ॥

---

193 *a* T म्रियेत for मृतोऽयं.

श्रीभागवते ॥

गोपा नन्दादयः श्रुत्वा द्रुमयोः पततो रवम् ।
तत्राजग्मुः कुरुश्रेष्ठ निर्घातभयशङ्किताः ॥ १८० ॥

भूम्यां निपतितौ तत्र ददृशुर्यमलार्जुनौ ।
बभ्रमुस्तदविज्ञाय लक्ष्यं पतनकारणम् ॥ १८१ ॥

उलूखलं विकर्षन्तं दाम्ना बद्धं च बालकम् ।
कस्येदं कुत आश्चर्यमुत्पातभयशङ्किताः ॥ १८२ ॥

बाला ऊचुरनेनेति तिरश्चीनमुलूखलम् ।
विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ॥ १८३ ॥

न ते तदुक्तं जगृहुर्न घटेतेति कस्यचित् ।
बालस्योत्पाटनं तर्वोः केचित्संदिग्धचेतसः ॥ १८४ ॥

उलूखलं विकर्षन्तं दाम्ना बद्धं स्वबालकम् ।
विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह ॥ १८५ ॥

[ भाग० १० ११ १–६ ]

अथ सूची ॥

भक्तानामनुकम्पया प्रकटयन्स्वं बालरूपं वपु-
र्मातुः पाणिसरोरुहाङ्गुलिदलालम्बाच्छनैरस्थितः ।
गोपस्त्रीकरतालिकाभिरभितो नृत्यन्यशोदापुरो
गोपीनां मुदमाततान जगदानन्दैककन्दो हरिः ॥ १८६ ॥

श्रीभागवते ॥

गोपवृद्धा महोत्पातानुनुभूय बृहद्वने ।
नन्दादयः समागम्य व्रजकार्यममन्त्रयन् ॥ १८७ ॥

[ भाग० १० ११ २० ]

[ रन्तुं वृन्दावनं गन्तुमन्तः कृष्णेन यन्त्रिताः ।
स्वतन्त्रा इव नन्दाद्या मन्त्रमेतममन्त्रयन् ॥ १८८ ॥ ]

[ टीकाकृच्छ्लोकः । ]

तत्रोपनन्दनामाह गोपो ज्ञानवयोधिकः ।
देशकालार्थतत्त्वज्ञः प्रियकृद्रामकृष्णयोः १८९ ॥

182 *d* T उत्पाद इति कातरा॰ T notes v l उत्पातभयकातरा 183 *b* T तिर्यगत for तिरश्चीन. 188 A stanza taken from श्रीधरी टीका

उपनन्द उवाच ।

उत्थातव्यमितोऽस्माभिर्गोकुलस्य हितैषिभिः ।
आयान्त्यत्र महोत्पाता बालानां नाशहेतवः ॥ १९० ॥

मुक्तः कथंचिद्राक्षस्या बालघ्न्या बालको ह्यसौ ।
हरेरनुग्रहान्नूनमनश्चोपरि नापतत् ॥ १९१ ॥

चक्रवातेन नीतोऽयं दैत्येन विपदं वियत् ।
शिलायां पतितस्तत्र परित्रातः सुरेश्वरैः ॥ १९२ ॥

यन्न मृतोऽयं द्रुमयोरन्तरं प्राप्य बालकः ।
असावन्यतमो वापि तदप्यच्युतरक्षणम् ॥ १९३ ॥

यावदौत्पातिको रिष्टो व्रजं नाभिभवेदितः ।
तावद्बालानुपादाय यास्यामोऽन्यत्र सानुगाः ॥ १९४ ॥

वनं वृन्दावनं नाम पशव्यं नवकाननम् ।
गोपगोपीगवां सेव्यं पुण्याद्रितृणवीरुधम् ॥ १९५ ॥

तत्तत्राद्यैव यास्यामः शकटान्युङ्क्त माचिरम् ।
गोधनान्यग्रतो यान्तु भवतां यदि रोचते ॥ १९६ ॥

श्रीशुक उवाच ।

तच्छ्रुत्वैकधियो गोपाः साधु साध्विति वादिनः ।
व्रजान्स्वान्स्वान्समायुज्य ययू रूढपरिच्छदाः ॥ १९७ ॥

वृद्धान्बालान्स्त्रियो राजन्सर्वोपकरणानि च ।
अनःस्वारोप्य गोपाला यत्ता आत्तशरासनाः ॥ १९८ ॥

गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः ।
तूर्यघोषेण महता ययुः सहपुरोहिताः ॥ १९९ ॥

गोप्यो रूढरथा नूत्नकुचकुङ्कुमकान्तयः ।
कृष्णलीलां जगुः प्रीता निष्ककण्ठ्यः सुवाससः ॥ २०० ॥

तथा यशोदारोहिण्यावेकं शकटमास्थिते ।
रेजतुः कृष्णरामाभ्यां तत्कथाश्रवणोत्सुके ॥ २०१ ॥

वृन्दावनं संप्रविश्य सर्वकालसुखावहम् ।
तत्र चक्रुर्व्रजावासं शकटैरर्धचन्द्रवत् ॥ २०२ ॥

---

193 *a* T म्रियेत for मृतोऽयं.

वृन्दावनं गोवर्धनं यमुनापुलिनानि च ।
वीक्ष्यासीदुत्तमा प्रीती राममाधवयोरपि ॥ २०३ ॥

एवं व्रजौकसां प्रीतिं यच्छन्तौ बालचेष्टितैः ।
कलवाक्यौ च कालेन वत्सपालौ बभूवतुः ॥ २०४ ॥

अविदूरे व्रजभुवः सह गोपालदारकैः ।
चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ ॥ २०५ ॥

क्वचिद्वादयतो वेणून्क्षेपणैः क्षिपतः क्वचित् ।
क्वचित्पादैः किङ्किणीभिः क्वचित्कृत्रिमगोवृषैः ॥ २०६ ॥

वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् ।
अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा ॥ २०७ ॥

कदाचिद्यमुनातीरे वत्सांश्चारयतोः स्वकैः ।
वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत् ॥ २०८ ॥

तं वत्सरूपिणं वीक्ष्य वत्सयूथगतं हरिः ।
दर्शयन्बलदेवाय शनैर्मुग्ध इवासदत् ॥ २०९ ॥

गृहीत्वापरपादाभ्यां सहलाङ्गूलमच्युतः ।
भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम् ।
स कपित्थैर्महाकायः पात्यमानैः पपात ह ॥ २१० ॥

तं वीक्ष्य विस्मिता बालाः शशंसुः साधु साध्विति ।
देवाश्च परिसंतुष्टा बभूवुः पुष्पवृष्टिभिः ॥ २११ ॥

तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ ।
सप्रातराशौ गोवत्सांश्चारयन्तौ विचेरतुः ॥ २१२ ॥

स्वं स्वं वत्सकुलं सर्वे पाययिष्यन्त एकदा ।
गत्वा जलाशयाभ्यासं पाययित्वा पपुर्जलम् ॥ २१३ ॥

[ भाग० १०.११.२०-४५ ]

अथ सूची ॥

बालाः कदाचिदमलानि पयांसि पातु-
मीयुः सरोऽथ बलकृष्णमुखाः सुखेन ।
आगत्य तत्र बकरूपधरः करालो
दैत्योऽगमत्कमललोचनमीशमग्यम् ॥ २१४ ॥

---

204 c T कलवाक्यै स्वकालेन 211 a T बभूवु पुष्पवर्षिण

ग्रस्तान्बालान्विलोक्य स्वयमथ कुहराद्बालरूपी मुरारि-
श्चञ्चोरादाय गाढं चकमतुलबलं लीलयैवाचकर्ष ।
त्यक्तप्राणः पृथिव्यामपतदथ बको वीक्ष्य बालस्य विष्णो-
र्लीलामानन्दशीलां वियति दिविषदः पुष्पवर्षाणि चक्रुः ॥ २१५ ॥

वत्सांश्चारयतः सुखेन यमुनातीरे शिशूनां महा-
घोरः पार्श्वमसावगादजगराकारो विदीर्णाननः ।
तद्वक्त्रं विविशुः कुतूहलधियो बाला विशालाकृति
कृष्णो वीक्ष्य विचार्य तन्मुखगुहां त्रातुं शिशूनाविशत् ॥ २१६ ॥

कृष्णस्तस्योदरस्थः स्वयमथ ववृधे लीलया विश्वमूर्ति-
र्भक्तानामार्तिहन्ता प्रबलतररिपोः प्राणवायुं निरुन्धन् ।
निश्चक्रामाथ भित्त्वा वपुरपि शिशुभिस्तस्य तत्कर्म दृष्ट्वा
सानन्दं विस्मितास्याः सपदि दिविषदः पुष्पवृष्टिं वितेनुः ॥ २१७ ॥

श्रीभागवते ॥

तथाघवदनान्मृत्यो रक्षित्वा वत्सबालकान् ।
सरित्पुलिनमानीय भगवानिदमब्रवीत् ॥ २१८ ॥

श्रीभगवानुवाच ।

अहोऽतिरम्यं पुलिनं वयस्याः
स्वकेलिसंपन्मृदुलाच्छबालुकम् ।
स्फुटत्सरोगन्धहृतालिपत्त्रिका-
ध्वनप्रतिध्वानलसद्द्रुमाकुलम् ॥ २१९ ॥

अत्र भोक्तव्यमस्माभिर्दिवा रूढं क्षुधार्दिताः ।
वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम् ॥ २२० ॥

तथेति पाययित्वार्भा वत्सानारुध्य शाद्वले ।
मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा ॥ २२१ ॥

कृष्णस्य विष्वक्पुरुराजिमण्डलै-
रभ्याननाः फुल्लदृशो व्रजार्भकाः ।
सहोपविष्टा विपिने विरेजु-
श्छदा यथाम्भोरुहकर्णिकायाः ॥ २२२ ॥

---

219 *a* T °ध्वनि° for °ध्वन° 220 *d* T क्षुधार्दिते, T notes v l क्षुधार्दिता

केचित्पुष्पैर्दलैः केचित्पल्लवैरङ्कुरैः फलैः ।
शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥ २२३ ॥

सर्वे मिथो दर्शयन्तः स्वस्वभोज्यरुचिं पृथक् ।
हसन्तो हासयन्तश्चाभ्यवजह्रुः सहेश्वराः ॥ २२४ ॥

बिभ्रद्वेणुं जठरपटयोः शृङ्गवेत्रे च कक्षे
वामे पाणौ मसृणकवलं तत्फलान्यङ्गुलीषु ।
तिष्ठन्मध्ये स्वपरिसुहृदो हासयन्नर्मभिः स्वैः
स्वर्गे लोके मिषति बुभुजे यज्ञभुग्बालकेलिः ॥ २२५ ॥

भारतैवं वत्सपेषु भुञ्जानेष्वच्युतात्मसु ।
वत्सास्त्वन्तर्वने दूरं विविशुस्तृणलोभिताः ॥ २२६ ॥

तान्दृष्ट्वा भयसंत्रस्तानूचे कृष्णोऽस्य भीभयम् ।
मित्राण्यशनान्मा विरमतेहानेष्ये वत्सकानहम् ॥ २२७ ॥

इत्युक्त्वाद्रिदरीकुञ्जगह्वरेष्वात्मवत्सकान् ।
विचिन्वन्भगवान्कृष्णः सपाणिकवलो ययौ ॥ २२८ ॥

अम्भोजन्मजनिस्तदन्तरगतो मायार्भकस्येशितु-
र्द्रष्टुं मञ्जु महित्वमन्यदपि तद्वत्सानितो वत्सपान् ।
नीत्वान्यत्र कुरूद्वहान्तरदधात्खेऽवस्थितो यः पुरा
दृष्ट्वाघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयम् ॥ २२९ ॥

ततो वत्सानदृष्ट्वेत्य पुलिनेऽपि च वत्सपान् ।
उभावपि वने कृष्णो विचिकाय समन्ततः ॥ २३० ॥

[ भाग० १० १३.३-१६ ]

ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च ।
उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥ २३१ ॥

यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकं
यावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषाम्बरम् ।
यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं
सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ ॥ २३२ ॥

स्वयमात्मात्मगोवत्सान्प्रतिवार्यात्मवत्सपैः ।
क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद् व्रजम् ॥ २३३ ॥

तत्तद्वत्सान्पृथङ्नीत्वा तत्तद्गोष्ठे निवेश्य सः।
तत्तदात्माभवद्राजंस्तत्तत्सद्म प्रविष्टवान् ॥ २३४ ॥

तन्मातरो वेणुरवत्वरोत्थिता
उत्थाप्य दोर्भिः परिरभ्य निर्भरम्।
स्नेहस्नुतस्तन्यपयःसुधासवं
मत्वा परं ब्रह्म सुतानपाययन् ॥ २३५ ॥

ततो नृपोन्मर्दनमज्जलेपना-
लंकाररक्षातिलकाशनादिभिः।
संलालितः स्वाचरितैः प्रहर्षय-
न्सायं गतो यामयमेन माधवः ॥ २३६ ॥

गावस्ततो गोष्ठमुपेत्य सत्वरं
हुंकारघोषैः परिहूतसंगतान्।
स्वकान्स्वकान्वत्सतरानपायय-
न्मुहुर्लिहन्त्यः स्रवदौधसं पयः ॥ २३७ ॥

गोगोपीनां मातृतास्मिन्सर्वा स्नेहर्धिकां विना।
पुरोवदास्वपि हरेस्तोकता मायया विना ॥ २३८ ॥

व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहम्।
शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत् ॥ २३९ ॥

इत्थमात्मात्मनात्मानं वत्सपालमिषेण सः।
पालयन्वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः ॥ २४० ॥

एकदा चारयन्वत्सान्सरामो वनमाविशत्।
पञ्चषासु त्रियामासु हायनापूरणीष्वजः ॥ २४१ ॥

ततोऽविदूराच्चरतो गावो वत्सानुपव्रजम्।
गोवर्धनाद्रिशिरसि चरन्त्यो ददृशुस्तृणम् ॥ २४२ ॥

दृष्ट्वाथ तत्स्नेहवशोऽस्मृतात्मा
स गोव्रजोऽत्यात्मपदुर्गमार्गः।
द्विपात्ककुद्ग्रीव उदास्यपुच्छोऽ-
गाद्धुंकृतैरास्नुपया जवेन ॥ २४३ ॥

[ भाग० १०. १३. १८–३० ]

केचित्पुष्पैर्दलैः केचित्पल्लवैरङ्कुरैः फलैः ।
शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥ २२३ ॥

सर्वे मिथो दर्शयन्तः स्वस्वभोज्यरुचिं पृथक् ।
हसन्तो हासयन्तश्चाभ्यवजह्रुः सहेश्वराः ॥ २२४ ॥

बिभ्रद्वेणुं जठरपटयोः शृङ्गवेत्रे च कक्षे
वामे पाणौ मसृणकवलं तत्फलान्यङ्गुलीषु ।
तिष्ठन्मध्ये स्वपरिसुहृदो हासयन्नर्मभिः स्वैः
स्वर्गे लोके मिषति बुभुजे यज्ञभुग्बालकेलिः ॥ २२५ ॥

भारतैवं वत्सपेषु भुञ्जानेष्वच्युतात्मसु ।
वत्सास्त्वन्तर्वने दूरं विविशुस्तृणलोभिताः ॥ २२६ ॥

तान्दृष्ट्वा भयसंत्रस्तानूचे कृष्णोऽस्य भीभयम् ।
मित्राण्याशान्मा विरमतेहानेष्ये वत्सकानहम् ॥ २२७ ॥

इत्युक्त्वाद्रिदरीकुञ्जगह्वरेष्वात्मवत्सकान् ।
विचिन्वन्भगवान्कृष्णः सपाणिकवलो ययौ ॥ २२८ ॥

अम्भोजन्मजनिस्तदन्तरगतो मायार्भकस्येशितु-
र्द्रष्टुं मञ्जु महित्वमन्यदपि तद्वत्सानितो वत्सपान् ।
नीत्वान्यत्र कुरूद्वहान्तरदधात्खेऽवस्थितो यः पुरा
दृष्ट्वाघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयम् ॥ २२९ ॥

ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान् ।
उभावपि वने कृष्णो विचिकाय समन्ततः ॥ २३० ॥

[ भाग० १० १३ ३–१६ ]

ततः कृष्णो मुदं कर्तुं तन्मातॄणां च कस्य च ।
उभयायितमात्मानं चक्रे विश्वकृदीश्वरः ॥ २३१ ॥

यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकं
यावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषाम्बरम् ।
यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं
सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ ॥ २३२ ॥

स्वयमात्मात्मगोवत्सान्प्रतिवार्यात्मवत्सपैः ।
क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद् व्रजम् ॥ २३३ ॥

नृत्यन्त्यमी शिखिन ईड्यमुदाहरिण्यः
कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन ।
सूक्तैश्च कोकिलगणा गृहमागताय
धन्या वनौकस इयान्हि सतां निसर्गः ॥ २५१ ॥

धन्येयमद्य धरणी तृणवीरुधस्त्व-
त्पादस्पृशो द्रुमलताः करजाभिमृष्टाः ।
नद्योऽद्रयः खगमृगाः सदयावलोकै-
र्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥ २५२ ॥

श्रीशुक उवाच ।

एवं वृन्दावनं श्रीमत्प्रीतः प्रीतमनाः पशून् ।
रेमे संचारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥ २५३ ॥

क्वचिद्गायति गायत्सु मदान्धालिष्वनुव्रतः ।
उपगीयमानचरितः स्रग्वी संकर्षणान्वितः ॥ २५४ ॥

क्वचिच्च कलहंसानामनुकूजति कूजितम् ।
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन्क्वचित् ॥ २५५ ॥

मेघगम्भीरया वाचा नामभिर्दूरगान्पशून् ।
क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ २५६ ॥

चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः ॥
अनुरौति स्म सत्त्वानां भीतवत्सिंहव्याघ्रयोः ॥ २५७ ॥

क्वचित्क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम् ।
स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः ॥ २५८ ॥

नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः ।
गृहीतहस्तौ गोपालान्हसन्तौ प्रशशंसतुः ॥ २५९ ॥

क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः ।
वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः ॥ २६० ॥

[ भाग० १०. १५. १–१६ ]

---

254b T अनुव्रतैः for अनुव्रत- 257 d T व्याघ्रसिंहयोः for सिंहव्याघ्रयोः.
260 After this stanza there seems to be lacuna in A.

अथ सूची ॥

गवां लीलां दृष्ट्वा सरसिजजनुस्तानपि शिशू-
न्पुरोऽवेक्ष्य स्वैरं मनसि विमृशन्विस्मितमनाः ।
पुरो गत्वा कृत्वा करकमलयोरञ्जलिपुटं
स्तुतिं चक्रे विष्णोरतुलमहसः कैतवशिशोः ॥ २४४ ॥

श्रीभागवते ॥ श्रीशुक उवाच ।

ततश्च पौगण्डवयः श्रितौ व्रजे
बभूवतुस्तौ पशुपालसंमतौ ।
गाश्चारयन्तौ सखिभिः समं पदै-
र्वृन्दावनं पुण्यमतीव चक्रतुः ॥ २४५ ॥

तन्माधवो वेणुमुदीरयन्वृतो
गोपैर्गृणद्भिः स्वयशो बलान्वितः ।
पशून्पुरस्कृत्य पशव्यमाविश-
द्विहर्तुकामः कुसुमाकरं वनम् ॥ २४६ ॥

तन्मञ्जुघोषालिमृगद्विजाकुलं
महन्मनःप्रख्यपयःसरस्वता ।
वातेन जुष्टं शतपत्रगन्धिना
निरीक्ष्य रन्तुं भगवान्मनो दधे ॥ २४७ ॥

स तत्र तत्रारुणपल्लवश्रिया
फलप्रसूनोरुभरेण पादयोः ।
स्पृशच्छिखान्वीक्ष्य वनस्पतीन्मुदा
स्मयन्निवाहाग्रजमादिपूरुषः ॥ २४८ ॥

श्रीभगवानुवाच ।

अहो अमी देववरामरार्चितं
पादाम्बुजं ते सुमनःफलार्हणम् ।
नमन्त्युपादाय शिखाभिरात्मन-
स्तमोपहत्यै तरुजन्म यत्कृतम् ॥ २४९ ॥

एतेऽलिनस्तव यशोऽखिललोकतीर्थं
गायन्त आदिपुरुषानुपदं भजन्ति ।
प्रायो अमी मुनिगणा भवदीयमुख्या
गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥ २५० ॥

---

250 b A °ज्रुष्टं for °गूढं

नृत्यन्त्यमी शिखिन ईड्यमुदाहरिण्यः
कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन ।
सूक्तैश्च कोकिलगणा गृहमागताय
धन्या वनौकस इयान्हि सतां निसर्गः ॥ २५१ ॥

धन्येयमद्य धरणी तृणवीरुधस्त्व-
त्पादस्पृशो द्रुमलताः करजाभिमृष्टाः ।
नद्योऽद्रयः खगमृगाः सदयावलोकै-
र्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥ २५२ ॥

श्रीशुक उवाच ।

एवं वृन्दावनं श्रीमत्प्रीतः प्रीतमनाः पशून् ।
रेमे संचारयन्नद्रेः सरिद्रोधस्सु सानुगः ॥ २५३ ॥

क्वचिद्गायति गायत्सु मदान्धालिष्वनुव्रतः ।
उपगीयमानचरितः स्रग्वी संकर्षणान्वितः ॥ २५४ ॥

क्वचिच्च कलहंसानामनुकूजति कूजितम् ।
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन्क्वचित् ॥ २५५ ॥

मेघगम्भीरया वाचा नामभिर्दूरगान्पशून् ।
क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ॥ २५६ ॥

चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः ॥
अनुरौति स्म सत्त्वानां भीतवत्सिंहव्याघ्रयोः ॥ २५७ ॥

क्वचित्क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणम् ।
स्वयं विश्रमयत्यार्यं पादसंवाहनादिभिः ॥ २५८ ॥

नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः ।
गृहीतहस्तौ गोपालान्हसन्तौ प्रशशंसतुः ॥ २५९ ॥

क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः ।
वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः ॥ २६० ॥

[ भाग० १० १५ १–१६ ]

---

254*b* T अनुव्रते for अनुव्रत   257 *d* T व्याघ्रसिंहयो for सिंहव्याघ्रयो
260 After this stanza there seems to be lacuna in A

तं नागभोगपरिवीतमदृष्टचेष्ट-
मालोक्य तत्प्रियसखाः पशुपा भृशार्ताः ।
कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामाः
दुःखानुशोकभयमूढधियो निपेतुः ॥ २६१ ॥

गावो वृषा वत्सतर्यः क्रन्दमानाः सुदुःखिताः ।
कृष्णे न्यस्तेक्षणा भीता रुदन्त्य इव तस्थिरे ॥ २६२ ॥

अथ व्रजे महोत्पाता त्रिविधा अतिदारुणाः ।
उत्पेतुर्भुवि दिव्यात्मन्यासन्नभयशंसिनः ॥ २६३ ॥

तानालक्ष्य महोत्पातान्गोपा नन्दपुरोगमाः ।
विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम् ॥ २६४ ॥

तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः ।
तत्प्राणास्तन्मनस्कास्ते दुःखशोकभयातुराः ॥ २६५ ॥

आबालवृद्धवनिताः सर्वेऽङ्ग पशुवृत्तयः ।
निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः ॥ २६६ ॥

तांस्तथा कातरान्वीक्ष्य भगवान्माधवो बलः ।
प्रहस्य किंचिन्नोवाच प्रभावज्ञोऽनुजस्य सः ॥ २६७ ॥

तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः ।
भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटम् ॥ २६८ ॥

ते तत्र तत्राब्जयवाङ्कुशाशनि-
ध्वजोपपन्नानि पदानि विश्पतेः ।
मार्गे गवामन्यपदान्तरान्तरे
निरीक्षमाणा ययुरङ्ग सत्वराः ॥ २६९ ॥

अन्तर्ह्रदे भुजगभोगपरीतमारा-
त्कृष्णं निरीहमुपलभ्य जलाशयान्ते ।
गोपांश्च मूढधिषणान्परितः पशूंश्च
संक्रन्दतः परमकश्मलमापुरार्ताः ॥ २७० ॥

गोप्योऽनुरक्तमनसो भगवत्यनन्ते
तत्सौहृदस्मितविलोकगिरः स्मरन्त्यः ।
ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ता
शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम् ॥ २७१ ॥

---

264 a T महोत्पाता for महोत्पातान् 271 b T स्मरन्त्य for स्मयन्त्य..

ताः कृष्णमातरमपत्यमनुप्रविष्टां
तुल्यव्यथाः समनुगृह्य शुचः स्रवन्त्यः ।
तास्ताः प्रियव्रजकथाः कथयन्त्य आसन्
कृष्णाननेऽर्पितदृशो मृतकप्रतीकाः ॥ २७२ ॥

कृष्णप्राणान्निर्विशतो नन्दादीन्वीक्ष्य तं ह्रदम् ।
प्रत्यषेधत्स भगवान्रामः कृष्णानुभाववित् ॥ २७३ ॥

इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य
सस्त्रीकुमारमतिदुःखितमात्महेतोः ।
आज्ञाय मर्त्यपदवीमनुवर्तमानः
स्थित्वा मुहूर्तमुदतिष्ठदुरंगबन्धात् ॥ २७४ ॥
[ भाग. १०.१६.१०—२१ ]

अथ सूची ॥

दृष्ट्वा स्वीयान्मुषितमनसो रोदनोच्छूननेत्रा-
नार्तत्राता मुरारिः शिरसि फणिपतेर्विश्वमूर्त्या ननर्त ।
निष्क्रामन्नेत्रतिर्यग्गुरुगरलदलन्मौलिरीशस्य भारा-
द्विश्वेषामीशितारं हरिमथ शरणं कालियस्तं जगाम ॥ २७५ ॥

आलोक्य कृष्णगुरुताण्डवपीडिताङ्गं
कान्तं कृताञ्जलिपुटा बहुशः प्रणम्य ।
दण्डानुमोदनपुरःसरमस्य पत्न्यः
संतुष्टुवुः करुणगद्गदमुद्गिरन्त्यः ॥ २७६ ॥

तासां वचांसि करुणानि निशम्य कृष्णो
विज्ञापितश्च नमता किल कालियेन ।
दीने दयानिधिरमुं कृपया विमुच्य
लीलाह्रदं मम जहीहि तमित्युवाच ॥ २७७ ॥

तत्पादलाञ्छितशिरा गरुडादभीतः
पूजां विधाय पदयोः पुरुषोत्तमस्य ।
आनन्दतुन्दिलमना भुजगाधिराजो
द्वीपं हृदाज्जलनिधेः सगणो जगाम ॥ २७८ ॥

श्रीभागवते ॥

कृष्णं ह्रदाद्विनिष्क्रान्तं दिव्यस्रग्गन्धवाससम् ।
महामणिगणाकीर्णं जाम्बूनदपरिष्कृतम् ॥ २७९ ॥

उपलभ्योत्थिताः सर्वे लब्धप्राणा इवासवः ।
प्रमोदनिभृतात्मानो गोपाः प्रीत्याभिरेमिरे ॥ २८० ॥

यशोदा रोहिणी नन्दो गोप्यो गोपाश्च कौरव ।
कृष्णं समेत्य लब्धेहा आसंल्लब्धमनोरथाः ॥ २८१ ॥

रामश्चाच्युतमालिङ्ग्य जहासास्यानुभाववित् ।
नगा गावो वृषा वत्सा लेभिरे परमां मुदम् ॥ २८२ ॥

नन्दं विप्राः समागम्य गुरवः सकलत्रकाः ।
ऊचुस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः ॥ २८३ ॥

विप्रा ऊचुः ।

देहि दानं द्विजातीनां कृष्णनिर्मुक्तिहेतवे ।
नन्दः प्रीतमना राजन्गाः सुवर्णं तदादिशत् ॥ २८४ ॥

यशोदा च महाभागा नष्टलब्धप्रजा सती ।
परिष्वज्याङ्कमारोप्य मुमोचाश्रुकलां मुहुः ॥ २८५ ॥

तां रात्रिं तत्र राजेन्द्र क्षुत्तृड्भ्यां श्रमकर्शिताः ।
ऊषुर्व्रजौकसो गावः कालिन्द्या उपकूलतः ॥ २८६ ॥

तदाशु विपिनोद्भूतो दावाग्निः सर्वतो व्रजम् ।
सुप्तं निशीथ आवृत्य प्रदग्धुमुपचक्रमे ॥ २८७ ॥

तत उत्थाय संभ्रान्ता दह्यमाना व्रजौकसः ।
कृष्णं ययुस्ते शरणं मायामानुषमीश्वरम् ॥ २८८ ॥

कृष्ण कृष्ण महाभाग हे रामातुलविक्रम ।
एष घोरतमो वह्निस्तावकान्ग्रसते हि नः ॥ २८९ ॥

सुदुस्तरान्नः स्वान्पाहि कालाग्नेः सुहृदः प्रभो ।
न शक्नुमस्त्वच्चरणं संत्यक्तुमकुतोभयम् ॥ २९० ॥

इत्थं स्वजनवैक्लव्यं निरीक्ष्य जगदीश्वरः ।
तमग्निमपिबत्तीव्रमनन्तोऽनन्तशक्तिधृक् ॥ २९१ ॥

[ भाग० १० १७ १३–२० ]

287*a* T तदा शुचिवनोद्भूतो 288*a* T मायामनुजमीश्वर, T notes v. l. मायामानुषमीश्वरं 289*b* T हे रामामितविक्रम 290*a* T सुदुस्तरान् for सुदुस्तरान्नः

[ विमोह्यानहिदण्डेन ततः स्वं शरणं गतान् ।
गोपानपादनन्तोऽसावनन्तवनवह्नितः ॥ २९२ ॥ ]

अथ सूची ॥

ग्रीष्मे वसन्तसदृशो गुणगौरवेण
रामेण साकमरविन्दमुखो मुकुन्दः ।
वृन्दावने कुसुमसौरभलुब्धभृङ्गे
गायन्सुखेन शिशुभिर्मुदितो ननर्त ॥ २९३ ॥

कुर्वन्तौ रामकृष्णावतिरुचिररुची बाहुयुद्धादिलीलाः
सार्कं गोपालबालैः क्वचिदुपहसितैः प्रीतिमुत्पादयन्तौ ।
नद्यद्रिद्रोणिकुञ्जेष्वनुविपिनमतश्चारयन्तौ च धेनू-
र्दृष्ट्वा भाण्डीरकाख्यं घटविटपितरं जग्मतुः कौतुकेन ॥ २९४ ॥

तत्रासन्केऽपि वाह्याः प्रमुदितमनसो वाहकाः केऽपि बाला
लीलामेतां च चक्रुः शिशुषु परिवृतौ रामकृष्णौ विधाय ।
तत्रायातः प्रलम्बः प्रबलभुजयुगो गोपबालानुकारी
कृत्वा पृष्ठे स रामं शिशुभिरविदितो हन्त दूरं निनाय ॥ २९५ ॥

कृत्वा घोरं शरीरं निजमति रिपुणा नीयमानोऽथ रामः
स्मृत्वा स्वं विश्वमूर्तिः शिरसि दितिसुतं गाढमुष्ट्या जघान ।
दृष्ट्वा तं रौद्ररूपं सपदि निपतितं विस्मिता गोपबाला-
श्चक्रुः श्रीराममूर्ध्न्यतिमुदितहृदः पुष्पवर्षाणि देवाः ॥ २९६ ॥

मुञ्जाटव्यामुपेताः सपदि नवतृणास्वादलोभेन गावो
बालास्तल्लाभलोला अतिमुदितहृदो गाः समाहूय कृष्णः ।
भूयः प्रादुर्भवन्तं विषमवनभुवि प्राणिनामन्तकं तं
दावाग्निं दीनबन्धुः स्वयमपिबदसौ श्रेयसे वः सदास्तु ॥ २९७ ॥

श्रीभागवते ॥

ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमाश्रिताः ।
निशाम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः ॥ २९८ ॥

कृष्णस्य योगवीर्यं च योगमायानुभावितम् ।
दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम् ॥ २९९ ॥

---

292 Found in श्रीधरी टीका  399*a* T तद् for च
२९

गाः संनिवर्त्य सायाह्ने सहरामो जनार्दनः ।
वेणुं विरणयन्गोष्ठमगाद्गोपैरभिष्टुतः ॥ ३०० ॥
गोपीनां परमानन्द आसीद्गोविन्ददर्शने ।
क्षणं युगशतप्रायं यासां येन विनाभवत् ॥ ३०१ ॥
[ श्रीदामादिस्वगोपानां स्वाङ्कमारुह्य हृष्यताम् ।
स्वैश्वर्यमाविरकरोद्वनवह्निनिपानतः ॥ ३०२ ]
[ भाग० १० २०·१३–१६ ]

अथ सूची ॥

ततः प्रावृट्कालो जलदनिविडध्वानमधुरः
स्फुरद्विद्युद्वृन्दद्युतिभिरभितो दीप्तगगनः ।
चलत्केकारावः समजनि जनानन्दजनको
हरिर्वृन्दारण्ये विहरणविधौ प्रीतिमकरोत् ॥ ३०३ ॥

अथ च ।

घनाली निस्तोया वियति रुचिरां कान्तिमगम-
त्प्रसन्नं दिक्चक्रं सपदि सरितः स्वच्छसलिलाः ।
नभो नद्धं लक्ष्म्या परिणतरुचा सीत महसा
शरद्रूप्या हृष्टो हरिरवतु भव्यानि भवतः ॥ ३०४ ॥

श्रीभागवते ॥ श्रीशुक उवाच ।

इत्थं शरत्स्वच्छजलपद्माकरसुगन्धिना ।
न्यविशद्वायुना वातं सगोगोपालकोऽच्युतः ॥ ३०५ ॥

कुसुमितवनराजिशुष्मभृङ्ग
द्विजकुलघुष्टसरःसरिन्महीध्रम् ।
मधुपतिरवगाह्य चारयन्गाः
सहपशुपालबलश्चुकूज वेणुम् ॥ ३०६ ॥

तद्व्रजस्त्रिय आश्रुत्य वेणुगीतं स्मरोदयम् ।
काश्चित्परोक्षं कृष्णस्य स्वसखीभ्योऽन्ववर्णयन् ॥ ३०७ ॥
तद्वर्णयितुमारब्धाः स्मरन्त्यः कृष्णचेष्टितम् ।
नाशकन्स्मरवेगेन विक्षिप्तमनसो नृप ॥ ३०८ ॥

---

301c T युगशतमिव for युगशतप्रायं, stanza in [ ] from श्रीधरी टीका

बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं
बिभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम् ।
रन्ध्रान्वेणोरधरसुधया पूरयन्गोपवृन्दै-
र्वृन्दारण्यं स्वपदरमणं प्राविशद्गीतकीर्तिः ॥ ३०९ ॥

इति वेणुरवं राजन्सर्वभूतमनोहरम् ।
श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेमिरे ॥ ३१० ॥

गोप्य ऊचुः ।

अक्षण्वतां फलमिदं न परं विदामः
सख्यः पशूननुविवेशयतोर्वयस्यैः ।
वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं
यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ॥ ३११ ॥

अन्या ऊचुः ।

चूतप्रवालबर्हस्तबकोत्पलाब्ज-
मालानुरक्तपरिधानविचित्रवेषौ ।
मध्ये विरेजतुरलं पशुपालगोष्ठ्यां
रङ्गे यथा नटवरौ क्व च गायमानौ ॥ ३१२ ॥

अन्या ऊचुः ।

गोप्यः किमाचरदयं कुशलं स्म वेणु-
र्दामोदराधरसुधामपि गोपिकानाम् ।
भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो
हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथार्याः ॥ ३१३ ॥

वृन्दावनं सखि भुवो वितनोति कीर्तिं
यद्देवकीसुतपदाम्बुजलब्धलक्ष्मि ।
गोविन्दवेणुमनु मत्तमयूरनृत्यं
प्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्त्वम् ॥ ३१४ ॥

अपरा ऊचुः ।

धन्याः स्म मूढमतयोऽपि हरिण्य एता
या नन्दनन्दनमुपात्तविचित्रवेषम् ।
आकर्ण्य वेणुरणितं सहकृष्णसाराः
पूजां दधुर्विरचितां प्रणयावलोकैः ॥ ३१५ ॥

---

312 T om. अन्या ऊचुः, अपरा ऊचुः etc in the following stanzas.

मन्या ऊचुः ।

कृष्णं निरीक्ष्य वनितोत्सवरूपशीलं
श्रुत्वा च तत्क्वणितवेणुविविक्तगीतम् ।
देव्यो विमानगतयः स्मरनुन्नसारा
भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः ॥ ३१६ ॥

गावश्च कृष्णमुखनिर्गतवेणुगीत-
पीयूषमुत्तमितकर्णपुटैः पिबन्त्यः ।
वत्साः स्नुतस्तनपयःकवलाः स्म तस्थु-
र्गोविन्दमात्मनि दृशाश्रुकलाः सृजन्त्यः ॥ ३१७ ॥

प्रायो बताम्ब विहगा मुनयो वनेऽस्मि-
न्कृष्णेक्षितं तदुदितं कलवेणुगीतम् ।
आरुह्य ये द्रुमभुजान्रुचिरप्रवाला-
ञ्शृण्वन्ति मीलितदृशो विगतान्यवाचः ॥ ३१८ ॥

नद्यस्तदा तदुपधार्य मुकुन्दगीत-
मावर्तलक्षितमनोभवभग्नवेगाः ।
आलिङ्गनस्थगितभूमिभुजैर्मुरारे-
र्गृह्णन्ति पादयुगलं कमलोपहारैः ॥ ३१९ ॥

दृष्ट्वातपे व्रजपशून्सह रामगोपैः
संचारयन्तमनु वेणुमुदीरयन्तम् ।
प्रेमप्रवृद्धमुदितः कुसुमावलीभिः
सख्युर्व्यधात्स्ववपुषाम्बुद आतपत्रम् ॥ ३२० ॥

पूर्णाः पुलिन्द्य उरुगायपदाब्जराग-
श्रीकुङ्कुमेन दयितास्तनमण्डितेन ।
तद्दर्शनस्मररुजस्तृणरूषितेन
लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ॥ ३२१ ॥

---

316*a* T °रूपवेष for °रूपशील *b* T विचित्रगीत for विविक्तगीत 317*b* T उत्तभित° for उत्तमित. *c* T शावा for वत्सा *d* T स्पृशन्त्य for सृजन्त्य 319*d* T कमलोपहारा for °पहारैः 320 *c* T उदित for मुदित, T notes v. l. इषित

अन्या ऊचुः।

हन्तायमद्रिरबला हरिदासवर्यो
यद्रामकृष्णचरणस्पर्शप्रमोदः।
मानं तनोति सहगोगणयोस्तयोर्य-
त्पानीयसूयवसकन्दरकन्दमूलैः ॥ ३२२ ॥

गा गोपकैरनुवनं नयतोरुदार-
वेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः।
अस्पन्दनं गतिमतां पुलकस्तरूणां
निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥ ३२३ ॥

एवंविधा भगवतो या वृन्दावनचारिणः।
वर्णयन्त्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥ ३२४ ॥

[ भाग० १० २१.१–२० ]

[ गोपीनां कामतः कृष्णे निस्सीमः प्रेमसंगमः।
कात्यायन्यर्चनोद्भूततत्प्रसादमहोदय. ॥ ३२५ ॥ ]

अथ सूची ॥

कृष्णः स्यात्पतिरित्यभीप्सितफलाश्चेदर्थतं कन्यका
हेमन्ते हरिणायतेक्षणरुचः पूजोपहारादिभिः।
कालिन्द्याः पयसि प्रविश्य रहसि स्नातासु तासु प्रियं
सद्यः कर्तुमना जहार भगवान्वासांसि कौतूहली ॥ ३२६ ॥

लज्जालोलदृशो निशाम्य सुहृदो वासोपहारं हठा-
दाकण्ठं पयसि स्थिता हरिमथो दृष्ट्वा कदम्योपरि।
प्रोचुः प्राञ्जलयः प्रदेहि भगवन्वासांसि दास्यो वयं
भ्रूमश्चेत्पुरतो नृपाय महते कंसाय किं स्यात्ततः ॥ ३२७ ॥

यद्वा मूर्ध्नि कराम्बुजाञ्जलिपुटं नत्वाच्युतं सादरा-
स्त्वागत्य समाददीत वसनानीत्याह हृष्टो हरिः।
नास्तस्मिन्प्रणयेन मग्नमनसश्चक्रुर्यदस्य प्रियं
तुष्टस्तासु सहाध्वरेण ( ? ) भगवान्प्रादादभीष्टं वरम् ॥ ३२८ ॥

श्रीभागवते ॥ श्रीशुक उवाच।

इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः।
ध्यायन्त्यस्तत्पदाम्भोजं कृच्छ्रान्निर्विविशुर्व्रजम् ॥ ३२९ ॥

---

325 Found in धीपर्ण पैरा

अथ गोपैः परिवृतो भगवान्देवकीसुतः ।
वृन्दावनाद्गतो दूरं चारयन्गाः सहाग्रजः ॥ ३३० ॥
निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः ।
आतपत्रायितान्वीक्ष्य द्रुमानाह व्रजौकसः ॥ ३३१ ॥
हे स्तोक कृष्ण हे अंशो श्रीदामन्सुबलार्जुन ।
विशालवृषभौजस्विन्देवप्रस्थवरूथप ॥ ३३२ ॥
[ भाग० १० ... ८–३१ ]

[ भक्त्यानुकम्प्य कन्यास्तास्तद्विवर्जितयज्वनाम् ।
पत्न्यनुग्रहतस्तेषामहन्कर्ममहामदम् ॥ ३३३ ॥ ]
पश्यतैतान्महाभागान्परार्थैकान्तजीवितान् ।
वातवर्षातपहिमान्सहन्तो वारयन्ति नः ॥ ३३४ ॥
अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् ।
सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः ॥ ३३५ ॥
पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ।
गन्धनिर्यासभस्मास्थितोक्मैः कामान्वितन्वते ॥ ३३६ ॥
एतावज्जन्मसाफल्यं देहिनामिह देहिषु ।
प्राणैरर्थैर्धिया वाचा श्रेयआचरणं सदा ॥ ३३७ ॥
इति प्रवालस्तबकफलपुष्पदलोत्करैः ।
तरूणां नम्रशाखानां मध्येन यमुनां गतः ॥ ३३८ ॥
तत्र गाः पाययित्वापः सुमृष्टाः शीतलाः शिवाः ।
ततो नृप स्वयं गोपाः कामं स्वादु पपुर्जलम् ॥ ३३९ ॥
तस्या उपवने कामं चारयन्तः पशून्नृप ।
कृष्णरामावुपागम्य क्षुधार्ता इदमब्रुवन् ॥ ३४० ॥
[ भाग० १० २२ ३२–३८ ]

अथ सूची ॥

क्षुत्पीडालोलबालव्रजसदसि सुपक्वासिद्धैतोर्द्विजेभ्यो
याचित्वा भोज्यमिष्टं प्रतिहतमतिभिस्तैरदत्तेऽपि भूयः ।
तेषां स्त्रीभिर्मुकुन्दस्फुरदमलपदाम्भोजभक्त्यान्तराभि-
र्दत्तान्यन्नानि भुक्त्वा प्रमुदितहृदयो जग्मतुः ग्राम्यमाक्षीत् ॥ ३४१ ॥

---

332c T विशालर्षभ तेजस्विन् 333 Found in श्रीधरी टीका 336d तोक्म means यवाद्यङ्कुर 337d T श्रेय एवाचरेत्सदा

निन्दां कृत्वा मघोनो मखविहतिकृति श्रीहरौ मानहान-
क्रुद्धो देवाधिराजः सपदि जलधरानादरादादिदेश ।
कोपाद्वर्षत्सु तेषु प्रसभमधिगवां वृन्दमुद्दामगर्ज-
त्पर्जन्यत्रासलोलाः शरणमथ हरेर्गोपगोप्यः समीयुः ॥ ३४२ ॥

तेषामालोक्य पीडाममरपतिकृतामिन्द्रगर्वं जिघांसु-
र्भक्तानामार्तिहर्ता हरिरमितगुणः पाणिना कौतुकेन ।
धृत्वा गोवर्धनाद्रिं स्मिततुभगमुखं दुःखमेषामहार्षीद्
दृष्ट्वा तत्कर्म विष्णोर्गलितगुरुमदः सद्म शक्रो जगाम ॥ ३४३ ॥

श्रीभागवते ॥

कृष्णयोगानुभावं तं निशम्येन्द्रोऽतिविस्मितः ।
निःस्तम्भो भ्रष्टसंकल्पः स्वान्मेघान्संन्यवारयत् ॥ ३४४ ॥

खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम् ।
निशम्योपरतं गोपान्गोवर्धनधरोऽब्रवीत् ॥ ३४५ ॥

निर्यात त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः ।
उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः ॥ ३४६ ॥

[ श्रीशुक उवाच । ]

ततस्ते निर्ययुर्गोपाः स्वं स्वमादाय गोधनम् ।
शकटाढ्योपकरणं स्त्रीबालस्थविराः शनैः ॥ ३४७ ॥

भगवानपि तं शैलं स्वस्थाने पूर्ववत्प्रभुः ।
पश्यतां सर्वदेवानां स्थापयामास लीलया ॥ ३४८ ॥

तं प्रेमवेगान्निभृता व्रजौकसो
यथा समीयुः परिरम्भणादिभिः ।
गोप्यस्तु सस्नेहमपूजयन्मुदा
दध्यक्षताद्भिर्युयुजुः सदाशिषः ॥ ३४९ ॥

यशोदा रोहिणी नन्दो रामश्च बलिनां वरः ।
कृष्णमालिङ्ग्य युयुजुराशिषः स्नेहकातराः ॥ ३५० ॥

दिवि देवगणाः साध्याः सिद्धगन्धर्वचारणाः ।
तुष्टुवुर्मुमुचुस्तुष्टाः पुष्पवर्षाणि पार्थिव ॥ ३५१ ॥

345c T निशाम्य for निशम्य. 347c T शकटोढोपकरणं for शकटाढ्यो°; T notes our reading as v. l.; d T बाल्मी° for स्त्रीबाल°.

शङ्खदुन्दुभयो नेदुर्दिवि देवप्रचोदिताः ।
जगुर्गन्धर्वपतयस्तुम्बुरुप्रमुखा नृप ॥ ३५२ ॥

ततोऽनुरक्तैः पशुपैः परिश्रितो
राजन्स्वगोष्ठं सबलोऽविशद्धरिः ।
तथाविधान्यस्य कृतानि गोपिका
गायन्त्य ईयुर्मुदिता हृदिस्पृशः ॥ ३५३ ॥

[ भाग० १०.२५.२८–३३ ]

अथ सूत्री ॥

श्रीमत्कृष्णपदारविन्दसाविधं प्राप्तोऽमराधीश्वरः
संतोषात्सुरभिश्च यादवपतेः स्तोत्रं मुदा चक्रतुः ।
सद्यः स्मेरसरोरुहाननरुचिः प्रोत्फुल्लनेत्राम्बुजः
प्रीतः प्राह पुरंदराय भगवानम्भोदगुर्वी गिरम् ॥ ३५४ ॥

श्रीभागवते ॥ श्रीभगवानुवाच ।

मया तेऽकारि मघवन्मखभङ्गोऽनुगृह्णता ।
मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम् ॥ ३५५ ॥

मामैश्वर्यश्रीमदान्धो दण्डपाणिं न पश्यति ।
तं भ्रंशयामि संपद्भ्यो यस्य चेच्छाम्यनुग्रहम् ॥ ३५६ ॥

गम्यतां शक्र भद्रं वः क्रियतामनुशासनम् ।
स्थीयतां स्वाधिकारेषु युक्तैर्वः स्तम्भवर्जितैः ॥ ३५७ ॥

[ श्रीशुक उवाच । ]

अथाह सुरभिः कृष्णमभिवाद्य मनस्विनी ।
स्वसंतानैरुपामन्त्र्य गोपरूपिणमीश्वरम् ॥ ३५८ ॥

सुरभिरुवाच ।

कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वभावन ।
भवता लोकनाथेन सनाथा वयमच्युत ॥ ३५९ ॥

त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते ।
भवाय भव गोविप्रदेवानां ये च साधवः ॥ ३६० ॥

[ भाग० १० २७ १५–२० ]

---

353*b* T अभजत् for अविशत्.    357*b* T क्रियतां मेनुशासन.

इन्द्रः सुरर्षिभिः सार्कं चोदितो देवमातृभिः ।
अभ्यषिञ्चत दाशार्हं गोविन्द इति चाभ्यधात् ॥ ३६१ ॥

तत्रागतास्तुम्बुरुनारदादयो
गन्धर्वविद्याधरसिद्धचारणाः ।
जगुर्यशो लोकमलापहं हरेः
सुराङ्गनाः संननृतुर्मुदान्विताः ॥ ३६२ ॥

ते तुष्टुवुर्देवनिकायकेतवो
व्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः ।
लोकाः परां प्रीतिमवाप्नुवंस्त्रयो
गावस्तदा गामनयन्पयोद्रुताम् ॥ ३६३ ॥

नानारसौघाः सरितो वृक्षा आसन्मधुस्रवाः ।
अकृष्टपच्यौषधयो गिरयो ब्यभ्रजन्मणीन् ॥ ३६४ ॥

कृष्णेऽभिषिक्त एतानि सर्वाणि कुरुनन्दन ।
निर्वैराण्यभवंस्तात क्रूराण्यपि निसर्गतः ॥ ३६५ ॥

इति गोगोकुलपतिं गोविन्दमभिषिच्य सः ।
अनुज्ञातो ययौ शक्रो वृतो देवादिभिर्दिवम् ॥ ३६६ ॥

[ भाग० १० २७ २३–२८ ]

अथ सूची ॥

द्वादश्यां जलमाविवेश विधिवत्स्नानाय नन्दो निशि
प्राप्तं पार्श्वमनु विलोक्य वरुणः कोपाद् गृहीत्वानयत् ।
भक्तानामनुकम्पयाथ भगवान्गत्वा तदभ्यन्तिकं
नीत्वा स्वं पितरं ततश्च वरुणो नागान्मुदं दर्शयन् ॥ ३६७ ॥

नन्दादुपश्रुत्य समस्तमेत-
त्स्वेभ्यः परं विस्मितमानसेभ्यः ।
स्वं धाम संदर्शितवान्दयालु-
र्ध्यानैरगम्यं मुनिभिः पुराणैः ॥ ३६८ ॥

---

361*b* T नोदितो for चोदितो　363*a* T त for ते　*d* T पयोद्रुतां for पयोद्रुतां　364*c* A आकृष्य° for अकृष्ट°, *d* T गिरयोऽभिप्रद्युम्नणीन्.　365*b* T सत्त्वानि for सर्वाणि

श्रीभागवते ॥

ते तु ब्रह्महदं नीता मग्नाः कृष्णेन चोद्धृताः ।
ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात्पुरा ॥ ३६९ ॥

[ भाग० १०.२८.१६ ]

अथ रासक्रीडा ॥ तत्र श्रीभागवते ॥

श्रीशुक उवाच ।

भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः ।
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥ ३७० ॥

तदोडुराजः ककुभः करैर्मुखं
प्राच्या विलिम्पन्नरुणेन शंतमैः ।
स चर्षणीनामुदगाच्छुचो मृजन्-
प्रियः प्रियाया इव दीर्घदर्शनः ॥ ३७१ ॥

दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं
रमाननाभं नवकुङ्कुमारुणम् ।
वनं च तत्कोमलगोभिरञ्जितं
जगौ कलं वामदृशां मनोहरम् ॥ ३७२ ॥

निशम्य गीतं तदनङ्गवर्धनं
व्रजस्त्रियः कृष्णगृहीतमानसाः ।
आजग्मुरन्योन्यमलक्षितोद्यमाः
स यत्र कान्तो जवलोलकुण्डलाः ॥ ३७३ ॥

दुहन्त्योऽभिययुः काश्चिद्दोहं हित्वा समुत्सुकाः ।
पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः ॥ ३७४ ॥

परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून्पय ।
शुश्रूषन्त्यः पतीन्काश्चिदश्नन्त्योऽपास्य भोजनम् ॥ ३७५ ॥

लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने ।
व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णान्तिकं ययुः ॥ ३७६ ॥

ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः।
गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः ॥ ३७७ ॥

अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः ।
कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥ ३७८ ॥

दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्याक्षीणमङ्गलाः ॥ ३७९ ॥

तमेव परमात्मानं जारबुद्ध्यापि संगताः ।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥ ३८० ॥

राजोवाच ।

कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने ।
गुणप्रवाहोपरमस्तासां गुणधियां कथम् ॥ ३८१ ॥

श्रीशुक उवाच ।

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ ३८२ ॥

नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ ३८३ ॥

कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ ३८४ ॥

न चैवं विस्मयः कार्यो भवता भगवत्यजे ।
कृष्णे योगेश्वरेऽनन्ते यत एतद्विमुच्यते ॥ ३८५ ॥

ता दृष्ट्वान्तिकमायाता भगवान्व्रजयोषितः ।
अवदद्वदतां श्रेष्ठो वाचः पेशैर्विमोहयन् ॥ ३८६ ॥

श्रीभगवानुवाच ।

स्वागतं वो महाभागा ब्रूत किं करवाणि वः ।
व्रजस्यानामयं कच्चिद्ब्रूतागमनकारणम् ॥ ३८७ ॥

रजन्येषा घोररूपा घोरसत्त्वनिषेविता ।
प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः ॥ ३८८ ॥

मातरः पितरः पुत्रा भ्रातरः पतयश्च वः ।
विचिन्वन्ति ह्यपश्यन्तो मा कृढ्वं बन्धुसाध्वसम् ॥ ३८९ ॥

दृष्टं वनं कुसुमितं राकेशकररञ्जितम् ।
यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥ ३९० ॥

---

385c T योगयोगेश्वरे कृष्णे 386d T notes v. l. वाचः पाशैः 387b T प्रिय for ब्रूत

तद्यात माचिरं घोषं शुश्रूषध्वं पतीन्सतीः ।
क्रन्दन्ति वत्सा बालाश्च तान्पाययत दुह्यत ॥ ३९१ ॥

अथवा मदभिस्नेहाद्भवत्यो यन्त्रिताशयाः ।
आगता ह्युपपन्नं तत्प्रीयन्ते मम जन्तवः ॥ ३९२ ॥

भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ।
तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम् ॥ ३९३ ॥

दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।
पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥ ३९४ ॥

अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ।
जुगुप्सितं च सर्वत्र ह्यौपपत्यं कुलस्त्रियाः ॥ ३९५ ॥

श्रवणाद्दर्शनाद् ध्यानान्मयि भावोऽनुकीर्तनात् ।
[ न तथा संनिकर्षेण प्रतियात ततो गृहान् ॥ ३९६ ॥

श्रीशुक उवाच ।

इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् । ]
विषण्णा भग्नसंकल्पाश्चिन्तामापुर्दुरत्ययाम् ॥ ३९७ ॥

कृत्वा मुखान्यवशुचः श्वसनेन शुष्य-
द्बिम्बाधराणि चरणेन भुवं लिखन्त्यः ।
अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि
तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥ ३९८ ॥

प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं
कृष्णं तदर्थविनिवर्तितसर्वकामाः ।
नेत्रे विमृज्य रुदितोपहते स्म किंचि-
त्संरम्भगद्गदगिरोऽब्रुवतानुरक्ताः ॥ ३९९ ॥

गोप्य ऊचुः ।

मैवं विभोऽर्हति भवान्गदितुं नृशंसं
संत्यज्य सर्वविषयांस्तव पादमूलम् ।
भक्ता भजस्व दुरवग्रह मा त्यजास्मा-
न्देवो यथादिपुरुषो भजते मुमुक्षून् ॥ ४०० ॥

391*a* T गोष्ठ for घोषं  A om 396 *cd*–397 *ab*.  400*c* T भक्ता for भक्ता

यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग
स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
अस्त्वेवमेतदुपदेशपदे त्वयीशे
प्रेष्ठो भवांस्तनुभृतां ननु बन्धुरात्मा ॥ ४०१ ॥

कुर्वन्ति हि त्वयि रतिं कुशलाः स्वआत्म-
न्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ।
तन्नः प्रसीद वरदेश्वर मा स्म छैत्सी-
राशां धृतां त्वयि चिरादरविन्दनेत्र ॥ ४०२ ॥

चित्तं सुखेन भवतापहृतं गृहेषु
यन्निर्विशत्युत करावपि गेहकृत्ये ।
पादौ पदं न चलतस्तव पादमूला-
द्यामः कथं व्रजमथो करवाम किं वा ॥ ४०३ ॥

सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण
हासावलोककलगीतजहृच्छयाग्निम् ।
नो चेद्वयं विरहजाग्न्युपयुक्तदेहा
ध्यानेन याम पदयोः पदवीं सखे ते ॥ ४०४ ॥

यर्ह्यम्बुजाक्ष तव पादतलं रमाया
दत्तक्षणं क्वचिदरण्यजनप्रियस्य ।
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग
स्थातुं त्वयाभिरमिता वत पारयामः ॥ ४०५ ॥

श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या
लब्ध्वापि वक्षसि पदं किल भृत्यजुष्टम् ।
यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयास-
स्तद्वद्वयं च तव पादरजः प्रपन्नाः ॥ ४०६ ॥

तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं
प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ।
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम-
तप्तात्मनां पुरुषभूषण देहि दास्यम् ॥ ४०७ ॥

---

401*d* T किल for ननु    402*c* T छिन्या for छैत्सी    403*b* T गृहकृत्य for गेहकृत्ये.

तद्यात मा चिरं घोषं शुश्रूषध्वं पतीन्सतीः ।
क्रन्दन्ति वत्सा बालाश्च तान्पाययत दुह्यत ॥ ३९१ ॥

अथवा मदभिस्नेहाद्भवत्यो यन्त्रिताशयाः ।
आगता ह्युपपन्नं तत्प्रीयन्ते मम जन्तवः ॥ ३९२ ॥

भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ।
तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम् ॥ ३९३ ॥

दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।
पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥ ३९४ ॥

अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ।
जुगुप्सितं च सर्वत्र ह्यौपपत्यं कुलस्त्रियाः ॥ ३९५ ॥

श्रवणाद्दर्शनाद् ध्यानान्मयि भावोऽनुकीर्तनात् ।
[ न तथा संनिकर्षेण प्रतियात ततो गृहान् ॥ ३९६ ॥

श्रीशुक उवाच ।

इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् । ]
विषण्णा भग्नसंकल्पाश्चिन्तामापुर्दुरत्ययाम् ॥ ३९७ ॥

कृत्वा मुखान्यवशुचः श्वसनेन शुष्य-
द्बिम्बाधराणि चरणेन भुवं लिखन्त्यः ।
अस्रैरुपात्तमसिभिः कुचकुङ्कुमानि
तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥ ३९८ ॥

प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं
कृष्णं तदर्थविनिवर्तितसर्वकामाः ।
नेत्रे विमृज्य रुदितोपहते स्म किंचि-
त्संरम्भगद्गदगिरोऽब्रुवतानुरक्ताः ॥ ३९९ ॥

गोप्य ऊचुः ।

मैवं विभोऽर्हति भवान्गदितुं नृशंसं
संत्यज्य सर्वविषयांस्तव पादमूलम् ।
प्राप्ता भजस्व दुरवग्रह मा त्यजास्मा-
न्देवो यथादिपुरुषो भजते मुमुक्षून् ॥ ४०० ॥

---

391a T गेहं for घोषं   A om 396 cd–397 ab.   400c T भक्ता for प्राप्ता

तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ।
प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४१७ ॥

[ भाग० १०.२९.१–४८ ]

इति प्रथमः ॥

श्रीशुक उवाच ।

अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ।
अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ ४१८ ॥

गत्यानुरागस्मितविभ्रमेक्षितै–
र्मनोरमालापविहारचेष्टितैः ।
आक्षिप्तचित्ताः प्रमदा रमापते–
स्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥ ४१९ ॥

गतिस्मितप्रेक्षणभाषणादिषु
प्रियाः प्रियस्य प्रतिरूढमूर्तयः ।
असावहं त्वित्यबलास्तदात्मिका
न्यवेदिषुः कृष्णविहारविभ्रमाः ॥ ४२० ॥

गायन्त्य उच्चैरमुमेव संहता
विचिक्युरुन्मत्तकवद्वनाद्वनम् ।
पप्रच्छुराकाशवदन्तरं बहि–
र्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥ ४२१ ॥

दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः ।
नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥ ४२२ ॥

कच्चित्कुरबकाशोकनागपुन्नागचम्पकाः ।
रामानुजो मानिनीनां गतो दर्पहरस्मितः ॥ ४२३ ॥

कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये ।
सह त्वालिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ४२४ ॥

मालत्यदर्शि वः कच्चिन्मल्लिके जाति यूथिके ।
प्रीतिं वो जनयन्यातः करस्पर्शेन माधवः ॥ ४२५ ॥

---

423*d* T इतो for गतो

वीक्ष्यालकावृतमुखं तव कुण्डलश्रि
गण्डस्थलाधरसुधं हसितावलोकम् ।
दत्ताभयं च भुजदण्डयुगं विलोक्य
वक्षः श्रियैकरमणं च भवाम दास्यः ॥ ४०८ ॥

का स्त्र्यङ्ग ते कलपदामृतवेणुगीत-
संमोहितार्यचरितान्न चलेत्त्रिलोक्याम् ।
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं
यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥ ४०९ ॥

व्यक्तं भवान्व्रजजनार्तिहरोऽभिजातो
देवो यथादिपुरुषः सुरलोकगोप्ता ।
तन्नो निधेहि करपङ्कजमार्तबन्धो
तप्तस्तनेषु च शिरस्सु च किंकरीणाम् ॥ ४१० ॥

श्रीशुक उवाच ।

इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ।
प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥ ४११ ॥

ताभिः समेताभिरुदारचेष्टितः
प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ।
उदारहासद्विजकुन्ददीधिति-
र्व्यरोचतैणाङ्क इवोडुभिर्वृत ॥ ४१२ ॥

उपगीयमान उद्गायन्वनिताशतयूथपः ।
मालां बिभ्रद्वैजयन्तीं व्यचरन्मण्डयन्वनम् ॥ ४१३ ॥

नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ।
जुष्टं तत्तरलानन्दिकुमुदामोदवायुना ॥ ४१४ ॥

बाहुप्रसारपरिरम्भकरालकोरु-
नीवीस्तनालभननर्मनखाग्रपातैः ।
क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणा-
मुत्तम्भयन्रतिपतिं रमयांचकार ॥ ४१५ ॥

एवं भगवतः कृष्णाल्लब्धमाना महात्मनः ।
आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥ ४१६ ॥

---

410a T भवभयार्तिहरो for व्रजजनार्तिहरो 414c T. रेमे for जुष्टं

कस्यांचित्स्वभुजं न्यस्य चलन्त्याहापरा नृप ।
कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः ॥ ४३६ ॥

मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया ।
इत्युक्त्वैकेन हस्तेन हेलयो निदधेऽम्बरम् ॥ ४३७ ॥

आरुह्यैका पदाक्रम्य शिर आहापरां नृप ।
दुष्टाहे गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥ ४३८ ॥

तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणम् ।
चक्षूंष्याश्वपिदध्वं वो विधास्ये क्षेममञ्जसा ॥ ४३९ ॥

बद्धान्यया स्रजा काचित्तन्वी तत्र उलूखले ।
भीता सुदृक्पिधायास्यं भेजे भीतिविडम्बनम् ॥ ४४० ॥

[ दध्यादिभाण्डभेत्तारं हैयंगवमुखं त्विति । ]
एवं कृष्णं पृच्छमाना वृन्दावनलतास्तरून् ।
व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥ ४४१ ॥

पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः ।
लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशयवादिभिः ॥ ४४२ ॥
तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ।
वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥ ४४३ ॥
कस्याः पदानि चैतानि याताया नन्दसूनुना ।
अंसे न्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥ ४४४ ॥
अनयाराधितो नूनं भगवान्हरिरीश्वरः ।
यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः ॥ ४४५ ॥
धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः ।
यान्ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥ ४४६ ॥
तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ।
यैकापहृत्य गोपीनां रहो भुङ्क्तेऽच्युताधरम् ॥ ४४७ ॥
न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरैः ।
खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥ ४४८ ॥

---

436*b* T ननु for नृप    437*d* T यतन्नुनिदधेऽम्बरम्    438*b* T शिरस्या- हापरां for शिर आहापरां.    441*ab* not found in T    444*c* T अंसन्यस्त° for अंसे न्यस्त°.    446*d* T मूर्ध्नि for मूर्ध्नी

चूतप्रियालपनसासनकोविदार-
जम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपाः ।
येऽन्ये परार्थभविका यमुनोपकूलाः
शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥ ४२६ ॥

किं ते कृतं क्षिति तपो बत केशवाङ्घ्रि-
स्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ।
अप्यङ्घ्रिसंभव उरुक्रमविक्रमाद्वा
आहो वराहवपुषः परिरम्भणेन ॥ ४२७ ॥

अप्येणपत्न्युपगतः प्रिययेह गात्रै-
स्तन्वन्दृशां सखि सुनिर्वृतिमच्युतो वः ।
कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः
कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥ ४२८ ॥

बाहुं प्रियांस उपधाय गृहीतपद्मो
रामानुजस्तुलसिकालिकुलैर्मदान्धैः ।
अन्वीयमान इह वस्तरवः प्रणामं
किं वाभिनन्दति चलन्प्रणयावलोकैः ॥ ४२९ ॥

पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ।
नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ ४३० ॥

[ श्रीशुक उवाच ]

इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ।
लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥ ४३१ ॥

कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत्स्तनम् ।
तोकायित्वा रुदत्यन्या पदाहञ्छकटायतीम् ॥ ४३२ ॥

दैत्यायित्वा जहारान्यामेका कृष्णार्भकायतीम् ।
रिङ्गयामास काप्यङ्घ्री कर्षन्ती घोषनिःस्वनैः ॥ ४३३ ॥

कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन ।
वत्सायन्तीं जघानान्या तत्रैकानुबकायतीम् ॥ ४३४ ॥
आहूय दूरगा यद्वत्कृष्णस्तमनुवर्ततीम् ।
वेणुं क्वणन्तीं क्रीडन्तीमन्या शंसति साध्विति ॥ ४३५ ॥

---

433*b* T कृष्णार्भभावनां   434*c* T हन्ति चान्या for जघानान्या.

तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ।
तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥ ४६० ॥
ततः पुलिनमागन्य कालिन्द्याः कृष्णभावनाः ।
समवेता जगुः कृष्णं तदागमनकाङ्क्षया ॥ ४६१ ॥

इति द्वितीयः ॥

[ भाग० १० ३०.१–२४ ]

गोप्य ऊचुः ।

जयति तेऽधिक जन्मना व्रजः
श्रयत इन्दिरा शश्वदत्र हि ।
दयित दृश्यतां दिक्षु तावका-
स्त्वयि धृतासवस्त्वां विचिन्वते ॥ ४६२ ॥
शरदुदाशये साधुजातस-
त्सरसिजोदरश्रीमुषा दृशा ।
सुरतनाथ ते शुल्कदासिका
वरद निघ्नतो नेह किं वधः ॥ ४६३ ॥
विषजलाप्ययाद्व्यालराक्षसा-
द्वर्षमारुताद्वैद्युतानलात् ।
वृषमयात्मजाद्विश्वतो भया-
दृषभ ते वयं रक्षिता मुहुः ॥ ४६४ ॥
न खलु गोपिकानन्दनो भवा-
नखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान्सात्वतां कुले ॥ ४६५ ॥
विरचिताभयं वृष्णिधुर्य ते
शरणमीयुषां संसृतेर्भयात् ।
करसरोरुहं कान्त कामदं
शिरसि धेहि नः श्रीकरग्रहम् ॥ ४६६ ॥
व्रजजनार्तिहन्वीर योषितां
निजजनस्मयध्वंसनः स्मृत ।
भज सखे भवत्किंकरीः स्म नो
जलरुहाननं चारु दर्शय ॥ ४६७ ॥

461*a* T पुन for तत.		467*b* T °ध्वमनास्मित for °ध्वमन स्मृत .

अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः ।
प्रपदाक्रमणे ह्येते पश्यतासकले पदे ॥ ४४९ ॥

केशप्रसाधनं ह्यत्र कामिन्याः कामिना कृतम् ।
तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् ॥ ४५० ॥

[ इमान्यधिकमग्नानि पदानि वहतो वधूम् ।
गोप्यः पश्यत कृष्णस्य भाराक्रान्तानि कामिनः ॥ ४५१ ॥ ]

[ श्रीशुक उवाच । ]

रेमे तया स्वात्मरतिरात्मारामोऽप्यखण्डितः ।
दर्शयन्कामिनां दैन्यं स्त्रीणां चैव दुरात्मताम् ।
इत्येवं दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः ॥ ४५२ ॥

यां गोपीमनयत्कृष्णो विहायान्याः स्त्रियो वने ।
सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ॥ ४५३ ॥

हित्वा गोपीः कामयाना मामसौ भजते प्रियः ।
ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ।
न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥ ४५४ ॥

एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति ।
ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत ॥ ४५५ ॥

हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ।
दास्यास्ते कृपणाया मे सखे दर्शय संनिधिम् ॥ ४५६ ॥

[ श्रीशुक उवाच । ]

अन्विच्छन्त्यो भगवतो मार्गं गोप्यो विदूरतः ।
ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥ ४५७ ॥

तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ।
अवमानं च दौरात्म्याद्विस्मयं परमं ययुः ॥ ४५८ ॥

ततोऽविशन्वनं चन्द्रज्योत्स्ना यावद्विभाव्यते ।
तमःप्रविष्टमालक्ष्य ततो निववृतुर्हरेः ॥ ४५९ ॥

---

450*a* T तत्र for अत्र 451 T considers this stanza to exist in a few Mss only 452*a* T चात्मरति for स्वात्मरति 455*b* T कामयाभ्युतां for स्कन्ध आरुह्यतां

तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः।
तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥ ४६० ॥
ततः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः।
समवेता जगुः कृष्णं तदागमनकाङ्क्षया ॥ ४६१ ॥

इति द्वितीयः ॥

[भाग० १०.३०.१–४४]

गोप्य ऊचुः।

जयति तेऽधिकं जन्मना व्रजः
श्रयत इन्दिरा शश्वदत्र हि।
दयित दृश्यतां दिक्षु तावका-
स्त्वयि धृतासवस्त्वां विचिन्वते ॥ ४६२ ॥

शरदुदाशये साधुजातस-
त्सरसिजोदरश्रीमुषा दृशा।
सुरतनाथ ते शुल्कदासिका
वरद निघ्नतो नेह किं वधः ॥ ४६३ ॥

विषजलाप्ययाद्व्यालराक्षसा-
द्वर्षमारुताद्वैद्युतानलात्।
वृषमयात्मजाद्विश्वतो भया-
दृषभ ते वयं रक्षिता मुहुः ॥ ४६४ ॥

न खलु गोपिकानन्दनो भवा-
नखिलदेहिनामन्तरात्मदृक्।
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान्सात्वतां कुले ॥ ४६५ ॥

विरचिताभयं वृष्णिधुर्य ते
शरणमीयुषां संसृतेर्भयात्।
करसरोरुहं कान्त कामदं
शिरसि धेहि नः श्रीकरग्रहम् ॥ ४६६ ॥

व्रजजनार्तिहन्वीर योषितां
निजजनस्मयध्वंसनः स्मृतः।
भज सखे भवत्किंकरीः स्म नो
जलरुहाननं चारु दर्शय ॥ ४६७ ॥

461*a* T पुन for तत. 467*b* T °ध्वमनाँसेत for °ध्वसन स्मृत.

प्रणतदेहिनां पापकर्शनं
तृणचरानुगं श्रीनिकेतनम् ।
फणिफणार्पितं ते पदाम्बुजं
कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ४६८ ॥

मधुरया गिरा वल्गुवाक्यया
बुधमनोज्ञया पुष्करेक्षण ।
विधिकरीरिमा वीर मुह्यती-
रधरसीधुनाप्याययस्व नः ॥ ४६९ ॥

तव कथामृतं तप्तजीवनं
कविभिरीडितं कल्मषापहम् ।
श्रवणमङ्गलं श्रीमदाततं
भुवि गृणन्ति ते भूरिदा जनाः ॥ ४७० ॥

प्रहसितं प्रिय प्रेमवीक्षणं
विहरणं च ते ध्यानमङ्गलम् ।
रहसि संविदो या हृदिस्पृशः
कुहक नो मनः क्षोभयन्ति हि ॥ ४७१ ॥

चलसि यद्व्रजाच्चारयन्पशू-
न्नलिनसुन्दरं नाथ ते पदम् ।
तृणशिलाङ्कुरैः सीदतीति नः
कलिलतां मनः कान्त गच्छति ॥ ४७२ ॥

दिनपरिक्षये नीलकुन्तलै-
र्वनरुहाननं बिभ्रदावृतम् ।
घनरजस्वलं दर्शयन्मुहु-
र्मनसि नः स्मरं वीर यच्छसि ॥ ४७३ ॥

प्रणतकामदं पद्मजार्चितं
धरणिमण्डनं ध्येयमापदि ।
चरणपङ्कजं शंतमं च ते
रमण नः स्तनेष्वर्पयाधिहन् ॥ ४७४ ॥

सुरतवर्धनं शोकनाशनं
स्वरितवेणुना सुष्ठु चुम्बितम् ।
इतररागविस्मारणं नृणां
वितर वीर नस्तेऽधरामृतम् ॥ ४७५ ॥

अटति यद्भवानह्नि काननं
त्रुटिर्युगायते त्वामपश्यताम् ।
कुटिलकुन्तलं श्रीमुखं च ते
जड उदीक्षतां पक्ष्मकृद्दृशाम् ॥ ४७६ ॥

पतिसुतान्वयभ्रातृबान्धवा-
नतिविलङ्घ्य तेऽन्त्यच्युतागताः ।
गतिविदस्तवोद्गीतमोहिताः
कितव योषितः कस्त्यजेन्निशि ॥ ४७७ ॥

रहसि संविदं हृच्छयोदयं
प्रहसिताननं प्रेमवीक्षणम् ।
बृहदुरः श्रियो धाम वीक्ष्य ते
मुहुरतिस्पृहा मुह्यते मनः ॥ ४७८ ॥

व्रजवनौकसां व्यक्तिरङ्ग ते
वृजिन हन्त्र्यलं विश्वमङ्गलम् ।
त्यज मनाक्च नस्त्वत्स्पृहात्मनां
स्वजनहृद्रुजां यन्निषूदनम् ॥ ४७९ ॥

यत्ते सुजात चरणाम्बुरुहं स्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु ।
तेनाटवीमटसि तद्व्यथते न किंस्वि-
त्कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥ ४८० ॥

[ भाग० १०.३१.१-११ ]

[ स्वप्रेमामृतकल्लोलविह्वलीकृतचेतसः ।
सदयं नन्दयन्गोपीरुद्रतो नन्दनन्दनः ॥ ४८१ ॥ ]

इति तृतीयः

श्रीशुक उवाच ।

इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ।
रुरुदुः सुस्वरं राजन्कृष्णदर्शनलालसाः ॥ ४८२ ॥

तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ ४८३ ॥

---

481 Found in श्रीधरी टीका

तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः ।
उत्तस्थुर्युगपत्सर्वास्तन्वः प्राणमिवागतम् ॥ ४८४ ॥

काचित्कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा ।
काचिद्दधार तद्बाहुमंसे चन्दनभूषितम् ॥ ४८५ ॥

काचिदञ्जलिनागृह्णात्तन्वी ताम्बूलचर्वितम् ।
एका तदङ्घ्रिकमलं संतप्ता स्तनयोरधात् ॥ ४८६ ॥

एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला ।
घ्नतीवैक्षत्कटाक्षेपैः संदष्टदशनच्छदा ॥ ४८७ ॥

अपरानिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजम् ।
आपीतमपि नातृप्यत्सन्तस्तच्चरणं यथा ॥ ४८८ ॥

तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च ।
पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसंप्लुता ॥ ४८९ ॥

सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ।
जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥ ४९० ॥

ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ।
व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥ ४९१ ॥

ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः ।
विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥ ४९२ ॥

शरच्चन्द्रांशुसंदोहध्वस्तदोषातमः शिवम् ।
कृष्णाया हस्ततरलाचितकोमलवालुकम् ॥ ४९३ ॥

तद्दर्शनाह्लादविधूतहृद्रुजो
मनोरथान्तं श्रुतयो यथा ययुः ।
स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितै-
रचीक्लृपन्नासनमात्मबन्धवे ॥ ४९४ ॥

तत्रोपविष्टो भगवान्स ईश्वरो
योगीश्वरान्तर्हृदि कल्पितासनः ।
चकास गोपीपरिषद्गतोऽर्चित-
स्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् । ४९५ ॥

सभाजयित्वा तमनङ्गदीपनं
सहासलीलेक्षणविभ्रमभ्रुवा ।
संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः
संस्तुत्य ईषत्कुपिता बभाषिरे ॥ ४९६ ॥

गोप्य ऊचुः ।

भजतोऽनुभजन्त्येक एक एतद्विपर्ययम् ।
नोभयांश्च भजन्त्यन्ये एतन्नो ब्रूहि साधु भोः ॥ ४९७ ॥

श्रीभगवानुवाच ।

मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते ।
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥ ४९८ ॥

भजन्त्यभजतो ये वै करुणाः पितरो यथा ।
धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥ ४९९ ॥

भजतोऽपि न वै केचिद्भजन्त्यभजतः कुतः ।
आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥ ५०० ॥

नाहं तु सख्यो भजतोऽपि जन्तू-
न्भजाम्यमीषामनुवृत्तिवृत्तये ।
यथाधनो लब्धधने विनष्टे
तच्चिन्तयान्यन्निभृतो न वेद ॥ ५०१ ॥

एवं मदर्थोज्झितलोकवेद-
स्वानां हि वो मय्यनुवृत्तयेऽबलाः ।
मया परोक्षं भजता तिरोहितं
मासूयितुं मार्हथ तत्प्रियं प्रियाः ॥ ५०२ ॥

न पारयेऽहं निरवद्यसंयुजां
स्वसाधुकृत्यं विबुधायुषापि वः ।
या माभजन्दुर्जरगेहशृङ्खलाः
संवृश्च्य तद्वः प्रतियातु साधुना ॥ ५०३ ॥

[ भाग० १०·३२·१–२२

इति चतुर्थः ॥

श्रीशुक उवाच ।

इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः ।
जहुर्विरहजं तापं तदङ्गोपचिताशिषः ॥ ५०४ ॥

तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः ।
स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥ ५०५ ॥

रासोत्सवः संप्रवृत्तो गोपीमण्डलमण्डितः ।
योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ॥ ५०६ ॥

प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः ।
यं मन्यन्ते नभस्तावद्विमानशतसंकुलम् ।
दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥ ५०७ ॥

ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः ।
जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥ ५०८ ॥

वलयानां नूपुराणां किङ्किणीनां च योषिताम् ।
सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ॥ ५०९ ॥

तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः ।
मध्ये मणीनां हैमानां महामरकतो यथा ॥ ५१० ॥

पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासै-
र्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः ।
[ रेजुर्गोप्यो यदुपतियुतास्ताण्डवं दर्शयन्त्यो
हैम्या वल्गो मरुदनिभृता यादवाः शालराजे । ]
स्विद्यन्मुख्यः कबररसनाग्रन्थयः कृष्णवध्वो
गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥ ५११ ॥

उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः ।
कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ ५१२ ॥

काचित्समं मुकुन्देन स्वरजातीरमिश्रिताः ।
उन्निन्ये पूजिता तेन प्रीयता साधु साध्विति ।
तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥ ५१३ ॥

काचिद्रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः ।
जग्राह बाहुना स्कन्धं श्लथद्वलयमल्लिका ॥ ५१४ ॥

तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ।
चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ ५१५ ॥

---

507c T मन्येरन् for मन्यन्ते    511cd not found in T

कस्याश्चिन्नाट्यविक्षिप्तं कुण्डलत्विषमण्डितम्।
गण्डं गण्डे संदधत्याः प्रादात्ताम्बूलचर्वितम्॥ ५१६॥

नृत्यन्ती गायती काचित्कूजन्नूपुरमेखला।
पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताधात्स्तनयोः शिवम्॥५१७॥

गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्तवल्लभम्।
गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्ता विजह्रिरे॥ ५१८॥

कर्णोत्पलालकविटङ्ककपोलघर्म-
वक्त्रश्रियो वलयनूपुरघोषवाद्यैः।
गोप्यः समं भगवता ननृतुः स्वकेश-
स्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम्॥ ५१९॥

एवं परिष्वङ्गकराभिमर्श-
स्निग्धेक्षणोद्दामविलासहासैः।
रेमे रमेशो व्रजसुन्दरीभि-
र्यथार्भकः स्वप्रतिबिम्बविभ्रमः॥ ५२०॥

तदङ्गसङ्गप्रमुदाकुलेन्द्रियाः
केशान्दुकूलं कुचपट्टिकां वा।
नाञ्जः प्रतिव्योढुमलं व्रजस्त्रियो
विस्रस्तमालाभरणाः कुरूद्वह॥ ५२१॥

कृष्णविक्रीडितं वीक्ष्य मुमुहुर्विचरस्त्रियः।
कामार्दिताः शशाङ्कोऽपि सगणो विस्मितोऽभवत्॥ ५२२॥

कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः।
स रेमे भगवांस्ताभिरात्मारामोऽपि लीलया॥ ५२३॥

तासां रतिविहारेण श्रान्तानां वदनानि सः।
प्रामृजत्करुणः प्रेम्णा शंतमेनात्मपाणिना॥ ५२४॥

---

516 *d* T अदात् for प्रादात्  517 *a* T कापि for काचित्.  518*c* T गृहीतकण्ठ्य for °कण्ठ्यः  521 *a* T °प्रमदा° for °प्रमुदा°.  522 *b* T खेचरस्त्रिय for विचरस्त्रिय. *c* T शशाङ्कश्च for शशाङ्कोऽपि  524 *a* T अतिविहारेण for रति°; *d* T अग पाणिना for आत्मपाणिना

गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्वि-
ड्गण्डश्रिया सुधितहासनिरीक्षणेन ।
मानं दधत्य ऋषभस्य जगुः कृतानि
पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ ५२५ ॥

ताभिर्युतः श्रममपोहितुमङ्गसङ्ग-
घृष्टस्रजः स कुचकुङ्कुमरञ्जितायाः ।
गन्धर्वपालिभिरनुद्रुत आविशद्वाः
श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥ ५२६ ॥

सोऽम्भस्यलं युवतिभिः परिषिच्यमानः
प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग ।
वैमानिकैः कुसुमवृष्टिभिरीड्यमानो
रेमे स्वयं स्वरतिरत्तगजेन्द्रलीलः ॥ ५२७ ॥

ततश्च कृष्णोपवने जलस्थल-
प्रसूनगन्धानिलजुष्टदिक्तटे ।
चचार भृङ्गप्रमदागणावृतो
यथा मदच्युद्द्विरदः करेणुभिः ॥ ५२८ ॥

एवं शशाङ्कांशुविराजिता निशाः
स सत्यकामोऽनुरताबलागणः ।
सिषेव आत्मन्यवरुद्धसौरतः
सर्वाः शरत्काव्यकथा रसाश्रयाः ॥ ५२९ ॥

राजोवाच ।

संस्थापनाय धर्मस्य प्रशमायेतरस्य च ।
अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ ५३० ॥

स कथं धर्मसेतूनां वक्ता कर्ताभिरक्षिता ।
प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनम् ॥ ५३१ ॥

आप्तकामो यदुपतिः कृतवान्वै जुगुप्सितम् ।
किमभिप्राय एतन्नः संशयं छेत्तुमर्हसि ॥ ५३२ ॥

श्रीशुक उवाच ।

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ५३३ ॥

527 d T अत्र for आत्त°.

नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः ।
विनश्यत्याचरंल्लौल्याद्यथा रुद्रो विषं जुपन् ॥ ५३४ ॥

ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ।
तेषां यत्स्ववचो युक्तं बुद्धिमांस्तत्समाचरेत् ॥ ५३५ ॥

कुशलाचरितेनैषामिह स्वार्थो न विद्यते ।
विपर्ययेण वानर्थो निरहंकारिणां प्रभो ॥ ५३६ ॥

किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ।
ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ५३७ ॥

यत्पादपङ्कजपरागनिषेवतृप्ता
योगप्रभावविधुताखिलकर्मबन्धाः ।
स्वैरं चरन्ति मुनयोऽपि न नह्यमाना-
स्तस्येच्छयात्तवपुषः कुत एव बन्धः ॥ ५३८ ॥

गोपीनां तत्पतीनां च सर्वेषामपि देहिनाम् ।
योऽन्तश्चरति सोऽध्यक्ष एष क्रीडनदेहभाक् ॥ ५३९ ॥

अनुग्रहाय भक्तानां मानुषं देहमास्थितः ।
भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत् ॥ ५४० ॥

नासूयन्खलु कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ॥ ५४१ ॥

ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ।
अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान्भगवत्प्रियाः ॥ ५४२ ॥

विक्रीडितं व्रजवधूभिरिदं च विष्णोः
श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः ।
भक्तिं परां भगवति प्रतिलभ्य कामं
हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥ ५४३ ॥

[ भाग० १०·३३·३–४० ]

इति पञ्चमः ॥

---

534 *c* T मौग्ध्यात् for लौल्यात्; *d* T यथा रुद्रोऽब्धिजं विषं. 539 *b* T सर्वेषामेव for सर्वेषामपि. *d* T क्रीडनेनेह देहभाक्. 540 *a* T भूतानां for भक्तानां, *d* T स्मृत्वा for श्रुत्वा.

गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्वि-
ड्गण्डश्रिया सुधितहासनिरीक्षणेन ।
मानं दधत्य ऋषभस्य जगुः कृतानि
पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ ५२५ ॥

ताभिर्युतः श्रममपोहितुमङ्गसङ्ग-
घृष्टस्रजः स कुचकुङ्कुमरञ्जितायाः ।
गन्धर्वपालिभिरनुद्रुत आविशद्वाः
श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥ ५२६ ॥

सोऽम्भस्यलं युवतिभिः परिषिच्यमानः
प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग ।
वैमानिकैः कुसुमवृष्टिभिरीड्यमानो
रेमे स्वयं स्वरतिरात्तगजेन्द्रलीलः ॥ ५२७ ॥

ततश्च कृष्णोपवने जलस्थल-
प्रसूनगन्धानिलजुष्टदिक्तटे ।
चचार भृङ्गप्रमदागणावृतो
यथा मदच्युद्द्विरदः करेणुभिः ॥ ५२८ ॥

एवं शशाङ्कांशुविराजिता निशाः
स सत्यकामोऽनुरताबलागणः ।
सिषेव आत्मन्यवरुद्धसौरतः
सर्वाः शरत्काव्यकथा रसाश्रया ॥ ५२९ ॥

राजोवाच ।

संस्थापनाय धर्मस्य प्रशमायेतरस्य च ।
अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ ५३० ॥

स कथं धर्मसेतूनां वक्ता कर्ताभिरक्षिता ।
प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनम् ॥ ५३१ ॥

आप्तकामो यदुपतिः कृतवान्वै जुगुप्सितम् ।
किमभिप्राय एतन्नः संशयं छेत्तुमर्हसि ॥ ५३२ ॥

श्रीशुक उवाच ।

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ५३३ ॥

527 *d* T अत्र for आत्त° 532 *d* T छिन्द्धि सुव्रत for छेत्तुमर्हसि

नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः ।
विनश्यत्याचरंल्लौल्याद्यथा रुद्रो विषं त्रुपन् ॥ ५३४ ॥

ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ।
तेषां यत्स्ववचो युक्तं बुद्धिमांस्तत्समाचरेत् ॥ ५३५ ॥

कुशलाचरितेनैषामिह स्वार्थो न विद्यते ।
विपर्ययेण वानर्थो निरहंकारिणां प्रभो ॥ ५३६ ॥

किमुताखिलसत्त्वानां तिर्यङ्मर्त्यादिवौकसाम् ।
ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ५३७ ॥

यत्पादपङ्कजपरागनिषेवतृप्ता
योगप्रभावविधुताखिलकर्मबन्धाः ।
स्वैरं चरन्ति मुनयोऽपि न नह्यमाना-
स्तस्येच्छयात्तवपुषः कुत एव बन्धः ॥ ५३८ ॥

गोपीनां तत्पतीनां च सर्वेषामपि देहिनाम् ।
योऽन्तश्चरति सोऽध्यक्ष एष क्रीडनदेहभाक् ॥ ५३९ ॥

अनुग्रहाय भक्तानां मानुषं देहमास्थितः ।
भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत् ॥ ५४० ॥

नासूयन्खलु कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ॥ ५४१ ॥

ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ।
अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान्भगवत्प्रियाः ॥ ५४२ ॥

विक्रीडितं व्रजवधूभिरिदं च विष्णोः
श्रद्धान्वितोऽनुशृणुयादथ वर्णयेच्च ।
भक्तिं परां भगवति प्रतिलभ्य कामं
हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥ ५४३ ॥

[ भाग० १०·३३ १–४० ]

इति पञ्चमः ॥

---

534 *c* T मौढ्यात् for लौल्यात्. *d* T यथा रुद्रोऽग्निज विषं　539 *b* T सर्वेषामेव for सर्वेषामपि. *d* T क्रीडनेनेह देहभाक्　540*a* T भूतानां for भक्तानां, *d* T स्मृत्वा for श्रुत्वा

अथ सूची ॥

नन्दाद्या गोपमुख्याः प्रमुदितमनसो देवयात्राप्रसङ्गा-
त्संप्राप्ताश्चण्डिकाया विपिनमनुपमं दिव्यरूपैरलोभिः ।
आन[ र्चु ]र्वे महेशं तदनु भगवतीमम्बिकां तत्र सुप्ता
रात्रावत्रातिघोरोऽग्रसदसमरुचिं नन्दमारादहीन्द्रः ॥ ५४४ ॥

श्रीकृष्ण त्राहि कृष्णेत्यतिविकलतरं नन्दवाचं निशम्य
प्राप्तः पस्पर्श सर्पे शिरसि करुणया पादपद्मेन कृष्णः ।
स्पृष्टस्तत्याज घोरं वपुरतिललितं दिव्यरूपं च लब्ध्वा
राजा विद्याधराणामतिरुचिररुचिर्देवदेवं ननाम ॥ ५४५ ॥

क्रीडाव्यासक्तचित्तौ यदुमुकुटमणी रामकृष्णौ निरीक्ष्य
प्राप्तः प्रोद्दीप्तयाहुर्युवतिषु बलवान्गुह्यकः शङ्खचूडः ।
दूरादेतावुपेतावथ स भयभराद्विद्रुतोऽभूदमुष्य
श्रीकृष्णः स्फीतरत्नस्फुरदमलशिरो मुष्टिना संजहार ॥ ५४६ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ।
कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ ५४७ ॥

गोप्य ऊचुः ।

वामबाहुकृतवामकपोलो
वल्गितभ्रुरधरार्पितवेणुम् ।
कोमलाङ्गुलिभिराश्रितमार्गं
गोप्य ईरयति यत्र मुकुन्दः ॥ ५४८ ॥

व्योमयानवनिताः सह सिद्धै-
र्विस्मितास्तदुपधार्य सलज्जाः ।
काममार्गणसमर्पितचित्ताः
कश्मलं ययुरपस्मृतनीव्यः ॥ ५४९ ॥

हन्त चित्रमबलाः शृणुतेदं
हारहास उरसि स्थिरविद्युत् ।
नन्दसूनुरयमार्तजनानां
नर्मदो यर्हि कूजितवेणुः ॥ ५५० ॥

वृन्दशो व्रजवृषा मृगगावो
वेणुवाद्यहृतचेतस आरात् ।
दन्तदष्टकवला धृतकर्णा
निद्रिता लिखितचित्रमिवासन् ॥ ५५१ ॥
बर्हिणस्तबकधातुपलाशै-
र्बद्धमल्लपरिबर्हविडम्बः ।
कर्हिचित्सबल आलि स गोपै-
र्गाः समाह्वयति यत्र मुकुन्दः ॥ ५५२ ॥
तर्हि भग्नगतयः सरितो वै
तत्पदाम्बुजरजोऽनिलनीतम् ।
स्पृहयतीर्वयमिवाबहुपुण्याः
प्रेमवेपितभुजाः स्तिमितापः ॥ ५५३ ॥
अनुचरैः समनुवर्णितवीर्य
आदिपूरुष इवाचलभूतिः ।
वनचरो गिरितटेषु चरन्ती-
र्वेणुनाह्वयति गाः स यदा हि ॥ ५५४ ॥
वनलतास्तरव आत्मनि विष्णुं
व्यञ्जयन्त्य इव पुष्पफलाढ्याः ।
प्रणतभारविटपा मधुधाराः
प्रेमहृष्टतनवः ससृजुः स्म ॥ ५५५ ॥
दर्शनीयतिलको वनमाला-
दिव्यगन्धतुलसीमधुमत्तैः ।
अलिकुलैरलघुगीतमभीष्ट-
माद्रियन्यर्हि कूजितवेणुः ॥ ५५६ ॥
सरसि सारसहंसविहंगा-
श्चारुगीतहृतचेतस एत्य ।
हरिमुपासत ते यतचित्ता
हन्त मीलितदृशो धृतमौनाः ॥ ५५७ ॥
[ भाग० १०·३५·१-११ ]
महदतिक्रमणशङ्कितचेता
मन्दमन्दमनुगर्जति मेघः ।
सुहृदमभ्यवर्षत्सुमनोभि-
श्छायया च विदधत्प्रतपत्रम् ॥ ५५८ ॥

विविधगोपचरणेषु विदग्धो
वेणुवाद्य उरुधा निजशिक्षाः ।
तव सुतः सति यदाधरबिम्बे
दत्तवेणुरनयत्स्वरजातीः ॥ ५५९ ॥

सवनशस्तदुपधार्य सुरेशाः
शक्रशर्वपरमेष्ठिपुरोगाः ।
कवय आनतकंधरचित्ताः
कश्मलं ययुरनिश्चिततत्त्वाः ॥ ५६० ॥

निजपदाब्जदलैर्ध्वजवज्र-
नीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः शमयन्खुरतोदं
वर्ष्मधुर्यगतिरीरितवेणुः ॥ ५६१ ॥

व्रजति तेन वयं सविलास-
वीक्षणार्पितमनोभववेगाः ।
कुजगतिं गमिता न विदामः
कश्मलेन वसनं कबरं वा ॥ ५६२ ॥

क्वणितवेणुरववञ्चितचित्ताः
कृष्णमन्वसत कृष्णगृहिण्यः ।
गुणगणार्णमनुगम्य हरिण्यो
गोपिका इव विमुक्तगृहाशाः ॥ ५६३ ॥

कुन्ददामकृतकौतुकवेषो
गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे तव वत्सो
नर्मदः प्रणयिनां विजहार ॥ ५६४ ॥

मन्दवायुरुपवात्यनुकूलं
मानयन्मलयजस्पर्शेन ।
वन्दिनस्तमुप देवगणा ये
वाद्यगीतबलिभिः परिवव्रुः ॥ ५६५ ॥

---

561d T ईडितवेणु for ईरितवेणु

वत्सलो व्रजगवां यदगध्रो
वन्द्यमानचरणः पथि वृद्धैः।
कृत्स्नगोधनमुपोह्य दिनान्ते
गीतवेणुरनुगेडितकीर्तिः ॥ ५६६ ॥

उत्सवं श्रमरुचापि दृशीना-
मुन्नयन् खुररजश्छुरितस्रक्।
दित्सयैति सुहृदाशिष एष
देवकीजठरभूरुडुराजः ॥ ५६७ ॥

मदविघूर्णितलोचन ईष-
न्मानदः स्वसुहृदां वनमाली।
बदरपाण्डुवदनो मृदुगण्डं
मण्डयन्कनककुण्डललक्ष्म्या ॥ ५६८ ॥

यदुपतिर्द्विरदराजविहारो
यामिनीपतिरिवैष दिनान्ते।
मुदितवक्त्र उपयाति दुरन्तं
मोचयन्व्रजगवां दिनतापम् ॥ ५६९ ॥

श्रीशुक उवाच।

एवं व्रजस्त्रियो राजन्कृष्णलीलानुगायतीः।
रेमिरेऽहस्सु तच्चित्तास्तन्मनस्का महोदयाः ॥ ५७० ॥

[ भाग० १०.३५ १३-२६]

अथ सूची ॥

मदान्धो व्याक्रोशन्मुहुरतिकठोरैः खुरभरैः
र्हगदुर्वी गुर्वी वियति चलपुच्छोऽति दलयन्।
अरिष्टस्तद्गोष्ठे स्वयमुपगतो दुष्टु चरतो
गलद्गर्भा गावः शरणमरविन्दाक्षमगमन् ॥ ५७१ ॥

पाणिभ्यामथ तं निगृह्य भगवाञ्शृङ्गद्वये लीलया
भूमौ हन्त निपात्य निर्गतदृशं मूत्रं मुखादुन्मुखम्।
बाहुभ्यां सुदृढं जघान जगतामानन्दकन्दो हरि-
र्गोपैरादरतः स्तुतो बलयुतो गोष्ठं निजं प्राविशत् ॥ ५७२ ॥

अथ श्रीभागवते ॥

[ कामं व्रजे वसन्तं तं कंसमेत्य गतस्मृतिम् ।
नारदः स्मारयामास कंसं दूतगिरैव तु ॥ ५७३ ॥ ]

अरिष्टे निहते गोष्ठे कृष्णेनाद्भुतकर्मणा ।
कंसायाथाह भगवान्नारदो देवदर्शनः ॥ ५७४ ॥

[ नारद उवाच । ]

यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च ।
रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ।
न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः ॥ ५७५ ॥

निशम्य तद्भोजपतिः कोपात्प्रचलितेन्द्रियः ।
निशातमसिमादत्त वसुदेवजिघांसया ॥ ५७६ ॥

निवारितो नारदेन तत्सुतौ मृत्युमात्मनः ।
ज्ञात्वा लोहमयैः पाशैर्बबन्ध सह भार्यया ॥ ५७७ ॥

प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ।
प्रेषयामास हन्येतां भवता राममाधवौ ॥ ५७८ ॥

ततो मुष्टिकचाणूरसलतोसलकादिकान् ।
अमात्यान्हस्तिपांश्चैव समाहूयाह भोजराट् ॥ ५७९ ॥

भो भो निशम्यतामेतद्वीरचाणूरमुष्टिकौ ।
नन्दव्रजे समासाते सुतावानकदुन्दुभेः ॥ ५८० ॥

रामकृष्णौ तु तौ मह्यं मृत्युः किल निदर्शितः ।
भवद्भ्यामिह संप्राप्तौ हन्येतां मल्ललीलया ॥ ५८१ ॥

मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः ।
पौरा जानपदाः सर्वे पश्यन्तु स्वैरसंयुगम् ॥ ५८२ ॥

महामात्र त्वया भद्र रङ्गद्वार्युपनीयताम् ।
गजः कुवलयापीडो जहि तेन ममाहितौ ॥ ५८३ ॥

आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि ।
विशसन्तु पशून्मेध्यान्भूतराजाय मीढुषे ॥ ५८४ ॥

---

573 Found in श्रीधरी टीका   b T कृष्णं तेन तु विस्मृत   580 c T निशामाते for समासाते   581a T ततो for तु तौ   583a T द्विप for गज.

इत्याज्ञाप्यार्थतत्त्वज्ञ आहूय यदुपुंगवम् ।
गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥ ५८५ ॥

भो भो दानपते मह्यं क्रियतां मैत्रमादृतः ।
नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ ५८६ ॥

अतस्त्वामाश्रितः सौम्य कार्यगौरवसाधने ।
यथेन्द्रो विष्णुमाश्रित्य स्वार्थमभ्यगमद्विभुः ॥ ५८७ ॥

गच्छ नन्दव्रजं तत्र सुतावानकदुन्दुभेः ।
आसाते ताविहानेन रथेनानय माचिरम् ॥ ५८८ ॥

निसृष्टः किल मे मृत्युर्देवैर्वैकुण्ठसंश्रयैः ।
तावानय समं गोपैर्नन्दाद्यैः साभ्युपायनैः ॥ ५८९ ॥

घातयिष्य इहानीतौ कालकल्पेन हस्तिना ।
यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः ॥ ५९० ॥

तयोर्निहतयोस्तांस्तान्वसुदेवपुरोगमान् ।
तद्बन्धून्निहनिष्यामि वृष्णिभोजदशार्हकान् ॥ ५९१ ॥

उग्रसेनं च पितरं स्थविरं राज्यलुब्धकम् ।
तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥ ५९२ ॥

ततश्चैवा मही मित्र भवित्री नष्टकण्टका ।
जरासंधो मम गुरुर्द्विविदो दयितः सखा ॥ ५९३ ॥

शम्बरो नरको बाणो मय्येव कृतसौहृदाः ।
तैरहं कृष्णपक्षीयान्हत्वा भोक्ष्ये महीं नृपान् ॥ ५९४ ॥

एतज्ज्ञात्वानय क्षिप्रं रामकृष्णाविहार्भकौ ।
धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम् ॥ ५९५ ॥

अक्रूर उवाच ।

राजन्मनीषितं सम्यक्तव स्वावद्यमार्जनम् ।
सिद्ध्यसिद्ध्योः समं कुर्याद्दैवं हि फलभावनम् ॥ ५९६ ॥

मनोरथान्करोत्युच्चैर्जनो दैवहतानपि ।
युज्यते शोकहर्षाभ्यां तथाप्याज्ञां करोमि ते ॥ ५९७ ॥

---

587 b T °साधने for °साधने. 591 a T तसान् for तांस्तान्. 592 b T राज्यकामुकं for राज्यलुब्धकं. 596 d T फलभावनं for फलभावनं.

[ श्रीशुक उवाच । ]

एवमादिश्य चाक्रूरं मन्त्रिणश्च विसृज्य सः ।
प्रविवेश गृहं कंसस्तथाक्रूरः स्वमालयम् ॥ ५९८ ॥

[ भाग० १०·३६·१६–४० ]

अथ सूची ॥

अकस्मादायातः खरतरखुरोत्कीर्णधरणि-
र्हयाकारः केशी विकटवदनः श्यामलरुचिः ।
व्रजं कंसादेशाद्भगवदपकाराय भगवा-
न्समुद्वीक्ष्यैनं दोर्भ्यामपगतभयस्तेन युयुधे ॥ ५९९ ॥

दोर्भ्यामादाय पश्चात्पदयुगलममुं भ्रामयित्वा धरायां
चिक्षेप व्यादितास्यं पुनरपि च हरिं योद्धुकामं विलोक्य ।
वक्त्रे निक्षिप्य बाहुं स्मितसुभगमुखो वर्धमानेन तेन
त्रैलोक्यत्राणकर्ता सपदि विगलितप्राणमेनं चकार ॥ ६०० ॥

भूयः श्रीकृष्णमीड्यं रहसि सुरमुनिर्नारदोऽभ्येत्य नत्वा
प्रोवाच [ प्राप्त ]कृत्यं यदिह भगवतो जन्मना यादवेन ।
गोविन्दः प्रीतचेताः सपदि सुरमुनेरुक्तमाकर्ण्य तस्मि-
न्स्वर्लोकाय प्रयाते पुनरपि भगवान्बालकैरेव रेमे ॥ ६०१ ॥

तत्राकस्मादुपेतः शिशुषु मयसुतो गोपबालानुकारी
बालान्मेषानुकाराग्गिरिकुहरदरीष्वौररूपो जहार ।
द्वारं तस्याः शिलाभिः स्वयमथ पिदधे तस्य तत्कर्म दृष्ट्वा
तं हत्वा दुष्टचित्तं हरिरथ कृपया बालकानुन्मुमोच ॥ ६०२ ॥

अथ श्रीभागवते ॥

[ प्रातः केशिवधे वृत्ते द्वादश्यां निर्गते मुनौ ।
ततो व्योमे हतेऽक्रूरः सायं गोकुलमागमत् ॥ ६०३ ॥ ]

अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः ।
उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम् ॥ ६०४ ॥

गच्छन्पथि महाभागो भगवत्पङ्कजेक्षणे ।
भक्तिं परामुपगत एवमेतदचिन्तयत् ॥ ६०५ ॥

किं मयाचरितं भद्रं किं तप्तं परमं तपः ।
किं वाथाप्यर्हते दत्तं यद् द्रक्ष्याम्यद्य केशवम् ॥ ६०६ ॥

---

603 Found in श्रीधरी टीका.

ममैतद्दुर्लभं मन्य उत्तमश्लोकदर्शनम् ।
विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ६०७ ॥
मैवं ममाधमस्यापि स्यादेवाच्युतदर्शनम् ।
ह्रियमाणः कालनद्या क्वचित्तरति कश्चन ॥ ६०८ ॥
ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः ।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥ ६०९ ॥

कंसो बताद्य कृतवाननुग्रहं
द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः ।
कृतावतारस्य दुरत्ययं तमः
पूर्वेऽतरन्यन्नखमण्डलत्विषा ॥ ६१० ॥
यदर्चितं ब्रह्मभवादिभिः सुरैः
श्रिया च देव्या मुनिभिः ससात्वतैः ।
गोचारणायानुचरैश्चरद्वने
यद्गोपिकानां कुचकुङ्कुमाङ्कितम् ॥ ६११ ॥
द्रक्ष्यामि नूनं सुकपोलनासिकं
स्मितावलोकारुणकञ्जलोचनम् ।
मुखं मुकुन्दस्य गुडालकावृतं
प्रदक्षिणं मे प्रचरन्ति वै मृगाः ॥ ६१२ ॥
अप्यद्य विष्णोर्मनुजत्वमीयुषो
भारावताराय भुवो निजेच्छया ।
लावण्यधाम्नो भवितोपलम्भनं
मह्यं न न स्यात्फलमञ्जसा दृशोः ॥ ६१३ ॥
य ईक्षिताहं रहितोऽप्यसत्सतोः
स्वतेजसापास्ततमोभिदाभ्रमः ।
स्वमाययात्मन्रचितैस्तदीक्षया
प्राणाक्षधीभिः सदनेष्वभीयते ॥ ६१४ ॥
यस्याखिलामीवहभिः सुमङ्गलै-
र्वाचो विमिश्रा गुणकर्मजन्मभिः ।
प्राणन्ति शुम्भन्ति पुनन्ति वै जग-
द्यास्तद्विरक्ताः शवशोभना मताः ॥ ६१५ ॥

[ भाग० १०.३८.२–१२——

610 *a* T कंसो बताद्याकृत मेऽत्यनुग्रहं

तं त्वद्य नूनं महतां गतिं गुरुं
त्रैलोक्यकान्तं दृशिमन्महोत्सवम् ।
रूपं दधानं श्रिय ईप्सितास्पदं
द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ॥ ६१६ ॥

अथावरूढः सपदीशयो रथा-
त्प्रधानपुंसोश्चरणं स्वलब्धये ।
धिया धृतं योगिभिरप्यहं ध्रुवं
नमस्य आभ्यां च सखीन्व्रजौकसः ॥ ६१७ ॥

अप्यङ्घ्रिमूले पतितस्य मे विभुः
शिरस्यधास्यन्निजहस्तपङ्कजम् ।
दत्ताभयं कालभुजङ्गरंहसा
प्रोद्वेजितानां शरणैषिणां नृणाम् ॥ ६१८ ॥

समर्हणं यत्र निधाय कौशिक-
स्तथा बलिश्चाप जगत्त्रयेन्द्रताम् ।
यद्वा विहारे व्रजयोषितां श्रमं
स्पर्शेन सौगन्धिकगन्ध्यपानुदत् ॥ ६१९ ॥

न मय्युपैष्यत्यरिबुद्धिमच्युतः
कंसस्य दूतः प्रहितोऽपि विश्वदृक् ।
योऽन्तर्बहिश्चेतस एतदीहितं
क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥ ६२० ॥

अप्यङ्घ्रिमूले विहितं कृताञ्जलिं
मामीक्षिता सस्मितमार्द्रया दृशा ।
सपद्यपध्वस्तसमस्तकिल्बिषो
वोढा मुदं वीतविशङ्क ऊर्जिताम् ॥ ६२१ ॥

सुहृत्तमं ज्ञातिमनन्यदैवतं
दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ।
आत्मा हितार्थी क्रियते तदैव मे
बन्धश्च कर्मात्मक उच्छ्वसत्युत ॥ ६२२ ॥

---

617 *d* T वनौकस for व्रजौकस  621 *d* T अवहित for विहित  622 *c* T हि तीर्थीक्रियते for हितार्थी क्रियते  *d* T उच्छ्वसित्यतः for उच्छ्वसत्युत

लब्धाङ्गसङ्गं प्रणतं कृताञ्जलिं
मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः ।
तदा वयं जन्मभृतो महीयसो
नैवादृतो यो धिगमुष्य जन्म तत् ॥ ६२३ ॥

न तस्य कश्चिद्दयितः सुहृत्तमो
न चाप्रियो द्वेष्य उपेक्ष्य एव च ।
तथापि भक्तान्भजते यथा तथा
सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥ ६२४ ॥

किं चाग्रजो मावनतं यदूत्तमः
स्मयन्परिष्वज्य गृहीतमञ्जलौ ।
गृहं प्रवेश्याप्तसमस्तसत्कृतं
संप्रक्ष्यते कंसकृतं स्वबन्धुषु ॥ ६२५ ॥

[ श्रीशुक उवाच । ]

इति संचिन्तयन्कृष्णं श्वफल्कतनयोऽध्वनि ॥
रथेन गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप ॥ ६२६ ॥

पदानि तस्याखिललोकपाल-
किरीटजुष्टामलपादरेणोः ।
ददर्श गोष्ठे क्षितिकौतुकानि
विलक्षितान्यब्जयवाङ्कुशाद्यैः ॥ ६२७ ॥

तद्दर्शनाह्लादविवृद्धसंभ्रमः
प्रेम्णोर्ध्वरोमाश्रुकलाकुलेक्षणः ।
रथादवस्कन्द्य स तेष्वचेष्टत
प्रभोरमून्यङ्घ्रिरजांस्यहो इति ॥ ६२८ ॥

देहंभृतामियानर्थो हित्वा दम्भं भियं शुचम् ।
संदेशाद्यो हरेर्लिङ्गदर्शनश्रवणादिभिः ॥ ६२९ ॥

ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ ।
पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ ॥ ६३० ॥

किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ ।
सुमुखौ सुन्दरवरौ बालद्विरदविक्रमौ ॥ ६३१ ॥

ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम् ।
शोभयन्तौ महात्मानौ सानुक्रोशस्मितेक्षणौ ॥ ६३२ ॥

उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ ।
पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ ॥ ६३३ ॥

प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ।
अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥ ६३४ ॥

दिशो वितिमिरा राजन्कुर्वाणौ प्रभया स्वया ।
यथा मारकतः शैलो रौप्यश्च कनकाचितौ ॥ ६३५ ॥

रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः ।
पपात चरणोपान्ते दण्डवद्रामकृष्णयोः ॥ ६३६ ॥

भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः ।
पुलकाञ्चित औत्कण्ठ्यात्स्वाख्याने नाशकन्नृप ॥ ६३७ ॥

भगवांस्तमभिप्रेत्य रथाङ्गाङ्कितपाणिना ।
परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः ॥ ६३८ ॥

संकर्षणश्च प्रणतमुपगुह्य महामनाः ।
गृहीत्वा पाणिना पाणी अनयत्सानुजो गृहम् ॥ ६३९ ॥

पृष्ट्वा सुस्वागतं तस्मै निवेद्य च वरासनम् ।
प्रक्षाल्य विधिवत्पादौ मधुपर्कार्हमाहरत् ॥ ६४० ॥

निवेद्य गां चातिथये संवाह्य श्रान्तमादृतः ।
अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः ॥ ६४१ ॥

तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् ।
मुखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात्पुनः ॥ ६४२ ॥

पप्रच्छ सत्कृतं नन्दः कथं स्थ निरनुग्रहे ।
कंसे जीवति दाशार्ह सौनपाला इवावयः ॥ ६४३ ॥

योऽवधीत्स्वस्वसुस्तोकान्क्रोशन्त्या आर्तवत्सलः ।
किं नु स्वित्तत्प्रजानां वः कुशलं विमृशामहे ॥ ६४४ ॥

इत्थं सूनृतया वाचा नन्देन सुसभाजितः ।
अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम् ॥ ६४५ ॥

[ भाग० १० ३८.१–४३ ]

---

637 c T पुलकाञ्चिताङ्ग for पुलकाञ्चित 640a T पृष्ट्वाथ स्वागतं तस्मै, d T मधुपर्काहँण for 'पर्कार्ह 644 b T असुनृप्सल for आर्तवत्सल..

श्रीशुक उवाच ।

सुखोपविष्टः पर्यङ्के रामकृष्णोरुमानितः ।
लेभे मनोरथान्सर्वान्पथि यान्स चकार ह ॥ ६४६ ॥

श्रीभगवानुवाच ।

तात सौम्यागतं कच्चित्स्वागतं भद्रमस्तु वः ।
अपि स्वज्ञातिबन्धूनामनमीवमनामयम् ॥ ६४७ ॥

किं नु नः कुशलं पृच्छे एधमाने कुलामये ।
कंसे मातुलनाम्न्यङ्ग स्वानां तस्य प्रजासु च ॥ ६४८ ॥

अहो अस्मदभूद्भूरि पित्रोर्वृजिनमार्ययोः ।
यद्धेतोः पुत्रमरणं यद्धेतोर्बन्धनं तयोः ॥ ६४९ ॥

दिष्ट्याद्य दर्शनं स्वानां मह्यं वः सौम्य काङ्क्षितम् ।
संजातं वर्ण्यतां तात तवागमनकारणम् ॥ ६५० ॥

[ श्रीशुक उवाच । ]

पृष्टो भगवता सर्वं वर्णयामास माधवः ।
वैरानुबन्धं यदुषु वसुदेववधोद्यमम् ॥ ६५१ ॥

यत्संदेशो यदर्थं वा दूतः संप्रेषितः स्वयम् ।
यदुक्तं नारदेनास्य स्वजन्मानकदुन्दुभेः ॥ ६५२ ॥

श्रुत्वाक्रूरवचः कृष्णो बलश्च परवीरहा ।
प्रहस्य नन्दं पितरं राज्ञादिष्टं विजज्ञतुः ॥ ६५३ ॥

गोपान्समादिशत्सोऽपि गृह्यतां सर्वगोरसः ।
उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च ॥ ६५४ ॥

यास्यामः श्वो यदुपुरीं दास्यामो नृपते रसान् ।
द्रक्ष्यामः सुमहत्पर्व यान्ति जानपदाः किल ।
एवमाघोषयत्क्षत्रा नन्दगोपश्च गोकुले ॥ ६५५ ॥

गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशम् ।
रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम् ॥ ६५६ ॥

काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः ।
स्रंसद्दुकूलवलयकेशग्रन्थ्यश्च काश्चन ॥ ६५७ ॥

---

648 *d* T स्वानां नन्तप्रजासु च　　655 *a* T मधुपुरीं for यदुपुरीं

अन्याश्च तदनुध्याननिवृत्ताशेषवृत्तयः ।
नाभ्यजानन्निमं लोकमात्मलोकं गता इव ॥ ६५८ ॥

स्मरन्त्यश्चापराः शौरेरनुरागस्मितेरिताः ।
हृदिस्पृशश्चित्रपदा गिरः संमुमुहुः स्त्रियः ॥ ६५९ ॥

गतिं सुललितां चेष्टां स्निग्धहासावलोकनम् ।
शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥ ६६० ॥

चिन्तयन्त्यो मुकुन्दस्य लीला विरहकातराः ।
समेताः संघशः प्रोचुरश्रुमुख्योऽच्युताशयाः ॥ ६६१ ॥

गोप्य ऊचुः ।

अहो विधातस्तव न क्वचिद्दया
संयोज्य मैत्र्या प्रणयेन देहिनः ।
तांश्चाकृतार्थान्वियुनङ्क्ष्यपार्थकं
विचेष्टितं तेऽर्भकचेष्टितं यथा ॥ ६६२ ॥

यस्त्वं प्रदर्श्यासितकुन्तलावृतं
मुकुन्द वक्त्रं सुकपोलमुन्नसम् ।
शोकापनोदस्मितलेशसुन्दरं
करोषि पारोक्ष्यमसाधु ते कृतम् ॥ ६६३ ॥

क्रूरस्त्वमक्रूरसमाख्यया स्म न-
श्चक्षुर्हि दत्तं हरसे बताज्ञवत् ।
येनैकदेशेऽखिलसर्गसौष्ठवं
त्वदीयमद्राक्ष्म वयं मधुद्विषः ॥ ६६४ ॥

न नन्दसूनुः क्षणभङ्गसौहृदः
समीक्षते नः स्वकृतातुरा बत ।
विहाय गेहान्स्वजनान्सुतान्पतीं-
स्तद्दास्यमद्धोपगता नवप्रियः ॥ ६६५ ॥

सुखं प्रभाता रजनीयमाशिष-
सत्या बभूवुः पुरयोषितां ध्रुवम् ।
याः संप्रविष्टस्य मुखं व्रजस्पतेः
पास्यन्त्यपाङ्गोत्कलितस्मितासवम् ॥ ६६६ ॥

---

661 *b* A भीता for लीला  665 *b* T स्वकृतानुरा बत for स्वकृतातुरा बत .

तासां मुकुन्दो मधुमञ्जुभाषितै-
र्गृहीतचित्तः परवाम्मनस्व्यपि ।
कथं पुनर्नः प्रतियास्यतेऽबलाः
ग्राम्याः सलज्जस्मितविभ्रमैर्भ्रमन् ॥ ६६७ ॥

अद्य ध्रुवं तत्र दृशो भविष्यते
दाशार्हभोजान्धकवृष्णिसात्त्वताम् ।
महोत्सवः श्रीरमणं गुणास्पदं
द्रक्ष्यन्ति ये चाध्वनि देवकीसुतम् ॥ ६६८ ॥

मैतद्विधस्याकरुणस्य नाम भू-
दक्रूर इत्येतदतीव दारुणः ।
योऽसावनाश्वास्य सुदुःखितं जनं
प्रियात्प्रियं नेष्यति पारमध्वनः ॥ ६६९ ॥

अनार्द्रधीरेष समास्थितो रथं
तमन्वमी च त्वरयन्ति दुर्मदाः ।
गोपा अनोभिः स्थविरैरुपेक्षितं
दैवं च नोऽद्य प्रतिकूलमीहते ॥ ६७० ॥

निवारयामः समुपेत्य माधवं
किं नोऽकरिष्यन्कुलवृद्धबान्धवाः ।
मुकुन्दसङ्गान्निमिषार्धदुस्त्यजा-
द्दैवेन विध्वंसितदीनचेतसाम् ॥ ६७१ ॥

यस्यानुरागललितस्मितवल्गुमन्त्र-
लीलावलोकपरिरम्भणरासगोष्ठ्याम् ।
नीताः स्म नः क्षणमिव क्षणदा विना तं
गोप्यः कथं न्वतितरेम तमो दुरन्तम् ॥ ६७२ ॥

योऽह्नः क्षये व्रजमनन्तसखः परीतो
गोपैर्विशन्खुररजश्छुरितालकस्रक् ।
वेणुं क्वणन्स्मितकटाक्षनिरीक्षणेन
चित्तं क्षिणोत्यमुमृते नु कथं भवेम ॥ ६७३ ॥

[ श्रीशुक उवाच । ]

एवं ब्रुवाणा विरहातुरा भृशं
व्रजस्त्रियः कृष्णविषक्तमानसाः ।
विसृज्य लज्जां रुरुदुः स्म सुस्वरं
गोविन्द दामोदर मा त्यजास्मान् ॥ ६७४ ॥

[ भाग० १० ३९.१–३१ ]

[ क्रूरमक्रूरतः श्रुत्वा कंसं कंसनिपूदनः ।
गोपीमनोरथारामः सरामः स्वपुरं ययौ ॥ ६७५ ॥ ]

स्त्रीणामेवं रुदन्तीनामुदिते सवितर्यथ ।
अक्रूरश्चोदयामास कृतमैत्रादिको रथम् ॥ ६७६ ॥

गोपास्तमन्वसज्जन्त नन्दाद्याः शकटैस्ततः ।
आदायोपायनं भूरि कुम्भान्गोरससंभृतान् ॥ ६७७ ॥

गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः ।
प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे ॥ ६७८ ॥

तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः ।
सान्त्वयामास संप्रेमैरायास्य इति दौत्यकैः ॥ ६७९ ॥

यावदालक्ष्यते केतुर्यावद्रेणू रथस्य च ।
अनुप्रस्थापितात्मानो लेख्यानीवोपतस्थिरे ॥ ६८० ॥

ता निराशा निववृतुर्गोविन्दविनिवर्तने ।
विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम् ॥ ६८१ ॥

भगवानपि संप्राप्तो रामाक्रूरयुतो नृप ।
रथेन वायुवेगेन कालिन्दीमघनाशिनीम् ॥ ६८२ ॥

तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम् ।
वृक्षखण्डमुपव्रज्य सरामो रथमाविशत् ॥ ६८३ ॥

अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि ।
कालिन्द्यास्तीरमागत्य स्नानं विधिवदाचरत् ॥ ६८४ ॥

निमज्ज्य तस्मिन्सलिले जपन्ब्रह्म सनातनम् ।
तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥ ६८५ ॥

---

674 T माधवेति for मा त्यजास्मान्   675 Found in श्रीधरी टीका.
684c T इदं for तीरं

तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः ।
तर्हि तौ स्यन्दने न स्त इत्युन्मज्य व्यचष्ट सः ॥ ६८६ ॥

तत्रापि च यथापूर्वमासीनौ पुनरेव सः ।
निमज्य दर्शनं यन्मे मृषा किं सलिले तयोः ॥ ६८७ ॥

[ भाग० १०·३९·३२–४३ ]

[ केमौ बालौ क्व तौ मल्लाविति शङ्कितचेतसे ।
अक्रूराय जले रूपमत्याश्चर्यं व्यदर्शयत् ॥ ६८८ ॥ ]

भूयस्तत्रापि सोऽद्राक्षीत्स्तूयमानमहीश्वरम् ।
सिद्धैर्भुजंगपतिभिरसुरैर्नतकंधरैः ॥ ६८९ ॥

सहस्रशिरसं देवं सहस्रफणमौलिनम् ।
नीलाम्बरं विसश्वेतं शृङ्गैः श्वेतमिव स्थितम् ॥ ६९० ॥

तस्योत्सङ्गे घनश्यामं पीतकौशेयवाससम् ।
पुरुषं चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणम् ॥ ६९१ ॥

चारुप्रसन्नवदनं चारुहासनिरीक्षणम् ।
सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥ ६९२ ॥

प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम् ।
कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम् ॥ ६९३ ॥

बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् ।
चारुजानुयुगं चारुजङ्घायुगलसंयुतम् ॥ ६९४ ॥

तुङ्गगुल्फारुणनखव्रातदीधितिभिर्नृप ।
नवाङ्गुल्यङ्गुष्ठदलैर्विलसत्पादपङ्कजम् ॥ ६९५ ॥

सुमहार्हमणिव्रातकिरीटकटकाङ्गदैः ।
कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥ ६९६ ॥

भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ६९७ ॥

सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः ।
सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥ ६९८ ॥

---

686c T स्थितौ for तौ  688 The source is not traced, not found in श्रीधरी टीका  689c T सिद्धचारणगन्धर्वै  692a T प्रसन्नचारुवदनं  695b T द्दस for नृप  698d T नवभिश्च for नुवद्भिश्च

प्रह्लादनारदवसुमुखैर्भागवतोत्तमैः ।
स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः ॥ ६९९ ॥

श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ।
विद्ययाविद्यया शक्त्या मायया च निषेवितम् ॥ ७०० ॥

विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः ।
हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥ ७०१ ॥

गिरा गद्गदयास्तौषीत्सत्त्वमालम्ब्य सात्त्वतः ।
प्रणम्य मूर्ध्नावहितः कृताञ्जलिपुटः शनैः ॥ ७०२ ॥

[ भाग. १०.३९.४४–५७ ]

अथ सूची ॥

मग्नः पाथसि यामुने जगदिदं दृष्ट्वा हरावादरा-
दुन्मग्नः पुरतः स्थिताय हरये दत्वा दृशं विस्मितः ।
अक्रूरः शुभकर्मणः परिणतेरालोक्य पादाम्बुजं
श्रीकृष्णस्य ननाम गद्गदगिरा तुष्टाव हृष्यन्तरः ॥ ७०३ ॥

आरुह्याक्रूरतुभं रथमथ मथुरां प्रस्थितौ दिव्यमूर्ती
सानन्दौ नन्दसूनू सपदि दिनपतौ लम्बमाने प्रतीचीम् ।
सद्यः संभ्रान्तचित्ता पथि पथि सुदृशश्चक्षुरुत्पक्ष्म कृत्वा
गत्वा तद्वक्त्रकान्तिं ययुरथ पुलकद्वण्डपाल्योऽवतस्थुः ॥ ७०४ ॥

अथ श्रीभागवते ॥

तावद्व्रजौकसस्तत्र नन्दगोपादयोऽग्रतः ।
पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे ॥ ७०५ ॥

तान्समेत्याह भगवानक्रूरं जगदीश्वरः ।
गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥ ७०६ ॥

भवान्प्रविशतामग्रे सहयानः पुरीं गृहम् ।
वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥ ७०७ ॥

अक्रूर उवाच ।

नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो ।
त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥ ७०८ ॥

आगच्छ याम गेहान्नः सनाथान्कुर्वधोक्षज ।
सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तम ॥ ७०९ ॥

पुनीहि पादरजसा गृहान्नो गृहमेधिनाम् ।
यच्छौचेनानुतृप्यन्ति पितरः साग्नयः सुराः ॥ ७१० ॥

अवनिज्याङ्घ्रियुगलमासीच्छ्लोक्यो बलिर्महान् ।
ऐश्वर्यमतुलं लेभे गतिं चैकान्तिनां तु या ॥ ७११ ॥

आपस्तेऽप्यवनेजिन्यस्त्रींल्लोकाञ्शुचयोऽपुनन् ।
शिरसाधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥ ७१२ ॥

देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ।
यदूत्तमोत्तमश्लोक नारायण नमोऽस्तु ते ॥ ७१३ ॥

श्रीभगवानुवाच ।

आयास्ये भवतो गेहमहमार्यसमन्वितः ।
यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम् ॥ ७१४ ॥

एवमुक्तो भगवता सोऽक्रूरो विमना इव ।
पुरीं प्रविष्टः कंसाय कर्मावेद्य गृहं ययौ ॥ ७१५ ॥

[ भाग० १०.४१.८–१८ ]

अथ सूची ॥

प्राकारैर्मेरुसारैर्जलनिधिगुरुभिः खातगर्तैरुपेतां
हेम्नां हर्म्यैर्विचित्रैर्मरकतमणिभिः सर्वतः शोभमानाम् ।
साकं गोपालमुख्यैः स्मितसुभगमुखैः प्रोद्यदानन्दसान्द्रौ
कान्तौ कीर्त्यापराह्णे रुचिरमधुपुरीं प्रापतू रामकृष्णौ ॥ ७१६ ॥

काश्चित्पर्यस्तनीव्यः श्रुतिकमलगलत्कुण्डलोद्घृष्टगण्डाः
काश्चिद्व्यत्यस्तभूषाः प्रतिपदविगलत्कुन्तलालोलमल्लयः ।
श्रुत्वा श्रीरामकृष्णावतिचपलदृशो निर्ययुस्तत्पदाब्ज-
द्वन्द्वव्यासक्तचित्ताः सपदि निजनिजं सद्म हित्वा तरुण्यः ॥७१७॥

अथ श्रीभागवते ॥

प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः ।
अभ्यवर्षन्सौमनस्यैः प्रमदा बलकेशवौ ॥ ७१८ ॥

दध्यक्षतैः सोदपात्रैः स्रग्गन्धैरभ्युपायनैः ।
तावानर्चुः प्रमुदितास्तत्र तत्र द्विजातयः ॥ ७१९ ॥

ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत् ।
या ह्येतावनुपश्यन्ति नरलोकमहोत्सवौ ॥ ७२० ॥

रजकं कंचिदायान्तं रङ्गकारं गदाग्रजः ।
दृष्ट्वायाचत वासांसि धौतान्यत्युत्तमानि च ॥ ७२१ ॥

देह्यावयोः समुचितान्यङ्ग वासांसि चार्हतोः ।
भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥ ७२२ ॥

स याचितो भगवता परिपूर्णेन सर्वतः ।
साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥ ७२३ ॥

[ रजक उवाच । ]

ईदृशान्येव वासांसि नित्यं गिरिवनेचराः ।
परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सत ॥ ७२४ ॥

याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा ।
बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राजकुलानि हि ॥ ७२५ ॥

एवं विकत्थमानस्य कुपितो देवकीसुतः ।
रजकस्य कराग्रेण शिरः कायादपाहरत् ॥ ७२६ ॥

तस्यानुजीविनः सर्वे वासःकोशान्विसृज्य वै ।
दुद्रुवुः सर्वतोमार्गं वासांसि जगृहेऽच्युतः ॥ ७२७ ॥

वसित्वात्मप्रिये वस्त्रे कृष्णः संकर्षणस्तथा ।
शेषाण्यदत्त गोपेभ्यो विसृज्य भुवि कानि च ॥ ७२८ ॥

ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत् ।
विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः ॥ ७२९ ॥

नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः ।
स्वलंकृतौ बालगजौ पर्वणीव सितेतरौ ॥ ७३० ॥

तस्य प्रसन्नो भगवान्प्रादात्सारूप्यमात्मनः ।
श्रियं च परमां लोके बलैश्वर्यस्मृतीन्द्रियम् ॥ ७३१ ॥

ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः ।
तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥ ७३२ ॥

तयोरासनमानीय पाद्यं चार्घ्यार्हणादिभिः ।
पूजां सुभगयोश्चक्रे स्रक्ताम्बूलानुलेपनैः ॥ ७३३ ॥

---

726d T अपातयत् for अपाहरत् 728d T कानिचित् for कानि च.
733c T सानुगयो for सुभगयो

प्राह नः सार्थकं जन्म पावितं च कुलं विभो ।
पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥ ७३४ ॥

भवन्तौ किल विश्वस्य जगतः कारणं परम् ।
अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥ ७३५ ॥

न हि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः ।
समयोः सर्वभूतेषु भजतोऽभजतोरपि ॥ ७३६ ॥

तावाज्ञापयतं भृत्यं किमहं करवाणि वाम् ।
पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥ ७३७ ॥

इत्यभिप्रेत्य राजेन्द्र सुदामा प्रीतमानसः ।
शस्तैः सुगन्धैः कुसुमैर्माला विरचिता ददौ ॥ ७३८ ॥

ताभिः स्वलंकृतौ प्रीतौ कृष्णरामौ सहानुगौ ।
प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥ ७३९ ॥

सोऽपि वव्रेऽचलां भक्तिं हरावेवाखिलात्मनि ।
तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥ ७४० ॥

इति तस्मै वरान्दत्वा श्रियं चान्वयवर्धिनीम् ।
बलमायुर्यशः कान्तिं निर्जगाम सहाग्रजः ॥ ७४१ ॥

[ भाग. १०.४१ ३९–५२ ]

[ श्रीशुक उवाच । ]

अथ व्रजन्राजपथेन माधवः
स्त्रियं गृहीताङ्गविलेपभाजनाम् ।
विलोक्य कुब्जां युवतीं वराननां
पप्रच्छ यान्तीं प्रहसन्रसप्रदः ॥ ७४२ ॥

का त्वं वरोर्वेतदु हानुलेपनं
कस्याङ्गने वा कथयस्व साधु नः ।
देह्यावयोरङ्गविलेपमुत्तमं
श्रेयस्ततस्ते नचिराद्भविष्यति ॥ ७४३ ॥

---

740 *b* T सस्मिसैव *far* हरावेव

सैरन्ध्र्युवाच ।

दास्यस्म्यहं सुन्दर वर्यसंमता
त्रिवक्रनामा ह्यनुलेपकर्मणि ।
मद्भावितं भोजपतेरतिप्रियं
विना युवां कोऽन्यतमस्तदर्हति ॥ ७४४ ॥

रूपपेशलमाधुर्यहसितालापवीक्षितैः ।
धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ७४५ ॥

ततस्तावङ्गरागेण स्ववर्णेतरशोभिना ।
संप्राप्तपरभागेन शुशुभातेऽनुरञ्जितौ ॥ ७४६ ॥

प्रसन्नो भगवान्कुब्जां त्रिवक्रां रुचिराननाम् ।
ऋज्वीं कर्तुं मनश्चक्रे दर्शयन्दर्शने फलम् ॥ ७४७ ॥

पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुल्युत्तानपाणिना ।
प्रगृह्य चिबुकेऽध्यात्ममुदनीनमदच्युतः ॥ ७४८ ॥

सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा ।
मुकुन्दस्पर्शनात्सद्यो बभूव प्रमदोत्तमा ॥ ७४९ ॥

ततो रूपगुणौदार्यसंपन्ना प्राह केशवम् ।
उत्तरीयान्तमाकृष्य स्मयन्ती जातहृच्छया ॥ ७५० ॥

एहि वीर गृहं यामो न त्वां त्यक्तुमिहोत्सहे ।
त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ ॥ ७५१ ॥

एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः ।
मुखं वीक्ष्यानुगानां च प्रहसंस्तामुवाच ह ॥ ७५२ ॥

[ कृष्ण उवाच । ]

एष्यामि ते गृहं सुभ्रु पुंसामाधिविकर्शनम् ।
साधितार्थोऽगृहाणां नः पान्थानां त्वं परायणम् ॥ ७५३ ॥

विसृज्य माध्व्या वाण्या तां व्रजन्मार्गे वणिक्पथैः ।
नानोपायनताम्बूलस्रग्गन्धैः साग्रजोऽर्चितः ॥ ७५४ ॥

---

744*a* T सुन्दर संमसंमता. T notes our reading; it also gives v. l. सैऽग्रवर्यसंमता.

तद्दर्शनस्मरक्षोभादात्मानं नाविदन्स्त्रियः ।
विस्रस्तवासःकबरवलयालेख्यमूर्तयः ॥ ७५५ ॥

[ वयं मल्ला इह प्राप्ता धनुर्मखदिदृक्षया । ]
हे पौराः कथ्यतां शीघ्रमपृच्छचैतदच्युतः ॥ ७५६ ॥

ततः पौरान्पृच्छमानो धनुषः स्थानमच्युतः ।
[ भगवान्मल्लवेषेण गोपैः परिवृतस्तदा ॥ ७५७ ॥ ]

तस्मिन्प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ।
पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत् ।
वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे ॥ ७५८ ॥

करेण वामेन सलीलमुद्धृतं
सज्यं च कृत्वा निमिषेण पश्यताम् ।
नृणां विकृष्य प्रबभञ्ज मध्यतो
यथेक्षुदण्डं मदकर्युरुक्रमः ॥ ७५९ ॥

धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः ।
पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ॥ ७६० ॥

तद्रक्षिणः सानुचराः कुपिता आततायिनः ।
ग्रहीतुकामा आवव्रुर्गृह्यतां वध्यतामिति ॥ ७६१ ॥

अथ तान्दुरभिप्रायान्विलोक्य बलकेशवौ ।
क्रुद्धौ धन्वन आदाय शकलैस्तांश्च जघ्नतुः ॥ ७६२ ॥

बलं च कंसप्रहितं हत्वा शालामुखात्ततः ।
निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसंपदः ॥ ७६३ ॥

तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः ।
तेजः प्रागल्भ्यरूपं च मेनिरे विबुधोत्तमौ ॥ ७६४ ॥

तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान् ।
कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः ॥ ७६५ ॥

गोप्यो मुकुन्दविगमे विरहातुरा या
आशासताशिष ऋता मधुपुर्यभूवन् ।
संपश्यतां पुरुषभूषणगात्रलक्ष्मीं
हित्वेतरान्नु भजतश्चकमेऽयनं श्रीः ॥ ७६६ ॥

---

751 not found in T.　　757 *cd* Not found in T.

अवनिक्ताङ्घ्रियुगलौ भुक्त्वा क्षीरोपसेचनम् ।
ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् ॥ ७६७ ॥

कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च ।
वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥ ७६८ ॥

दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ।
बहून्याचष्टोभयथा मृत्योर्दौत्यकराणि च ॥ ७६९ ॥

अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि ।
असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥ ७७० ॥

छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ।
स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥ ७७१ ॥

स्वप्ने प्रेतपरिष्वङ्गः खरयानं विषादनम् ।
यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगम्बरः ॥ ७७२ ॥

अन्यानि चेत्थंभूतानि स्वप्नजागरितानि च ।
पश्यन्मरणसंत्रस्तो निद्रां लेभे न चिन्तया ॥ ७७३ ॥

व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते ।
कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ॥ ७७४ ॥

आनर्चुः पुरुषा रङ्गं तूर्यभेर्यश्च जघ्निरे ।
मञ्चाश्चालंकृताः स्रग्भिः पताकाचैलतोरणैः ॥ ७७५ ॥

तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः ।
यथोपजोषं विविशु राजानश्च कृतासनाः ॥ ७७६ ॥

[ अन्तःपुराणां मञ्चाश्च तथान्ये परिकल्पिताः ।
अन्ये च वारमुख्यानां अन्ये वै चारुयोषिताम् ॥ ७७७ ॥ ]

अक्रूरवसुदेवौ च मञ्चप्रान्ते व्यवस्थितौ ।
कंसः परिवृतोऽमात्यै राजमञ्च उपाविशत् ।
मण्डलेश्वरमध्यस्थो हृदयेन विदूयता ॥ ७७८ ॥

वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च ।
मल्लाः स्वलंकृता दृप्ताः सोपाध्यायाः समाविशन् ॥ ७७९ ॥

चाणूरो मुष्टिकः कूटः शलस्तोसल एव च ।
त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥ ७८० ॥

---

777 Not found in T 779*d* T समासत for समाविशन्. T notes our reading as v. l.

नन्दगोपादयो गोपा भोजराजसमाहुताः ।
निवेदितोपायनास्ते एकस्मिन्मञ्च आविशन् ॥ ७८१ ॥

[ भाग० १०.४२.१–३८ ]

अथ सूची ॥

मञ्चानुच्चान्कनकरुचिरान्स्राविणः सत्पताका-
स्सौम्यान्रम्यान्धवलरुचिभिस्तोरणानां कलापैः ।
मध्येरङ्गं घटनपटुभिश्चारु निर्माय कंसो
राज्ञः स्थातुं तदुपरि यथायोग्यमेवादिदेश ॥ ७८२ ॥

उत्तालैर्मल्लतालैः प्रलयघनघटाघोरसंघट्टभीमै-
र्भेरीभांकाररावैः प्रतिपदविलसन्मत्तमातङ्गनादैः ।
ग्रस्यत्पाताललोकं क्षुभितसुरपुरं व्यस्तदिक्चक्रवालं
तत्कालं मल्ललीलापरिहृतहृदयो भोजराजश्चकार ॥ ७८३ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

अथ कृष्णश्च रामश्च कृतशौचौ परंतप ।
मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥ ७८४ ॥

रङ्गद्वारं समासाद्य तस्मिन्नागमवस्थितम् ।
अपश्यत्कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम् ॥ ७८५ ॥

बद्ध्वा परिकरं शौरिः समुह्य कुटिलालकान् ।
उवाच हस्तिपं वाचा मेघनादगभीरया ॥ ७८६ ॥

अम्बष्ठाम्बष्ठ मार्गं नो देह्यपक्रम माचिरम् ।
नो चेत्सकुञ्जरं त्वाद्य नयामि यमसादनम् ॥ ७८७ ॥

एवं निर्भर्त्सितोऽम्बष्ठः कुपितः कोपितं गजम् ।
चोदयामास कृष्णाय कालान्तकयमोपमम् ॥ ७८८ ॥

करीन्द्रस्तमभिद्रुत्य करेण तरसाग्रहीत् ।
कराद्विगलितः सोऽमुं निहत्याङ्घ्रिष्वलीयत ॥ ७८९ ॥

संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् ।
परामृशत्पुष्करेण स प्रसह्य विनिर्गतः ॥ ७९० ॥

पुच्छे प्रगृह्यातिबलं धनुषः पञ्चविंशतिम् ।
विचकर्ष यथा नागं सुपर्ण इव लीलया ॥ ७९१ ॥

स पर्यावर्तमानेन सव्यदक्षिणतोऽच्युतः ।
बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः ॥ ७९२ ॥

ततोऽभिमुखमभ्येत्य पाणिनाहत्य वारणम् ।
प्राद्रवत्पातयामास स्पृश्यमानः पदे पदे ॥ ७९३ ॥

स धावन्क्रीडया भूमौ पतित्वा सहसोत्थितः ।
तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत्क्षितिम् ॥ ७९४ ॥

स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षितः ।
चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद्रुषा ॥ ७९५ ॥

तमायान्तं समासाद्य भगवान्मधुसूदनः ।
निगृह्य पाणिना हस्तं पातयामास भूतले ॥ ७९६ ॥

पतितस्य पदाक्रम्य मृगेन्द्र इव लीलया ।
दन्तमुत्पाट्य तेनेभं हस्तिपांश्चाहनद्धरिः ॥ ७९७ ॥

मृतकं द्विपमुत्सृज्य दन्तपाणिः समाविशत् ।
अंसन्यस्तविषाणोऽसृङ्मदबिन्दुभिरङ्कितः ।
विरूढस्वेदकणिकावदनाम्बुरुहो बभौ ॥ ७९८ ॥

वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ ।
रङ्गं विविशतू राजन्गजदन्तवरायुधौ ॥ ७९९ ॥

मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमा-
न्गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः ॥ ८०० ॥

हतं कुवलयापीडं मत्वा तावपि दुर्जयौ ।
कंसो मनस्यपि तदा भृशमुद्विविजे नृप ॥ ८०१ ॥

तौ रेजतू रङ्गगतौ महाभुजौ
विचित्रवेषाभरणस्रगम्बरौ ।
यथा नटावुत्तमवेषधारिणौ
मनः क्षिपन्तौ प्रभया निरीक्षताम् ॥ ८०२ ॥

---

796a T समापतन्तमासाद्य. 801 b T दृष्ट्वा for मत्वा

निरीक्ष्य तावुत्तमपूरुषौ जना
मञ्चस्थिता नागरराष्ट्रका नृप ।
प्रहर्षवेगोत्कलितेक्षणानना
पपुर्न तृप्ता नयनैस्तदाननम् ॥ ८०३ ॥

पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ।
जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः ॥ ८०४ ॥

ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् ।
तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥ ८०५ ॥

एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि ।
अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥ ८०६ ॥

एष वै किल देवक्यां जातो नीतश्च गोकुलम् ।
कालमेतं वसन्गूढो ववृधे नन्दवेश्मनि ॥ ८०७ ॥

पूतनानेन नीतान्तं चक्रवातश्च दानवाः ।
अर्जुनौ धेनुकः केशी गुह्यकोऽन्ये च तद्विधाः ॥ ८०८ ॥

गावः सपाला एतेन दावाग्नेः परिमोचिताः ।
कालियो दमितः सर्प इन्द्रश्च विमदः कृतः ॥ ८०९ ॥

सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना ।
वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥ ८१० ॥

गोप्योऽस्य नित्यमुदितहसितप्रेक्षणं मुखम् ।
पश्यन्त्यो विविधांस्तापांस्तरन्ति स्माश्रमं मुदा ॥ ८११ ॥

वदन्त्यनेन वंशोऽयं यदोः सुबहुविश्रुतः ।
श्रियं यशो महत्त्वं च लप्स्यते परिरक्षितः ॥ ८१२ ॥

अयं चैवाग्रजः श्रीमान्रामः कमललोचनः ।
प्रलम्बो निहतोऽनेन वत्सको ये बकादयः ॥ ८१३ ॥

जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च ।
कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥ ८१४ ॥

---

803*d* T तदा नृप for तदाननं 808*c* T गुदक for धेनुक, *d* T धेनुकोऽन्ये च for गुह्यकोऽन्ये च.

हे नन्दसूनो हे राम भवन्तौ वीर्यसंमतौ ।
नियुद्धकुशलौ श्रुत्वा राज्ञाहूतौ दिदृक्षुणा ॥ ८१५ ॥

[ भाग० १०.४३.१–३२ ]

नित्यं प्रमुदिता गोपा वत्सपाला यथा स्फुटम् ।
वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गाः ॥ ८१६ ॥

तस्माद्राज्ञः प्रियं यूयं वयं च करवामहे ।
भूतानि नः प्रसीदन्ति सर्वभूतमयो नृपः ॥ ८१७ ॥

तन्निशम्याब्रवीत्कृष्णो देशकालोचितं वचः ।
नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनन्द्य च ॥ ८१८ ॥

प्रजा भोजपतेरस्य वयं चापि वनेचराः ।
करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥ ८१९ ॥

बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् ।
भवेन्नियुद्धं माधर्मः स्पृशेन्मल्लसभासदः ॥ ८२० ॥

चाणूर उवाच ।

न बालो न किशोरस्त्वं बलश्च बलिनां वरः ।
लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥ ८२१ ॥

तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै ।
मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥ ८२२ ॥

[ भाग० १०.४३ ३४–४० ]

अथ सूची ॥

हत्वा शारिं द्विरदमतुलं दन्तमुत्पाट्य दोर्भ्या-
मंसे कृत्वा परिगलदसृग्बिन्दुभिर्भूषिताङ्गः ।
तत्रस्थाभिः पुरयुवतिभिः पीतवक्त्राम्बुजश्रीः
सश्रीरामः समगमदसौ रङ्गमध्यं मुकुन्दः ॥ ८२३ ॥

शृङ्गारी पुरनागरीषु विदुषां वृन्देऽद्भुतो वल्लव-
स्तोमे हास्यरसो नृपेषु बलवान्वीरः स्वपित्रोर्दया ।
भोजार्थादिभयानकोऽप्यविदुषां बीभत्सरूपो नृपो
शान्तो योगिषु वृष्णिराट् स्वयमसौ भक्त्याश्रयः प्राविशत् ॥८२४॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

एवं चर्चितसंकल्पो भगवान्मधुसूदनः ।
आससादाथ चाणूरं मुष्टिकं रोहिणीसुतः ॥ ८२५ ॥

हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः ।
विचकर्षतुरन्योन्यं प्रसह्य विजिगीषया ॥ ८२६ ॥

अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी ।
शिरः शीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः ॥ ८२७ ॥

परिभ्रमणविक्षेपपरिरम्भावपातनैः ।
उत्सर्पणापसर्पणैश्चान्योन्यं प्रत्यरुन्धताम् ॥ ८२८ ॥

उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि ।
परस्परं जिगीषन्तावपचक्रतुरात्मनः ॥ ८२९ ॥

तद्बलाबलवद्युद्धं समेताः सर्वयोषितः ।
ऊचुः परस्परं राजन्सानुकम्पा वरूथशः ॥ ८३० ॥

महानयं बताधर्म एषां राजसभासदाम् ।
ये बलाबलवद्युद्धं राज्ञोऽन्विच्छन्ति पश्यतः ॥ ८३१ ॥

क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसंनिभौ ।
क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ ॥ ८३२ ॥

[ क्व सप्तहायनौ बालौ क्वेमौ मल्लौ व्यवस्थितौ ।
महानयमधर्मो हि भूपतौ पश्यति स्वयम् ॥ ८३३ ॥ ]

धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत् ।
यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित् ॥ ८३४ ॥

[ अपरा ऊचुः । ]

न सभां प्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन् ।
अब्रुयन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते ॥ ८३५ ॥

वल्गतः शत्रुमभितः कृष्णस्य वदनाम्बुजम् ।
वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवाम्बुभिः ॥ ८३६ ॥

[ अन्या ऊचुः । ]

किं न पश्यत रामस्य मुखमाताम्रलोचनम् ।
मुष्टिकं प्रति सामर्षं हासंरम्भशोभनम् ॥ ८३७ ॥

---

833 Not found in T  837*d* T °शोभितं for °शोभन.

[ अन्या ऊचुः । ]

पुण्या बत व्रजभुवो यदयं नृलिङ्ग-
गूढः पुराणपुरुषो वनचित्रमाल्यः ।
गाः पालयन्सहबलः क्वणयंश्च वेणुं
विक्रीडयाञ्चति गिरित्ररमार्चिताङ्घ्रिः ॥ ८३८ ॥

गोप्यस्तपः किमचरन्यदमुष्य रूपं
लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ।
दृग्भिः पिबन्त्यनुसवाभिनवं दुरापं
एकान्तधाम यशसः श्रिय ईश्वरस्य ॥ ८३९ ॥

या दोहनेऽवहनने मथनोपलेप-
प्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ ।
गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो
धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः ॥ ८४० ॥

प्रातर्व्रजाद् व्रजत आविशतश्च सायं
गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ।
निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः
पश्यन्ति सस्मितमुखं सदयावलोकम् ॥ ८४१ ॥

एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो विभुः ।
शत्रुं हन्तुं मनश्चक्रे भगवान्भरतर्षभः ॥ ८४२ ॥

सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ ।
पितरावन्वतप्येतां पुत्रयोरबुधौ बलम् ॥ ८४३ ॥

तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ।
युयुधाते यथान्यायं तथैव बलमुष्टिकौ ॥ ८४४ ॥

भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ।
चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह ॥ ८४५ ॥

स श्येनवेग उत्पुत्य मुष्टीकृत्य करावुभौ ।
भगवन्तं वासुदेवं क्रुद्धो वक्षस्यबाधत ।
नाचलत्तत्प्रहारेण स्रग्भिर्हत इव द्विपः ॥ ८४६ ॥

838c T क्वणयश्च वेणुं 846a T उत्पत्य for उत्प्लुत्य. f T मालाहत for स्रग्भिर्हत.

[ जानुभिश्चात्मनिर्घोषैः शिरः शिरसि घट्टनैः ।
अशस्त्रमतिघोरं च तयोर्युद्धं सुदारुणम् ॥ ८४७ ॥

यावद्यावच्च चाणूरो युयुधे हरिणा सह ।
प्राणहानिमवापाग्र्यां (?) तावत्तावन्नवं नवम् ।
कृष्णोऽपि युयुधे तेन लीलयैव जगत्पतिः ॥८४८ ॥

बलक्षयं विवृद्धिं च दृष्ट्वा चाणूरकृष्णयोः ।
वारयामास तूर्याणि कंसः कोपपरायणः ॥ ८४९ ॥

मृदङ्गादिषु तूर्येषु प्रतिषिद्धेषु तत्क्षणात् ।
खे स्वागतानि वाद्यानि देवतूर्याण्यवादयन् ॥ ८५० ॥

जय गोविन्द चाणूरं जय केशव दानवम् ।
अन्तर्धानगता देव्यस्तदोचुस्ताः प्रहर्षिताः ॥ ८५१ ॥

चाणूरेण चिरं कालं क्रीडित्वा मधुसूदनः । ]
बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन्हरिः ।
भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् ।
विस्रस्ताकल्पकेशस्रगिन्द्रध्वज इवापतत् ॥ ८५२ ॥

तथैव मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै ।
बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥ ८५३ ॥

प्रवेपितः स रुधिरमुद्वमन्मुखतोऽर्दितः ।
व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥ ८५४ ॥

ततः कूटमनुप्राप्तो रामः प्रहरतां वरः ।
अवधील्लीलया राजन्सावज्ञं वाममुष्टिना ॥ ८५५ ॥

तर्ह्येव हि शलः कृष्णपदापहतशीर्षकः ।
द्विधा दीर्णस्तोशलक उभावपि निपेततुः ॥ ८५६ ॥

चाणूरे मुष्टिके कूटे शले तोशलके हते ।
शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥ ८५७ ॥

[ ]
गोपान्वयस्यानाकृष्य तैः संसृज्य विजह्रतुः ॥ ८५८ ॥

[ भाग० १०.४४.१–२९ ]

847–852 *ab* not found in T. 858 *ab* and 859 *ab* not found in T; subject of विजह्रतुः should be रामकृष्णौ.

[ ]
ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति ॥ ८५९ ॥
हतेषु मल्लवर्येषु विद्रुतेषु च भोजपट् ।
न्यवारयत्स्वतूर्याणि वाक्य चेदमुवाच ह ॥ ८६० ॥
निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ।
धनं हरत गोपाना नन्दं बध्नीत दुर्मतिम् ॥ ८६१ ॥
वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः ।
उग्रसेनः पिता चापि सानुगः परपक्षगः ॥ ८६२ ॥
एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः ।
लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत् ॥ ८६३ ॥
तमाविशन्तमालोक्य मृत्युमात्मन आसनात् ।
मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥ ८६४ ॥

तं खड्गपाणिं विचरन्तमाशु
श्येनं यथा दक्षिणसव्यमम्बरे ।
समग्रहीद्दुर्विषहोग्रतेजा
यथोरगं तार्क्ष्यसुतः प्रसह्य ॥ ८६५ ॥

प्रसह्य केशेषु चलत्किरीटं
निपात्य रङ्गोपरि तुङ्गमञ्चात् ।
तस्योपरिष्टात्स्वयमब्जनाभः
पपात विश्वाश्रय आत्मतन्त्रः ॥ ८६६ ॥

तं सम्परेतं विचकर्ष भूमौ
हरिर्यथेभं जगतो विपश्यतः ।
हाहेति शब्दः सुमहांस्तदाभू-
दुदीरितः सर्वजनैर्नरेन्द्र ॥ ८६७ ॥

स नित्यदोद्विग्नधिया तमीश्वरं
पिबन्वदन्वा विचरन्स्वपञ्श्वसन् ।
ददर्श चक्रायुधमग्रतो यत-
स्तदेव रूपं दुरवापमाप ॥ ८६८ ॥

तस्यानुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः ।
अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥ ८६९ ॥
तथातिरभसांस्तांस्तु संयत्तान्रोहिणीसुतः ।
अहन्परिघमुद्यम्य पशूनिव मृगाधिपः ॥ ८७० ॥

नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः।
पुष्पैः किरन्तस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः॥ ८७१ ॥

तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः।
तत्राभीयुर्विनिघ्नन्त्यः शीर्षाण्यश्रुविलोचनाः॥ ८७२ ॥

शयानान्वीरशय्यायां पतीनालिङ्ग्य शोचतीः।
विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः॥ ८७३ ॥

हा नाथ प्रिय धर्मज्ञ करुणानाथवत्सल।
त्वया हतेन निहता वयं ते सगृहप्रजाः॥ ८७४ ॥

त्वया विरहिता पत्या पुरीयं पुरुषर्षभ।
न शोभते वयमिव निवृत्तोत्सवमङ्गला॥ ८७५ ॥

अनागसां त्वं भूतानां कृतवान्द्रोहमुल्बणम्।
तेनेमां भो दशां नीतो भूत ध्रुक्को लभेत शम्॥ ८७६॥

सर्वेषामिह भूतानामेष हि प्रभवोऽप्ययः।
गोप्ता च तदवध्यायी न क्वचित्सुखमेधते॥ ८७७ ॥

श्रीशुक उवाच।

राजयोषित आश्वास्य भगवाँल्लोकपावनः।
यामाहुर्लौकिकीं संस्थां हतानां समकारयत्॥ ८७८ ॥

मातरं पितरं चैव मोचयित्वाथ बन्धनात्।
कृष्णरामौ ववन्दाते शिरसास्पृश्य पादयोः॥ ८७९ ॥

देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ।
कृतसंवादनौ पुत्रौ सस्वजाते नशङ्कितौ॥ ८८० ॥

[ प्रसह्य हत्वा हस्तीन्द्रं मल्लेन्द्राग्मल्ललीलया।
बीभत्सचरितं कंसं सबीभत्समारयत्॥ ८८१ ॥]

[ भाग. १०.४४.३०–५१ ]

अथ स्रग्धरा॥

नारीणामसमञ्जसाकुलहृदां दृक्पङ्कजैः पूजितः
पित्रोः प्रेमभयार्द्रगद्गदगिरा संरम्भसंवर्धितः।
चाणूरं भगवान्प्रलम्ब बलवांस्तं मुष्टिकं लीलया
निश्चेष्टं विदधे हठेन धरणीभारापहारक्षमः॥ ८८२ ॥

---

881 Found in श्रीधरी टीका.

दूरादाप्लुत्य कंसं करघलदसिकं केशपाशे गृहीत्वा
मञ्चादुत्थाप्य कोपस्फुरदुरुभुजभृद् भूमिपृष्ठे निपात्य ।
कृष्णः पश्यत्सु भूपेष्वतिमुदितमनाः कौतुकेनैव हत्वा
प्रादात्पादारविन्दद्वयनतपदवीमेष वः श्रेयसेऽस्तु ॥ ८८३ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः ।
मा भूदिति निजां मायां ततान जनमोहिनीम् ॥ ८८४ ॥

उवाच पितरावेत्य साग्रजः सात्वतर्षभः ।
प्रश्रयावनतः श्रीमानम्ब तातेति सादरम् ॥ ८८५ ॥

नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि ।
बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन्क्वचित् ॥ ८८६ ॥

न लब्धो दैवहतयोर्वासो नौ भवदन्तिके ।
यां बालाः पितृगेहस्था विन्दन्ते लालिता मुदम् ॥ ८८७ ॥

सर्वार्थसंभवो देहो जनितः पोषितो यतः ।
न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ ८८८ ॥

यस्तयोरात्मजः कल्प आत्मना च धनेन च ।
वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि ॥ ८८९ ॥

मातरं पितरं वृद्धं साध्वीं भार्यां सुतं शिशुम् ।
गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ॥ ८९० ॥

तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः ।
मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतोः ॥ ८९१ ॥

तत्क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः ।
अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥ ८९२ ॥

श्रीशुक उवाच ।

इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा ।
मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् ॥ ८९३ ॥

सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन चावृतौ ।
न किंचिदूचतू राजन्बाष्पकण्ठौ विमोहितौ ॥ ८९४ ॥

एवमाश्वास्य पितरौ भगवान्देवकीसुतः ।
मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ ८९५ ॥

आह चास्मान्महाराज प्रजा आज्ञप्तुमर्हसि ।
ययातिशापाद्यदुभिर्नासितव्यं नृपासने ॥ ८९६ ॥

मयि भृत्य उपासीने भवतो विबुधादयः ।
बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः ॥ ८९७ ॥

सर्वान्स्वज्ञातिसंबन्धान्दिग्भ्यः कंसभयाद्रुतान् ।
यदुवृष्ण्यन्धकमधुदाशार्हकुकुराश्वकान् ।
न्यवासयत्स्वगेहेषु वित्तैः संतर्प्य विश्वकृत् ॥ ८९८ ॥

कृष्णसंकर्षणभुजैर्गुप्ता लब्धमनोरथाः ।
गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥ ८९९ ॥

वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनाम्बुजम् ।
नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् ॥ ९०० ॥

[ भाग० १०.४५ १–१८ ]

अथ नन्दं समासाद्य भगवान्देवकीसुतः ।
संकर्षणश्च राजेन्द्र परिष्वज्येदमूचतुः ॥ ९०१ ॥

पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ।
पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥ ९०२ ॥

स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ।
शिशून्बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥ ९०३ ॥

यात यूयं व्रजं तात वयं च स्नेहदुःखितान् ।
ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥ ९०४ ॥

एवं सान्त्वय्य भगवान्नन्दं सव्रजमच्युतः ।
वासोलंकारकुप्याद्यैरर्हयामास सादरम् ॥ ९०५ ॥

इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः ।
पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥ ९०६ ॥

[ भाग० १०.४५.२०–२५ ]

---

898*b* T कंसभयाकुलान् for °भयाद्रुतान्. *d* T कुकुरादिकान् for कुकुराश्वकान्

अथ सूची ॥

शौरिः प्रीतमनाश्चकार सुतयो राजन्यवृत्तां क्रियां
गर्गेणाथ पुरोधसातिमहसा लक्षं गवां प्राददात् ।
सर्वज्ञावपि लौकिकीं गतिमितौ सांदीपनेरादरा-
द्विद्याभ्यासकृते बृहस्पतिमतेर्गेहं गुरोर्जग्मतुः ॥ १०७ ॥

तस्मादासाद्य विद्याः कतिपयदिवसैर्दक्षिणामर्थितः स्वां
तेन प्रीतः सुतं मे वितर करुणया भक्तिवश्यो मुकुन्दः ।
हत्वा शङ्खं पयोधौ यमनृपतिपुरीमेत्य विप्रस्य पुत्रं
नीत्वा प्रादादमुष्मै सपदि बलयुतः स्वां पुरीमाजगाम ॥ १०८ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा ।
शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥ १०९ ॥

तमाह भगवान्प्रेष्ठं भक्तमेकान्तिनं क्वचित् ।
गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥ ११० ॥

गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह ।
गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय ॥ १११ ॥

ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ।
ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम् ॥ ११२ ॥

मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ।
स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ॥ ११३ ॥

धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन ।
प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ॥ ११४ ॥

श्रीशुक उवाच ।

इत्युक्त उद्धवो राजन्संदेशान्भर्तुरादृतः ।
आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ॥ ११५ ॥

प्राप्तो नन्दव्रजं श्रीमान्निम्लोचति विभावसौ ।
छन्नयानः प्रविशतां पशूनां खुररेणुभिः ॥ ११६ ॥

वासितार्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः ।
धावन्तीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ॥ ११७ ॥

---

917 *a* T वासितार्थेऽभियुध्यद्भि . *c* T धावन्तीभिश्च वास्राभि

इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः।
गोदोहशब्दाभिरवं वेणूनां निस्वनेन च ॥ ९१८ ॥

गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः।
स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ९१९ ॥

अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः।
धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ ९२० ॥

सर्वतः पुष्पितवनं द्विजालिकुलनादितम्।
हंसकारण्डवाकीर्णं पद्मखण्डैश्च मण्डितम् ॥ ९२१ ॥

तमागतं समागम्य कृष्णस्यानुचरं प्रियम्।
नन्दः प्रीतः परिष्वज्य वासुदेवधियार्चयत् ॥ ९२२ ॥

भोजितं परमान्नेन संविष्टं कशिपौ सुखम्।
गतश्रमं पर्यपृच्छत्पादसंवाहनादिभिः ॥ ९२३ ॥

कच्चिदङ्ग महाभाग सखा नः शूरनन्दनः।
आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥ ९२४ ॥

दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना।
साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ ९२५ ॥

अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन्।
गोपान्व्रजं चात्मनाथं गावो वृन्दावनं गिरिम् ॥ ९२६ ॥

अथायास्यति गोविन्दः स्वजनान्सकृदीक्षितुम्।
हितं द्रक्ष्याम तद्वक्त्रं सुनासं सस्मितेक्षणम् ॥ ९२७ ॥

दावाग्नेर्वातवर्षाच्च विषसर्पाच्च रक्षिताः।
दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥ ९२८ ॥

स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षितम्।
हसितं भाषितं चाङ्ग सर्वा नः शिथिलाः क्रियाः ॥ ९२९ ॥

---

918c T °रवे for °रव  927c T तर्हि for हितं  d T घृस्मिते° for सस्मिते°

अथ सूची ॥

शौरिः प्रीतमनाश्चकार सुतयो राजन्यवृत्तां क्रियां
गर्गेणाथ पुरोधसातिमहसा लक्षं गवां प्राददात् ।
सर्वज्ञावपि लौकिकीं गतिमितौ सांदीपनेरादरा-
द्विद्याभ्यासकृते बृहस्पतिमतेर्गेहं गुरोर्जग्मतुः ॥ ९०७ ॥

तस्मादासाद्य विद्याः कतिपयदिवसैर्दक्षिणामर्थितः स्वां
तेन प्रीतः सुतं मे वितर करुणया भक्तिवश्यो मुकुन्दः ।
हत्वा शङ्खं पयोधौ यमनृपतिपुरीमेत्य विप्रस्य पुत्रं
नीत्वा प्रादादमुष्मै सपदि बलयुतः स्वां पुरीमाजगाम ॥ ९०८ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा ।
शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥ ९०९ ॥

तमाह भगवान्प्रेष्ठं भक्तमेकान्तिनं क्वचित् ।
गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥ ९१० ॥

गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमावह ।
गोपीनां मद्वियोगाधिं मत्संदेशैर्विमोचय ॥ ९११ ॥

ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ।
ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम् ॥ ९१२ ॥

मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ।
स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ॥ ९१३ ॥

धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन ।
प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ॥ ९१४ ॥

श्रीशुक उवाच ।

इत्युक्त उद्धवो राजन्संदेशाम्भर्तुरादृतः ।
आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ॥ ९१५ ॥

प्राप्तो नन्दव्रजं श्रीमान्निम्लोचति विभावसौ ।
छन्नयानः प्राविशतां पशूनां खुररेणुभिः ॥ ९१६ ॥

वासितार्थे नियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः ।
धावन्तीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ॥ ९१७ ॥

---

917 a T वासितार्थेऽभियुध्यद्भिः; c T धावन्तीभिश्च वास्राभिः.

इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः।
गोदोहशब्दाभिरवं वेणूनां निस्वनेन च ॥ ९१८ ॥

गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः।
स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ९१९ ॥

अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः।
धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ ९२० ॥

सर्वतः पुष्पितवनं द्विजालिकुलनादितम्।
हंसकारण्डवाकीर्णं पद्मखण्डैश्च मण्डितम् ॥ ९२१ ॥

तमागतं समागम्य कृष्णस्यानुचरं प्रियम्।
नन्दः प्रीतः परिष्वज्य वासुदेवधियार्चयत् ॥ ९२२ ॥

भोजितं परमान्नेन संविष्टं कशिपौ सुखम्।
गतश्रमं पर्यपृच्छत्पादसंवाहनादिभिः ॥ ९२३ ॥

कच्चिदङ्ग महाभाग सखा नः शूरनन्दनः।
आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥ ९२४ ॥

दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना।
साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ ९२५ ॥

अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन्।
गोपान्व्रजं चात्मनाथं गावो वृन्दावनं गिरिम् ॥ ९२६ ॥

अथायास्यति गोविन्दः स्वजनान्सकृदीक्षितुम्।
हि तं द्रक्ष्याम तद्वक्त्रं सुनासं सस्मितेक्षणम् ॥ ९२७ ॥

दावाग्नेर्वातवर्षाच्च विषसर्पाच्च रक्षिताः।
दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥ ९२८ ॥

स्मरतां कृष्णवीर्याणि लीलापाङ्गनिरीक्षितम्।
हसितं भाषितं चाङ्ग सर्वा नः शिथिलाः क्रियाः ॥ ९२९ ॥

---

918c T °रवे for °रव 927c T तर्हि for हि ते. d T घुस्मिते° for सस्मिते°.

सरिच्छैलवनोद्देशान्मुकुन्दपदभूषितान् ।
आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥ ९३० ॥

मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ ।
सुराणां महदर्थाय गर्गस्य वचनं यथा ॥ ९३१ ॥

कंसं नागायुतप्राणं मल्लौ गजपतिं तथा ।
अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥ ९३२ ॥

तालत्रयं महासारं धनुर्यष्टिमिवेभराट् ।
बभञ्जैकेन हस्तेन सप्ताहमदधाद्गिरिम् ॥ ९३३ ॥

प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो बकादयः ।
दैत्याः सुरासुरजितो हता येनेह लीलया ॥ ९३४ ॥

श्रीशुक उवाच ।

इति संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः ।
अश्रुकण्ठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः ॥ ९३५ ॥

यशोदा वर्ण्यमानानि पुत्रस्याचरितानि च ।
स्मरन्त्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा ॥ ९३६ ॥

तयोरित्थं भगवति कृष्णे नन्दयशोदयोः ।
वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा ॥ ९३७ ॥

उद्धव उवाच ।

युवां श्लाघ्यतमौ नूनं देहिनामिह मानद ।
नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥ ९३८ ॥

[ भाग० १०.४६.१–३०]

अथ सूचनम् ॥

नन्दस्यान्तिकमेत्य यादवपतेर्त्रैलोक्यहेतोर्हरेः
सानन्दं महिमानमुत्सुकमना जल्पन्गुणानादरात् ।
आश्वास्य प्रियवाचिकेन बहुशो नन्दं यशोदामपि
प्रीतः प्रेमनिरुद्धगद्गदगिरा निन्ये निशां उद्धवः ॥ ९३९ ॥

935c T अश्रुकण्ठो for अश्रुकण्ठो 936a T यशोदा वर्ण्यमानानि. c T शृण्वन्ती for स्मरन्ती.

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः
प्रलम्बबाहुं नवकञ्जलोचनम् ।
पीताम्बरं पुष्करमालिनं लस-
न्मुखारविन्दं परिमृष्टकुण्डलम् ॥ ९४० ॥

शुचिस्मिताः कोऽयमपीच्यदर्शनः
कुतश्च कस्याच्युतवेषभूषणः ।
इति स्म सर्वाः परिवव्रुरुत्सुका-
स्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥ ९४१ ॥

तं प्रश्रयेणावनताः सुसत्कृतं
प्रवृद्धहासेक्षणसूनृतादिभिः ।
रहस्यपृच्छन्नुपविष्टमासने
विज्ञाय संदेशहरं रमापतेः ॥ ९४२ ॥

गोप्य ऊचुः ।

जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् ।
भर्त्रेह प्रेषितः पित्रोर्भवान्प्रियचिकीर्षया ॥ ९४३ ॥

अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ।
स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ९४४ ॥

अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम् ।
पुंभिः स्त्रीषु कृता यद्वत्सुमनस्स्विव षट्पदैः ॥ ९४५ ॥

निःस्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः ।
अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ९४६ ॥

खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् ।
दग्धं मृगा यथारण्यं जारो भुक्त्वा रतां स्त्रियम् ॥ ९४७ ॥

इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः ।
कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः ॥ ९४८ ॥

गायन्त्यः प्रियकर्माणि रुदन्त्यो विगतह्रियः ।
तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥ ९४९ ॥

---

942b T मन्दहासेक्षण° for प्रवृद्धहासेक्षण°. 947c T यथारण्य for यथारण्यं.
948c T व्रजं याते for व्रजमायाते 949b T रुदत्यश्च गतह्रिय.

काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसंगमम् ।
प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ९५० ॥

मधुप कितवबन्धो मा स्पृशाङ्घ्रिं सपत्न्याः
कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः ।
वहतु मधुपतिस्तन्मानिनीनां प्रसादं
यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥ ९५१ ॥

सकृदधरसुधां स्वां मोहिनीं पाययित्वा
सुमनस इव सद्यस्तत्यजेऽस्मान्भवादृक् ।
परिचरति कथं तत्पादपद्मं नु पद्मा
ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥ ९५२ ॥

किमिह बहु षडङ्घ्रे गायसि त्वं यदूना-
मधिपतिमगृहाणामग्रतो नः पुराणम् ।
विजयसखसखीनां गीयतां तत्प्रसङ्गः
क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ ९५३ ॥

दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः
कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ।
चरणरज उपास्ते यस्य भूतिर्वयं का
अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ ९५४ ॥

विसृज शिरसि पादं वेद्म्यहं चाटुकारै-
रनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ।
स्वकृत इह विसृष्टापत्यपत्यन्यलोका
व्यसृजदकृतचेताः किं नु संधेयमस्मिन् ॥ ९५५ ॥

मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा
स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ।
बलिमपि बलिमत्त्वावेष्टयद् ध्वाङ्क्षवद्य-
स्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ ९५६ ॥

यदनुचरितलीलाकर्णपीयूषविप्रुट्-
सकृददनविधूतद्वन्द्वधर्मा विनष्टाः ।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना
बहव इह विहंगा भिक्षुचर्यां चरन्ति ॥ ९५७ ॥

वयमृतमिति जिह्मव्याहृतं श्रद्दधानाः
कुलिकरुतमिवोक्ताः कृष्णवध्वो हरिण्यः ।
ददृशुरसकृदेतत्तन्नखस्पर्शतीव्र-
स्मररुज उपमन्त्रिन्भण्यतामन्यवार्ता ॥ ९५८ ॥

प्रियसख पुनरागाः प्रेयसा प्रेषितः किं
वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ।
नयसि कथमिहास्मान्दुस्त्यजद्वन्द्वपार्श्वे
सततमुरसि सौम्य श्रीवधूः साकमास्ते ॥ ९५९ ॥

अपि बत मधुपुर्यामार्यपुत्रोऽधुनास्ते
स्मरति स पितृगेहान्सौम्य बन्धूंश्च गोपान् ।
क्वचिदपि स कथां नः किंकरीणां गृणीते
भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत्कदा नु ॥ ९६० ॥

[ भाग० १० ४७ १–२१ ]

अथ सूचनम् ॥

गोपीनामथ कृष्णमग्नमनसामाकर्ण्य तज्जल्पितं
सद्यः क्षुब्धमना वियोगविधुरास्ता हास्तुवन्नुद्धवम् ।
स्मृत्वा गद्गदया गिरा मधुरया तासां मनोऽमोदय-
त्संदिष्टानि वचांसि यानि हरिणा प्रोवाच तान्यादरात् ॥ ९६१ ॥

विश्वव्यापिनि विश्वकारिणि हरौ प्रायेण मग्नं मनो
युष्माकं मयि दूरगोऽपि गुरुणा भावेन तेन स्थिरम् ।
यामासाद्य निरन्तरेण नचिरेणानन्दकन्दायितं
यूयं योगिभिरप्यलभ्यमधुना नन्दन्तु यातव्यथाः ॥ ९६२ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ।
ता ऊचुरुद्धवं प्रीतास्तत्संदेशागतस्मृतीः ॥ ९६३ ॥

गोप्य ऊचुः ।

दिष्ट्याहितो हतः कंसो यदूनां सानुगोऽघकृत् ।
दिष्ट्या तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना ॥ ९६४ ॥

958 b T हसारा for हसोरा

[ अन्या ऊचुः । ]

काच्चिद्गदाग्रजः सौम्य करोति पुरयोषिताम् ।
प्रीतिं न. स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ९६५ ॥

[ अन्या ऊचुः । ]

कथं रतिविशेषज्ञः प्रियः स पुरयोषिताम् ।
नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुपूजितः ॥ ९६६ ॥

अपि स्मरति नः साधो गोविन्दः प्रस्तुते क्वचित् ।
गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथान्तरे ॥ ९६७ ॥

[ अन्या ऊचुः । ]

ताः किं निशाः स्मरति यासु तदा प्रियाभि-
र्वृन्दावने कुमुदकुन्दशशाङ्करम्ये
रेमे क्वणच्चरणनूपुररासगोष्ठ्या-
मस्माभिरीडितमनोज्ञकथः कदाचित् ॥ ९६८ ॥

अप्येष्यतीह दाशार्हस्तप्तास्सत्कृतया शुचा ।
संजीवयंश्च नो गात्रैर्यथेन्द्रो वनमम्बुदैः ॥ ९६९ ॥

[ अन्या ऊचुः । ]

कस्मात्कृष्ण इहायाति प्राप्तराज्यो हताहितः ।
नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः ॥ ९७० ॥

किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः ।
श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः ॥ ९७१ ॥

परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिङ्गला ।
तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ॥ ९७२ ॥

क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम् ।
अनिच्छतोऽपि यस्य श्रीरङ्कान्न च्यवते क्वचित् ॥ ९७३ ॥

सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ।
संकर्षणसहायेन कृष्णेनाचरिता प्रभो ॥ ९७४ ॥

पुनः पुनः स्मारयन्ति नन्दगोपसुतं बत ।
श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥ ९७५ ॥

---

966b T प्रियश्च परयोषिता  969b T स्वकृतया for सत्कृतया  973d T भङ्गात् for अङ्कात्

गत्या ललितयोदारहासलीलावलोकनैः ।
माध्व्या गिरा हृतधियः कथं तं विस्मरामहे ॥ ९७६ ॥

[ भाग० १०.४७.३८–५१ ]

श्रीशुक उवाच ।

ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वराः ।
उद्धवं पूजयांचक्रुर्ज्ञात्वात्मानमधोक्षजम् ॥ ९७७ ॥

उवास कतिचिन्मासान्गोपीनां विनुदञ्शुचः ।
कृष्णलीलाकथा गायन्रमयामास गोकुलम् ॥ ९७८ ॥

यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत्स उद्धवः ।
व्रजौकसां क्षणप्रायाण्यासन्कृष्णस्य वार्तया ॥ ९७९ ॥

सरिद्वनगिरिद्रोणीर्वीक्षन्कुसुमितद्रुमान् ।
कृष्णं संस्मारयन्रेमे हरिदासो व्रजौकसाम् ॥ ९८० ॥

दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवम् ।
उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ९८१ ॥

[ उद्धव उवाच । ]

एताः परं तनुभृतो ननु गोपवध्वो
गोविन्द एवमखिलात्मनि रूढभावाः ।
वाञ्छन्ति यं भवभियो मुनयो वयं च
किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ ९८२ ॥

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः
कृष्णे क्व चैष परमात्मनि रूढभावः ।
नन्वीश्वरो नु भजतो विदुषोऽपि साक्षा-
च्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ९८३ ॥

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ-
लब्धाशिषां य उदगाद् व्रजवल्लवीनाम् ॥ ९८४ ॥

---

976*d* T सद्विस्मरामहे for त विस्मरा°. 982 *a* T धुरि for ननु

आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ९८५ ॥
यद्वै श्रियार्चितमजादिभिराप्तकामै-
र्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ।
कृष्णस्य तद्भगवतः प्रपदारविन्दं
न्यस्तस्तनेषु विजहुः परिरभ्य तापम् ॥ ९८६ ॥
वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ९८७ ॥
श्रीशुक उवाच ।
अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च ।
गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥ ९८८ ॥
तं निर्गतं समासाद्य नानोपायनपाणयः ।
नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥ ९८९ ॥
मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः ।
वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥ ९९० ॥
कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ।
मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥ ९९१ ॥
एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप ।
उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥ ९९२ ॥
कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ।
वासुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ ९९३ ॥
[ भाग० १० ४७ ३८–६९ ]

अथ सूचनम् ॥

श्रीकृष्णः करुणाभरेण भगवानासाद्य कुब्जागृहं
रेमे कोटिमनोजसुन्दरतनुः संपाद्य तस्याः प्रियम् ।
श्रीरामेण सहोद्धवेन सहितो भूयो विमृष्यादरा-
दक्रूराश्रममाजगाम जगतामानन्दकन्दाङ्कुरः ॥ ९९४ ॥

---

986 *a* T या वै for यद्वै *c* T चरणारविन्द for प्रपदारविन्द, *d* T न्यस्तं स्तनेषु for न्यस्तस्तनेषु 991*d* T मतिर्नः for रतिर्नः

अक्रूरः प्रथमं प्रणम्य शिरसा पादारविन्दं द्वयो-
रानन्दाम्बुधिमध्यमग्नहृदयस्तुष्टाव तावादरात् ।
संतुष्टो भगवानमुष्य वचसा संस्तूय तत्संगमं
तस्मै स्मेरसरोजसुन्दरमुखः प्रोवाच किंचिन्मुदा ॥ ९९५ ॥

अथ श्रीभागवते ॥ श्रीभगवानुवाच ।

त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा ।
वयं तु रक्ष्याः पोष्याश्च अनुकम्प्याः प्रजा हि वः ॥ ९९६ ॥

भवद्विधा महाभागा निषेव्या अर्हसत्तमाः ।
श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न संशयः ॥ ९९७ ॥

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ९९८ ॥

स भवान्सुहृदां वै नः श्रेयान्श्रेयश्चिकीर्षया ।
जिज्ञासार्थं पाण्डवानां गच्छस्व गजसाह्वयम् ९९९ ॥

पितर्युपरते बालाः सह मात्रा सुदुःखिताः ।
आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥ १००० ॥

तेषु राजाम्बिकापुत्रो भ्रातृपुत्रेषु दीनधीः ।
समो न वर्तते नूनं स पुत्रवशगोऽन्धदृक् ॥ १००१ ॥

गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा ।
विज्ञाय तद्विधास्यामो यथा शं सुहृदां भवेत् ॥ १००२ ॥

इत्यक्रूरं समादिश्य भगवान्हरिरीश्वरः ।
संकर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥ १००३ ॥

[ भाग० १०.४८.२९–३६ ]

श्रीशुक उवाच ।

स गत्वा हास्तिनपुरं पौरवेन्द्रयशोङ्कितम् ।
ददर्श तत्राम्बिकेयं सभीष्मं विदुरं पृथाम् ॥ १००४ ॥

सहपुत्रं बाह्लिकं च भारद्वाजं सगौतमम् ।
कर्णं सुयोधनं द्रौणिं पाण्डवान्सुहृदोऽपरान् ॥ १००५ ॥

---

*999a* T वैन. for चैव; *d* T गच्छस्व त्वं गजाह्वयं. *1001d* T दुष्पुत्रवशगो for स पुत्रवशगो.

यथावदुपसंगम्य बन्धुभिर्गान्दिनीसुतः ।
संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥ १००६ ॥

उवास कतिचिन्मासान्राज्ञो वृत्तविवित्सया ।
दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः ॥ १००७ ॥

तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ।
प्रजानुरागं पार्थेषु नसहद्भिश्चिकीर्षितम् ॥ १००८ ॥

कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ।
आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥ १००९ ॥

पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् ।
उवाच जन्मनिलयं स्मरन्त्यश्रुकलेक्षणा ॥ १०१० ॥

अपि स्मरन्ति नः सौम्य पितरौ भ्रातरश्च माम् ।
भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥ १०११ ॥

भ्रात्रेयो भगवान्कृष्णः शरण्यो भक्तवत्सलः ।
पैतृष्वसेयान्स्मरति रामश्चाम्बुरुहेक्षणः ॥ १०१२ ॥

सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव ।
सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥ १०१३ ॥

कृष्ण कृष्ण महायोगिन्विश्वात्मन्विश्वभावन ।
प्रपन्नां पाहि गोविन्द शिशुभिश्चावसीदतीम् ॥ १०१४ ॥

नान्यत्तव पदाम्भोजात्पश्यामः शरणं नृणाम् ।
बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥ १०१५ ॥

नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ।
योगेश्वराय योगाय त्वामहं शरणं गता ॥ १०१६ ॥

[ श्रीशुक उवाच । ]

इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् ।
प्रारुदद्दुःखिता राजन्भवतां प्रपितामही ॥ १०१७ ॥

समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ।
सान्त्वयामासतुः कुन्तीं तत्पुत्रोत्पत्तिहेतुभिः ॥ १०१८ ॥

यास्यन्राजानमभ्येत्य विषमं पुत्रलालसम् ।
अवदत्सुहृदां मध्ये बन्धुभिः सौहृदोदितम् ॥ १०१९ ॥

अक्रूर उवाच ।

भो भो वैचित्रवीर्य त्वं कुरूणां कीर्तिवर्धन ।
भ्रातर्युपरते पाण्डावधुनासनमास्थितः ॥ १०२० ॥

धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रञ्जयन् ।
वर्तमानः समः स्वेषु श्रेयः कीर्तिमवाप्स्यसि ॥ १०२१ ॥

अन्यथा त्वाचरंल्लोके गर्हितो यास्यसे तमः ।
तस्मात्समत्वे वर्तस्व पाण्डवेष्वात्मजेषु च ॥ १०२२ ॥

नेह चात्यन्तसंवासः कस्यचित्केनचित्सह ।
राजन्स्वेनापि देहेन किमु जायात्मजादिभिः ॥ १०२३ ॥

एकः प्रसूयते जन्तुरेक एव प्रलीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ १०२४ ॥

[ भाग० १०.४९.१–२१ ]

[ जायमानो हरेद्दारान्वर्धमानो हरेद्धनम् ।
म्रियमाणो हरेत्प्राणान्नास्ति पुत्रसमो रिपुः ॥ १०२५ ॥ ]

अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः ।
संभोजनीयापदेशैर्जलानीव जलौकसः ॥ १०२६ ॥

पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम् ।
ते कृतार्थं प्रहिण्वन्ति प्राणा रायः सुतादयः ॥ १०२७ ॥

स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ।
असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तमः ॥ १०२८ ॥

तस्माल्लोकमिमं राजन्स्वप्नमायामनोरथम् ।
वीक्ष्यात्मन्यात्मनात्मानं समः शान्तो भव प्रभो ॥ १०२९ ॥

धृतराष्ट्र उवाच ।

यथा वदसि कल्याणीं वाचं दानपते भवान् ।
तथानया न तृप्यामि मर्त्यः प्राप्य यथामृतम् ॥ १०३० ॥

तथापि सूनृता सौम्य हृदि न स्थीयते चले ।
पुत्रानुरागविषमे विद्युत्सौदामिनी यथा ॥ १०३१ ॥

ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान् ।
भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥ १०३२ ॥

---

1025 Not found in T.

यो दुर्विमर्शपथया निजमाययेदं
सृष्ट्वा गुणान्विभजते तदनुप्रविष्टः ।
तस्मै नमो दुरवबोधविहारतन्त्र-
संसारचक्रगतये परमेश्वराय ॥ १०३३ ॥

श्रीशुक उवाच ।

इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ।
सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ॥ १०३४ ॥

शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ।
पाण्डवान्प्रति कौरव्य यदर्थे प्रेषितः स्वयम् ॥ १०३५ ॥

[ भाग० १०.४९.२२-३१ ]

अथ सूचनम् ॥

जरासंधः श्रुत्वा निधनमधुना भोजनृपतेः
सुते सद्यः प्राप्ते रुदितनयने वीक्ष्य विमनाः ।
बलेन प्रोन्मीलज्जलधिगुरुणा हन्त मथुरा-
मकस्मात्संरुद्धां यदुपतिपुरीरत्नमकरोत् ॥ १०३६ ॥

प्राप्तं तत्र बलं विलोक्य भगवाञ्ज्ञात्वा जरायाः सुतं
तन्नाशाय विमृश्य दैवतरथावारुह्य दिव्यायुधः ।
श्रीरामेण सह प्रपन्नभयनुद्भारापहारक्रम-
स्तत्सैन्यानि जघान संयति पुनर्युद्धाय तत्याज तम् ॥ १०३७ ॥

यावत्सप्तदश प्रसिद्धभुजभृद्युद्धं विधायादरा-
दुद्दीप्तं यदुभिर्जि [तं ?] भगवता त्यक्तः पुरीं प्राविशत् ।
निस्तेजा मगधाधिपो मधुरिपोर्वीर्येण वाढं रतो
राज्ञे वै यवनाधिपाय महते शाल्वं नृपं प्राहिणोत् ॥ १०३८ ॥

आयाते यवनेश्वरे मधुपुरीं भर्गप्रसादेर्यदु-
श्रेणीजे त्वरितं विभाव्य भगवांस्त्राणे यदूनां हरिः ।
मध्येसिन्धु मनोज्ञदुर्गकरणं त्वष्ट्रे विचार्यादिश-
न्नीत्वा तत्र जनान्स्वयं रिपुपुरो मार्गादसौ निर्गतः ॥ १०३९ ॥

निर्णीयाग्रे व्रजन्त हरिरिति यवनो नारदप्रोक्तचिह्नैः
पश्चाद्दुद्राव हस्ताकलित इव हरिस्तद्गुहान्तर्विवेश ।
यस्यां मांधातृपुत्रस्त्रिदशपतिपुरीरक्षणप्रीणिताद्रि-
र्दैवैः प्राप्तमप्रमादः श्रममिव वपुषासाद्य शेते सुखेन ॥ १०४० ॥

तं ज्ञात्वाच्युतमाचकर्ष यवनः कोपात्पदद्वन्द्वयो-
स्तन्नेत्रानलरोचिषा प्रसरता नीतः क्षणाद्भस्मताम् ।
श्रीवत्साङ्कितवक्षसं नवघनश्यामाभिरामाकृतिं
राजा कृष्णमवेक्ष्य विस्मितमनाः प्रपच्छ को वा भवान् ॥ १०४१ ॥

पृष्टः प्रोवाच कृष्णं स्मितसुभगमुखो मेघगम्भीरवाचा
वाक्पीयूषैः प्रकुर्वन्मनसि नरपतेर्हन्त हर्षाङ्कुराणि ।
यावन्मत्ता (?) मतावज्जगति निगदितुं नास्ति कस्यापि शक्तिः
कृष्णोऽहं वासुदेवः समजनिषि धराभारसंहारकारी ॥ १०४२ ॥

विष्णुं विलोक्य पुरतः पदयोः प्रणम्य
तुष्टाव किं च मुचकुन्दमहामहीन्द्रः ।
ब्राह्मं वपुः समधिगम्य मयि प्रसादा-
ल्लीनो भवेस्त्वमिति तं भगवानुवाच ॥ १०४३ ॥

आगत्य संयति निहत्य रिपोर्बलानि
स्वां द्वारकां प्रति धनानि नयन्मुकुन्दः ।
दूरान्निशम्य मगधाधिपतिर्मनुष्य-
लीलाधरं हरिमसौ तरसाभ्यधावत् ॥ १०४४ ॥

लीलापलायनपरायणकौतुकेन
तौ चेरतुः क्वचन पश्यति मागधेऽपि ।
गोमन्तमौलिमधिरुह्य ततोऽपि दाहा-
दुत्प्लुत्य सिन्धुपरिखां नगरीमुपेतौ ॥ १०४५ ॥

अथ श्रीभागवते ॥

आनर्ताधिपतिः श्रीमान्रैवतो रेवतीं सुताम् ।
ब्रह्मणा नोदितः प्रादाद्बलायेति पुरोदितम् ॥ १०४६ ॥

भगवानपि गोविन्द उपयेमे कुरूद्वह ।
वैदर्भीं भीष्मकसुतां श्रियो मात्रां स्वयंवरे ॥ १०४७ ॥

प्रमथ्य तरसा राज्ञः शाल्वादींश्चैद्यपक्षगान् ।
पश्यतां सर्वलोकानां तार्क्ष्यपुत्रः सुधामिव ॥ १०४८ ॥

राजोवाच ।

भगवान्भीष्मकसुतां रुक्मिणीं रुचिराननाम् ।
राक्षसेन विधानेन उपयेम इति श्रुतम् ॥ १०४९ ॥

---

1046c T चोदित for नोदित.

भगवञ्छ्रोतुमिच्छामि कृष्णस्यामिततेजसः ।
यथा मागधशाल्वादीञ्जित्वा कन्यामपाहरत् ॥ १०५० ॥

पुण्या महाफलाः साध्वीर्माध्वीर्लोकमलापहाः ।
को नु तृप्येत शृण्वानः श्रुतज्ञो नित्यनूतनाः ॥ १०५१ ॥

श्रीशुक उवाच ।

राजासीद्भीष्मको नाम विदर्भाधिपतिर्महान् ।
तस्य पञ्चाभवन्पुत्राः कन्यैका च वरानना ॥ १०५२ ॥

रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः ।
रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥ १०५३ ॥

सोपश्रुत्य मुकुन्दस्य रूपवीर्यगुणश्रियः ।
गृहागतैर्गीयमानास्तं मेने सदृशं पतिम् ॥ १०५४ ॥

तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् ।
कृष्णः स्वसदृशीं भार्यां समुद्वोढुं मनो दधे ॥ १०५५ ॥

बन्धूनामिच्छतां दातुं कृष्णाय भगिनीं नृप ।
ततो निवार्य कृष्णस्य रुक्मी चैद्यममन्यत ॥ १०५६ ॥

तद्वेत्यासितापाङ्गी वैदर्भी दुर्मना भृशम् ।
विचिन्त्याप्तं द्विजं कंचित्कृष्णाय प्राहिणोद् द्रुतम् ॥ १०५७ ॥

द्वारकां समभिप्रेत्य प्रतीहारैः प्रवेशितः ।
अपश्यदाद्यं पुरुषमासीनं काञ्चनासने ॥ १०५८ ॥

दृष्ट्वा ब्रह्मण्यदेवस्तमवरुह्य निजासनात् ।
उपवेश्यार्हयांचक्रे यथात्मानं दिवौकसः ॥ १०५९ ॥

तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः ।
पाणिनाभिमृशन्पादावव्यग्रस्तमपृच्छत ॥ १०६० ॥

श्रीभगवानुवाच ।

कच्चिद् द्विजवरश्रेष्ठ धर्मस्ते वृद्धसंमतः ।
वर्तते नातिकृच्छ्रेण संतुष्टमनसः सदा ॥ १०६१ ॥

---

1050*a* T इच्छाम for इच्छामि   1051*a* T महान्कृष्णकथा पुण्या   1055 *c* T कृष्णस्य सदृशीं for कृष्णः स्वसदृशीं   1056 *c* T कृष्णाद्विड् for कृष्णस्य   1058 *d* स समभ्येत्य for समभिप्रेत्य

संतुष्टो यर्हि वर्तेत ब्राह्मणो येनकेनचित् ।
अहीयमानः स्वाद्धर्मात्स ह्यस्याखिलकामधुक् ॥ १०६२ ॥

असंतुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः ।
अकिंचनोऽपि संतुष्टः शेते सर्वाङ्गविज्वरः ॥ १०६३ ॥

विप्रान्स्वलाभसंतुष्टान्साधून्भूतसुहृत्तमान् ।
निरहंकारिणः शान्तान्नमस्ये शिरसासकृत् ॥ १०६४ ॥

कच्चिद्वः कुशलं ब्रह्मन्राजतो यस्य हि प्रजाः ।
सुखं वसन्ति विषये पाल्यमानाः स मे प्रियः ॥ १०६५ ॥

यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया ।
सर्वं नो ब्रूह्यगुह्यं चेत्किं कार्यं करवाम ते ॥ १०६६ ॥

एवं संपृष्टसंप्रश्नो ब्राह्मणः परमेष्ठिना ।
लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ॥ १०६७ ॥

[ भाग० १०.५२ १५–३६ ]

[ रुक्मिण्या स्वयमेकान्ते लिखित्वा दत्तपत्रिकाम् ।
मुद्रामुन्मुच्य कृष्णाय प्रेमचिह्नामदर्शयत् ॥ १०६८ ॥ ]

रुक्मिण्युवाच ।

श्रुत्वा गुणान्भुवनसुन्दर शृण्वतां ते
निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम् ।
रूपं दृशां दृशिमतामखिलार्थलाभं
त्वय्यच्युताविशति चित्तमपत्रपं मे ॥ १०६९ ॥

का त्वा मुकुन्द महती कुलशीलरूप-
विद्यावयोद्रविणधामभिरात्मतुल्यम् ।
धीरा पतिं कुलवती न वृणीत कन्या
काले नृसिंह नरलोकमनोभिरामम् ॥ १०७० ॥

तन्मे भवान्खलु वृतः पतिरङ्ग जाया
आत्मार्पितश्च भवतोऽत्र विभो विधेहि ।
मा वीरभागमभिमर्शतु चैद्य आरा-
द्गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥ १०७१ ॥

---

1068 Found in श्रीधरी टीका. 1071*a* ˚रङ्ग जाया for पतिरब्जनाभा .

पूर्तेष्टदत्तनियमव्रतदेवविप्र-
गुर्वर्चनादिभिरलं भगवान्परेशः ।
आराधितो यदि गदाग्रज एत्य पाणिं
गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥ १०७२ ॥

श्वोभाविनि त्वमजितोद्वहने विदर्भा-
न्गुप्तः समेत्य पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेशबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥ १०७३ ॥

अन्तःपुरान्तरचरीमनिहत्य बन्धू-
स्त्वामुद्वहे कथमिति प्रवदाम्युपायम् ।
पूर्वेद्युरस्ति महती कुलदेवियात्रा
यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥ १०७४ ॥

यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो
वाञ्छन्त्युमापतिरिवात्मतमोपहत्यै ।
यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं
जह्यामसून्व्रतकृशाञ्शतजन्मभिः स्याम् ॥ १०७५ ॥

द्विज उवाच ।

इत्येते गुह्यसंदेशा यदुदेव मया हृताः ।
विमृश्य कृत्यं यचात्र क्रियतां तदनन्तरम् ॥ १०७६ ॥

[ भाग० १० ५२.३५-४४ ]

श्रीशुक उवाच ।

वैदर्भ्याः स तु संदेशं निशम्य यदुनन्दनः ।
प्रगृह्य पाणिना पाणिं प्रहसन्द्विजमब्रवीत् ॥ १०७७ ॥

श्रीभगवानुवाच ।

तथाहमपि तच्चित्तो निद्रां च न लभे निशि ।
वेदाहं रुक्मिणा द्वेषान्ममोद्वाहो निवारितः ॥ १०७८ ॥

तामानयिष्य उन्मथ्य राजन्यापसदान्मृधे ।
मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव ॥ १०७९ ॥

---

1080c T °मगधेन्द्रबल for °मगधेशबल 1074a T अन्तःपुरान्तरचरीं for अन्तःपुरान्तरचरान् 1076c T कर्तुं for कृत्य

[ श्रीशुक उवाच । ]

उद्वाहर्क्षं च विज्ञाय रुक्मिण्या मधुसूदनः ।
रथः संयुज्यतामाशु दारुकेत्याह सारथिम् ॥ १०८० ॥

स चाश्वैः शैब्यसुग्रीवमेघपुष्पवलाहकैः ।
युक्तं रथमुपानीय तस्थौ प्राञ्जलिरग्रतः ॥ १०८१ ॥

आरुह्य स्यन्दनं शौरिर्द्विजमारोप्य तूर्णगैः ।
आनर्तादेकरात्रेण विदर्भानगमद्धयैः ॥ १०८२ ॥

राजा तु कुण्डिनपतिः पुत्रस्नेहवशं गतः ।
शिशुपालाय स्वां कन्यां दास्यन्कर्माण्यकारयत् ॥ १०८३ ॥

पुरं संमृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ।
चित्रध्वजपताकाभिस्तोरणैः समलंकृतम् ॥ १०८४ ॥

स्रग्गन्धमाल्याभरणैर्विरजोम्बरभूषितैः ।
जुष्टं स्त्रीपुरुषैः श्रीमद्गृहैरगुरुधूपितैः ॥ १०८५ ॥

पितॄन्देवान्समभ्यर्च्य विप्रांश्च विधिवन्नृप ।
भोजयित्वा यथान्यायं वाचयामास मङ्गलम् ॥ १०८६ ॥

सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् ।
अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः ॥ १०८७ ॥

चक्रुः सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः ।
पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये ॥ १०८८ ॥

हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान् ।
प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः ॥ १०८९ ॥

एवं चेदिपती राजा दमघोषसुताय वै ।
कारयामास धर्मज्ञैः सर्वमभ्युदयोचितम् ॥ १०९० ॥

मदच्युद्भिर्गजानीकैः स्यन्दनैर्हेममालिभिः ।
पत्यश्वसंकुलैः सैन्यैः परीतः कुण्डिनं ययौ ॥ १०९१ ॥

ततो विदर्भाधिपतिः समभ्येत्याभिपूज्य च ।
निवेशयामास मुदा कल्पितान्यनिवेशने ॥ १०९२ ॥

---

1083*c* T ग for तु　　1087*c* T अहतांशुरयुग्मेन　　1090*c* T मन्त्रैः for धर्मज्ञैः.　　1092*a* T तं वै for ततो.

तत्र शाल्वो जरासंधो दन्तवक्त्रो विदूरथः ।
आजग्मुश्चैद्यपक्षीयाः पौण्ड्रकाद्याः सहस्रशः ।
कृष्णरामद्विषो यत्ताः कन्यां चैद्याय साधितुम् ॥ १०९३ ॥

यद्यागत्य हरेत्कृष्णो रामाद्यैर्यदुभिर्वृतः ।
योत्स्यामः सहितास्तेन इति निश्चितमानसाः ।
आजग्मुर्भूभुजः सर्वे समर्थबलवाहनाः ॥ १०९४ ॥

श्रुत्वैतद्भगवान्रामो विपक्षीयनृपोद्यमम् ।
कृष्णं त्वेकं गतं हर्तुं कन्यां कलहशङ्कितः ॥ १०९५ ॥

बलेन महता सार्धं भ्रातृस्नेहपरिप्लुतः ।
त्वरितः कुण्डिनं प्रागाद्गजाश्वरथपत्तिभिः ॥ १०९६ ॥

भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः ।
प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा ॥ १०९७ ॥

अहो त्रियामान्तरित उद्वाहो मेऽल्पमेधसः ।
नागच्छत्यरविन्दाक्षो नाहं वेद्म्यत्र कारणम् ।
सोऽपि नावर्ततेऽद्यापि मत्संदेशहरो द्विजः ॥ १०९८ ॥

अपि मय्यनवद्यात्मा दृष्ट्वा किंचिज्जुगुप्सितम् ।
मत्पाणिग्रहणे नूनं नायाति हि कृतोद्यमः ॥ १०९९ ॥

दुर्भगाया नु मे धाता नानुकूलो महेश्वरः ।
देवी वा विमुखा गौरी रुद्राणी गिरिजा सती । ११०० ॥

एवं चिन्तयती बाला गोविन्दहृतमानसा ।
न्यमीलयत कालज्ञा नेत्रे चाश्रुकलाकुले ॥ ११०१ ॥

एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं नृप ।
वाम ऊरुर्भुजो नेत्रमस्फुरन्प्रियभाषिणः ॥ ११०२ ॥

अथ कृष्णविनिर्दिष्टः स एव द्विजसत्तमः ।
अन्तःपुरचरीं देवीं राजपुत्रीं ददर्श ह ॥ ११०३ ॥

सा तं प्रहृष्टवदनमव्यग्रात्मगतिं सती ।
आलक्ष्य लक्षणाभिज्ञा समपृच्छच्छुचिस्मिता ॥ ११०४ ॥

---

1094*d* T समय° for समर्थ° 1095*c* T चैव for त्वेक 1098*b* T मेऽल्पराधस for मेऽल्पमेधसः. 1100 *a* T न for नु.

तस्या आवेदयत्प्राप्तं सरामं यदुनन्दनम् ।
उक्तं च सत्यवचनमात्मोपनयनं प्रति ॥ ११०५ ॥

तमागतं समाज्ञाय वैदर्भी हृष्टमानसा ।
नपश्यन्ती ब्राह्मणाय प्रियमन्यत्ननाम सा ॥ ११०६ ॥

प्राप्तौ श्रुत्वा स्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ।
अभ्ययात्तूर्यघोषेण रामकृष्णौ समर्हणैः ॥ ११०७ ॥

मधुपर्कमुपानीय वासांसि वरजानि सः ।
उपायनान्यभीष्टानि विधिवत्समपूजयत् ॥ ११०८ ॥

तयोर्निवेशनं श्रीमदुपकल्प्य महामतिः ।
ससैन्ययोः सानुगयोरातिथ्यं विदधे यथा ॥ ११०९ ॥

एवं राज्ञां समेतानां यथावीर्यं यथावयः ।
यथाबलं यथावित्तं सर्वैः कामैः समर्हयत् ॥ १११० ॥

कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ।
आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम् ॥ ११११ ॥

अस्यैव भार्या भवितुं रुक्मिण्यर्हति नापरा ।
असावप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥ १११२ ॥

किंचित्सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् ।
अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ।
एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः ॥ १११३ ॥

पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपल्लवम् ।
सा चानुध्यायती सम्यङ् मुकुन्दचरणाम्बुजम् ॥ १११४ ॥

जितवाङ् मातृभिः सार्धं सखीभिः परिवारिता ।
गुप्ता राजभटैः शूरैः संनद्धैरुद्यतायुधैः ॥ १११५ ॥

मृदङ्गशङ्खपणवास्तूर्यभेर्यश्च जघ्निरे ।
नानोपहारबलिभिर्वारमुख्याः सहस्रशः ॥ १११६ ॥

स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यः स्वलंकृताः ।
गायन्तश्च स्तुवन्तश्च गायका वाद्यवादकाः ।
परिवार्य वधूं जग्मुः सूतमागधवन्दिनः ॥ १११७ ॥

---

1105b T यातम यदुनन्दने 1108b T विरजानि for वरजानि. 1115a T मतवाङ् for जितवाङ्.

आसाद्य देवयजनं धौतपादकराम्बुजा ।
उपस्पृश्य शुचिः शान्ता प्रविवेशाम्बिकान्तिकम् ॥ १११८ ॥

तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः ।
भवानीं वन्दयांचक्रुर्भवपत्नीं भवान्विताम् ॥ १११९ ॥

नमस्ये त्वाम्बिकेऽभीक्ष्णं स्वसंतानयुतां शिवाम् ।
भूयात्पतिर्मे भगवान्कृष्णस्तदनुमोदताम् ॥ ११२० ॥

अद्भिर्गन्धाक्षतैर्धूपैर्वासःस्रङ्माल्यभूषणैः ।
नानोपहारबलिभिः प्रदीपावलिभिः पृथक् ॥ ११२१ ॥

विप्रस्त्रियः पतिमतीस्तथा तैः प्रत्येपूपुजत् ।
लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः ॥ ११२२ ॥

तस्यै स्त्रियस्ताः प्रददुः शेषां युयुजुराशिषः ।
ताभ्यो देव्यै नमश्चक्रे शेषां च जगृहे वधूः ॥ ११२३ ॥

मुनिव्रतमथ त्यक्त्वा निश्चक्रामाम्बिकागृहात् ।
प्रगृह्य पाणिना भृत्यां रत्नमुद्रोपशोभिना ॥ ११२४ ॥

तां देवमायामिव वीरमोहिनीं
सुमध्यमां कुण्डलमण्डिताननाम् ।
श्यामां नितम्बार्पितरत्नमेखलां
व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥ ११२५ ॥

शुचिस्मितां बिम्बफलाधरद्युति-
शोणायमानद्विजकुन्दकुड्मलाम् ।
पदा चलन्तीं कलहंसगामिनीं
सिञ्जत्कलानूपुरधामशोभिना ।
विलोक्य वीरा मुमुहुः समागता
यशस्विनस्तत्कृतहृच्छयार्दिताः ॥ ११२६ ॥

यां वीक्ष्य ते नृपतयस्तदुदारहास-
व्रीडावलोकहृतचेतस उज्झितास्त्राः ।
पेतुः क्षितौ गजरथाश्वगता विमूढा
यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ॥ ११२७ ॥

---

1118*a* T देवसदन for देवयजन 1122*b* T समपूजयत् for प्रत्यपुजत्.

सैवं शनैश्चलयती पदपद्मकोशौ
प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ।
उत्सार्य वामकरजैरलकानपाङ्गैः
प्राप्तान्ह्रियैक्षत नृपान्ददृशेऽच्युतं सा ॥ ११२८ ॥

[ भाग० १०.५३.१–५५ ]

[ तदा मुदं यत्परमाप सा सती
न शक्यते वक्त्रशतैर्विवर्णितुम् ।
यथा मुकुन्दस्य गुणा महीपते
यथा समुद्रेषु च बिन्दवो ह्यपाम् ॥ ११२९ ॥ ]

तां राजकन्यां रथमारुरुक्षतीं
जहार कृष्णो द्विषतां समीक्षताम् ।
रथं समारोप्य सुपर्णलक्षणं
राजन्यचक्रं परिभूय माधवः ।
ततो ययौ रामपुरोगमैः शनैः
शृगालमध्यादिव भागहृद्धरिः ॥ ११३० ॥

तं मानिनः स्वाभिभवं यशःक्षयं
परे जरासंधवशा न सेहिरे ।
अहो धिगस्मद्यश आत्तधन्वनां
गोपैर्हृतं केसरिणां मृगैरिव ॥ ११३१ ॥

[ भाग० १०.५३.५६–५७ ]

अथ सूचनम् ॥

मदोन्मत्तानेतानसमसमरोन्माथनपटू-
न्विजित्याजौ चैद्यप्रभृतिनृपतीन्निर्मलयशाः ।
हरिर्भूयो दृष्ट्वा पुर उपगतं रुक्मिणममुं
प्रियाप्रीत्या त्यक्त्वा सपदि विगलन्मानमकरोत् ॥ ११३२ ॥

रुक्मी निन्दामुपेतो नृपति ..................
........... . ...... ......... ......... ।
................ मलिनमुखीं रुक्मिणीं वीक्ष्य दूरा-
दूर्जत्पर्जन्यधाराध्वनिमधुरगिरा सान्त्वयामास रामः ॥ ११३३ ॥

---

1129 Not found in T, the source is not known. 1131c T अस्मद् for अस्मद्.

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

एवं भगवता तन्वी रामेण प्रतिबोधिता ।
वैमनस्यं परित्यज्य मनो बुद्ध्या समादधे ॥ ११३४ ॥

प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभः ।
स्मरन्विरूपकरणं वितथात्ममनोरथः ।
चक्रे भोजकटं नाम निवासाय महत्पुरम् ॥ ११३५ ॥

अहत्वा दुर्मतिं कृष्णमप्रत्यूह्य यवीयसीम् ।
कुण्डिनं न प्रवेक्ष्यामीत्युक्त्वा तत्रावसद्रुषा ॥ ११३६ ॥

भगवान्भीष्मकसुतामेवं निर्जित्य भूमिपान् ।
पुरमानीय विधिवदुपयेमे कुरूद्वह ॥ ११३७ ॥

तदा महोत्सवो नृणां यदुपुर्यां गृहे गृहे ।
अभूदनन्यभावानां कृष्णे यदुपतौ नृप ॥ ११३८ ॥

नरा नार्यः प्रमुदिताः प्रमृष्टमणिकुण्डलाः ।
पारिबर्हमुपाजह्रुर्वरयोश्चित्रवाससोः ॥ ११३९ ॥

सा वृष्णिपुर्युत्तभितेन्द्रकेतु-
र्विचित्रमाल्याम्बररत्नतोरणैः ।
बभौ प्रतिद्वार्युपक्लृप्तमङ्गलै-
रापूर्णकुम्भागरुधूपदीपकैः ॥ ११४० ॥

सिक्तमार्गा मदच्युद्भिराहूतप्रेष्ठभूभुजाम् ।
गजैर्द्वास्सु परामृष्टा रम्भापूगोपशोभिता ॥ ११४१ ॥

कुरुसृञ्जयकैकेयविदर्भयदुपुंगवाः ।
मिथो मुमुदिरे तस्मिन्संरम्भात्परिधावताम् ॥ ११४२ ॥

रुक्मिण्याहरणं श्रुत्वा गीयमानं ततस्ततः ।
राजानो राजकन्याश्च बभूवुर्भृशविस्मिताः ॥ ११४३ ॥

द्वारकायामभूद्राजन्महामोदः पुरौकसाम् ।
रुक्मिण्यां रमयोपेतं दृष्ट्वा कृष्णं जगत्पतिम् ॥ ११४४ ॥

[ भाग० १०.५४.५०.६०

---

1139a T नरा नार्यः मुदिता. 1141c T परामृष्टरम्भा° for परामृष्टा रम्भा°.
1142b T यदुकुन्तय for यदुपुंगवा 1144 d T श्रिय पतिं for जगत्पतिं.

अथ सूचनम् ॥

रुक्मिण्यास्तनयो बभूव विदितः प्रद्युम्ननामा हरे-
रंशस्तं रिपुराजहार निभृतं सूतीगृहाच्छम्बरः ।
चिक्षेपाथ पयोनिधौ विधिवशान्मीनेन गीर्णे जला-
ज्जालाहृत्त(?)झषोदरास्थितममुं राज्ञे ददुर्धीवराः ॥ ११४५ ॥

सूदापाटितमीनकुक्षिकुहरान्निष्क्रान्तमुद्यद्रुचि
बालं तत्र विलोक्य विस्मितहृदो मायावतीं प्रापयन् ।
सा पूर्वं रतिरेव कामगृहिणी ज्ञात्वा शिशुं स्वं पतिं
स्वैरं नारदभाषितेन विदधे पत्युः प्रिया रक्षणम् ॥ ११४६ ॥

कामे यौवनभाजि यादवमनौ सा बिभ्रती विभ्रमं
स्वामिन्काम भवान्पतिर्मम रतिर्भार्यास्मि ते प्रेयसी ।
इत्यूचे रिपुचेष्टितानि च शनैराकर्ण्य कोपाकुलः
प्रद्युम्नः समरे मदान्धमसिना चिच्छेद शत्रोः शिरः ॥ ११४७ ॥

एवं निहत्य रिपुमध्वनि देवताभिः
शश्वद्विमुक्तकुसुमोत्करवर्धितश्रीः ।
मात्रा पुरश्चकितलोचनमीक्षमाणः
कामः समं दयितया स्वपुरं जगाम ॥ ११४८ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

सत्राजितः स्वतनयां कृष्णाय कृतकिल्बिषः ।
स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान् ॥ ११४९ ॥

राजोवाच ।

सत्राजितः किमकरोद् ब्रह्मन्कृष्णस्य किल्बिषम् ।
स्यमन्तकं कुतस्तस्य कस्माद्दत्ता सुता हरेः ॥ ११५० ॥

श्रीशुक उवाच ।

आसीत्सत्राजितः पूर्वं सूर्यस्य परमः सखा ।
प्रीतस्तस्मै मणिं प्रादात्सूर्यस्तुष्टः स्यमन्तकम् ॥ ११५१ ॥

स तं बिभ्रन्मणिं कण्ठे भ्राजमानो यथा रविः ।
प्रविष्टो द्वारकां राजंस्तेजसा नोपलक्षितः ॥ ११५२ ॥

तं विलोक्य जना दूरात्तेजसा मुष्टदृष्टयः ।
दीव्यतेऽक्षैर्भगवते शशंसुः सूर्यशङ्किताः ॥ ११५३ ॥

---

1151 *ab* T सूर्यो भगवान् for पूर्वं सूर्यस्य

नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर।
दामोदरारविन्दाक्ष गोविन्द यदुनन्दन ॥ ११५४ ॥

एष आयाति सविता त्वां दिदृक्षुर्जगत्पते।
मुष्णन्गभस्तिचक्रेण नृणां चक्षूंषि तिग्मगुः ॥ ११५५ ॥

नन्वन्विच्छन्ति ते मार्गं त्रिलोक्यां विबुधर्षभाः।
ज्ञात्वाद्य गूढं यदुषु द्रष्टुं त्वां यात्यजः प्रभो ॥ ११५६ ॥

श्रीशुक उवाच।

निशम्य बालवचनं प्रहस्याम्बुजलोचनः।
प्राह नासौ रविर्देवः सत्राजिन्मणिना ज्वलन् ॥ ११५७ ॥

सत्राजित्स्वगृहं श्रीमत्कृतकौतुकमङ्गलम्।
प्रविश्य देवसदने मणिं विप्रैर्न्यवेशयत् ॥ ११५८ ॥

दिने दिने स्वर्णभारानष्टौ स सृजति प्रभो।
दुर्भिक्षमार्यरिष्टानि सर्पाधिव्याधयोऽशुभाः।
न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्चितो मणिः ॥ ११५९ ॥

स याचितो मणिं क्वापि यदुराजाय शौरिणा।
न चार्थकामुकः प्रादाद्याच्ञाभङ्गमकारयत् ॥ ११६० ॥

तमेकदा मणिं कण्ठे प्रतिमुच्य महाप्रभम्।
प्रसेनो हयमारुह्य मृगयां व्यचरद्वने ॥ ११६१ ॥

प्रसेनं सहयं हत्वा मणिमाच्छिद्य केसरी।
गिरिं विशञ्जाम्बवता निहतो मणिमिच्छता ॥ ११६२ ॥

सोऽपि चक्रे कुमारस्य मणिं क्रीडनकं बिले।
अपश्यन्भ्रातरं भ्राता सत्राजित्पर्यतप्यत ॥ ११६३ ॥

प्रायः कृष्णेन निहतो मणिग्रीवो वनं गतः।
भ्राता ममेति तच्छ्रुत्वा कर्णे कर्णेऽजपञ्जनाः ॥ ११६४ ॥

भगवांस्तदुपश्रुत्य दुर्यशो लिप्तमात्मनि।
मार्ष्टुं प्रसेनपदवीमन्वपद्यत नागरैः ॥ ११६५ ॥

हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने।
तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः ॥ ११६६ ॥

---

1160 *d* T अर्कयत् for अकारयत्

ऋक्षराजबिलं भीममन्धेन तमसा वृतम् ।
एको विवेश भगवानवस्थाप्य बहिः प्रजाः ॥ ११६७ ॥

तत्र दृष्ट्वा मणिश्रेष्ठं बालक्रीडनकं कृतम् ।
हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके ॥ ११६८ ॥

तमपूर्वं नरं दृष्ट्वा धात्री चुक्रोश भीतवत् ।
तच्छ्रुत्वाभ्यद्रवत्क्रुद्धो जाम्बवान्बलिनां वरः ॥ ११६९ ॥

स वै भगवता तेन युयुधे स्वामिनात्मनः ।
पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित् ॥ ११७० ॥

द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः ।
आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव ॥ ११७१ ॥

आसीत्तदष्टविंशाहमितरेतरमुष्टिभिः ।
वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ ११७२ ॥

कृष्णमुष्टिविनिष्पातनिष्पिष्टाङ्गोरुबन्धनः ।
क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीव विस्मितः ॥ ११७३ ॥

जाने त्वां सर्वभूतानां प्राण ओजः सहो बलम् ।
विष्णुं पुराणपुरुषं प्रभविष्णुं महेश्वरम् ॥ ११७४ ॥

त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत् ।
कालः कलयतामीशः पर आत्मा तथात्मनाम् ॥ ११७५ ॥

यस्येषदुत्कलितरोषकटाक्षमोक्षै-
र्वर्त्मादिशत्क्षुभितनक्रतिमिंगिलोऽब्धिः ।
सेतुः कृतः स्वयश उज्ज्वलिता च लङ्का
रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ॥ ११७६ ॥

इति विज्ञातविज्ञानमृक्षराजानमच्युतः ।
व्याजहार महाराज भगवान्देवकीसुतः ॥ ११७७ ॥

अभिमृश्यारविन्दाक्षः पाणिना शंकरेण तम् ।
कृपया परया भक्तं मेघगम्भीरया गिरा ॥ ११७८ ॥

मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ।
मिथ्याभिशापं प्रमृजन्नात्मनो मणिनामुना ॥ ११७९ ॥

---

1178 *d* T प्रेमगम्भीरया for मेघ°.

इत्युक्तः स्वां दुहितरं कन्यां जाम्बवती मुदा ।
अर्हणार्थं स मणिना कृष्णायोपजहार ह ॥ ११८० ॥

अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः ।
प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः ॥११८१ ॥

निशम्य देवकी देवी रुक्मिण्यानकदुन्दुभिः ।
सुहृदो ज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम् ॥ ११८२ ॥

सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः ।
उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये ॥ ११८३ ॥

तेषां तु देव्युपस्थानात्प्रत्यादिष्टाशिषा सह ।
प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन्हरिः ॥ ११८४ ॥

उपलभ्य हृषीकेशं मृतं पुनरिवागतम् ।
सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥ ११८५ ॥

सत्राजितं समाहूय सभायां राजसंनिधौ ।
प्राप्तिं चाख्याय भगवान्मणिं तस्मै न्यवेदयत् ॥ ११८६ ॥

स चापि व्रीडितो रत्नं गृहीत्वावाङ्मुखस्ततः ।
अनुतप्यमानो भवनमगमत्स्वेन पाप्मना ॥ ११८७ ॥

सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ।
कथं मृजाम्यात्मरजः प्रसीदेद्वाच्युतः कथम् ॥ ११८८ ॥

किं कृत्वा साधु मह्यं स्यान्न शपेद्वा जनो यथा ।
अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम् ॥ ११८९ ॥

दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ।
उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ॥ ११९० ॥

एवं व्यवसितो बुद्ध्या सत्राजित्स्वसुतां शुभाम् ।
मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ॥ ११९१ ॥

तां सत्यभामां भगवानुपयेमे यथाविधि ।
बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥ ११९२ ॥

भगवानाह न मणिं प्रतीच्छामो वयं नृप ।
तवास्तां देवभक्तस्य वयं च फलभागिनः ॥ ११९३ ॥

[ भाग० १०.५६.१–४५

---

1187 *a* T स चातिव्रीडितो रत्नं

अथ सूत्रनम् ॥

कृष्णे रामयुते गते कुरुपुरं रात्रौ शयानं हठा-
त्संजह्रे शतधन्वना मणिरसौ व्यापाद्य सत्राजितम् ।
प्रातस्तातमथावलोक्य निहतं सात्राजिती मूर्च्छिता
छायावैश्च विलप्य(?) हास्तिनपुरं कृष्णान्तिकं सागमत् ॥ ११९४ ॥

आचख्यौ यदुनन्दनाय सकलं भूयो रुदित्वा पितु-
र्व्यापादं शतधन्वना कृतमथो चुक्रोध रामानुजः ।
रामेणाथ सहागमन्निजपुरं भीत्यास तत्राजितां
हत्वाश्वं शतयोजनातिगमुपारुह्य द्रुतं प्राद्रवत् ॥ ११९५ ॥

अलब्ध्वा तत्रासुं स किल बलभद्रेण सहितो
रथेनाभ्यधावत्पतगपतिचिह्नेन तरसा ।
तमन्वेष्टुं प्रापत्स खलु मिथिलां तावदगम-
द्धरिं दृष्ट्वा पातीमृतहयमथावैक्षत (?)च तम् ॥ ११९६ ॥

अथ श्रीभागवते ॥

पद्भ्यामभिगवांस्तस्य पदातेस्तिग्मनेमिना ।
चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम् ॥ ११९७ ॥

अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम् ।
वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ॥ ११९८ ॥

तत आह बलो नूनं स मणिः शतधन्वना ।
कस्मिंश्चित्पुरुषे न्यस्तस्तमन्वेषं पुरं व्रज ॥ ११९९ ॥

अहं वैदेहमिच्छामि द्रष्टुं प्रियतरं मम ।
इत्युक्त्वा मिथिलां राजन्विवेश यदुनन्दनः ॥ १२०० ॥

तं दृष्ट्वा सहसोत्थाय मैथिलः प्रीतमानसः ।
अर्हयामास विधिवदर्हणीयं समर्हणैः ॥ १२०१ ॥

उवास तस्यां कतिचिन्मिथिलायां समा विभुः ।
[ ततोऽशिक्षद्गदां काले धार्तराष्ट्रः सुयोधनः । ]
मानितः प्रीतियुक्तेन जनकेन महात्मना ॥ १२०२ ॥

केशवो द्वारकामेत्य निधनं शतधन्वनः ।
अप्राप्तिं च मणेः प्राह प्रियायाः प्रियकृद्विभुः ॥ १२०३ ॥

ततः स कारयामास क्रियां बन्धोर्हतस्य वै ।
साकं सुहृद्भिर्भगवान्या याः स्युः साम्परायिकाः ॥ १२०४ ॥

अक्रूरः कृतवर्मा च श्रुत्वा शतधनोर्वधम् ।
व्यूषतुर्भयवित्रस्तौ द्वारकायाः प्रयोजकौ ॥ १२०५ ॥

अक्रूरे प्रोषिते रिष्टान्यासन्वै द्वारकौकसाम् ।
शारीरा मानसास्तापा मुहुर्दैविकभौतिकाः ॥ १२०६ ॥

[ ततोऽपृच्छद्धरिर्वृद्धानुग्रसेनपुरोगमान् ।
कस्मादिहारिष्टान्यासन्नुच्यतामचिरेण नः ॥ १२०७ ॥

इत्यन्नोपदिशन्त्येके विस्मृत्य प्रागुदाहृतम् ।
मुनिवासनिवासे किं घटेतारिष्टदर्शनम् ॥ १२०८ ॥

देवे वर्षति काशीशः श्वफल्कायागताय ताम् ।
स्वसुतां गान्दिनीं प्रादात्ततोऽवर्षत्स्म काशिषु ॥ १२०९ ॥

तत्सुतस्तत्प्रभावोऽसावक्रूरो यत्र यत्र ह ।
देवोऽभिवर्षते तत्र नोपतापो न मारिकाः ॥ १२१० ॥

इति वृद्धवचः श्रुत्वा नैतावदिह कारणम् ।
इति मत्वा समानाय्य प्राहाक्रूरं जनार्दनः ॥ १२११ ॥

पूजयित्वाभिभाष्यैनं कथयित्वा प्रियाः कथाः ।
विज्ञाताखिलतत्त्वज्ञः स्मयमान उवाच ह ॥ १२१२ ॥

ननु दानपते न्यस्तस्त्वय्यास्ते शतधन्वना ।
स्यमन्तको मणिः श्रीमान्विदितः पूर्वमेव नः ॥ १२१३ ॥

सत्राजितोऽनपत्यत्वाद् गृह्णीयुर्दुहितुः सुताः ।
दायं निनीयापः पिण्डान्विमुच्यर्णमशेषतः ॥ १२१४ ॥

तथापि दुर्धरो ह्यन्यैस्त्वय्यास्तां सुव्रते मणिः ।
किं तु मामग्रजः सम्यङ् न प्रत्येति मणिं प्रति ॥ १२१५ ॥

दर्शयस्व महाभाग बन्धूनां शान्तिमावह ।
अव्युच्छिन्ना मखा तेऽद्य वर्तन्ते रुक्मवेदयः ॥ १२१६ ॥

एवं सामभिरालब्धः श्वफल्कतनयो मणिम् ।
आदाय वाससा छन्नं ददौ सूर्यसमप्रभम् ॥ १२१७ ॥

---

1207 Not found in T 1214*d* T विमुच्यर्णं च शेषितं 1215*a* T दुर्धरस्त्वन्यै for दुर्धरो ह्यन्यैः

स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः।
विमृज्य पाणिना भूयस्तस्मै प्रत्यर्पयत्प्रभुः ॥ १२१८ ॥

[ यस्त्वेतद्भगवत ईश्वरस्य विष्णो-
र्वीर्याढ्यं वृजिनहरं सुमङ्गलं च।
आख्यानं पठति शृणोत्यनुस्मरेद्वा
दुष्कीर्तिं दुरितमपोह्य याति शान्तिम् ॥ १२१९ ॥ ]

[ भाग० १०·५७·२१–४२ ]

अथ सूचनम् ॥

इन्द्रप्रस्थमुपेत्य पाण्डवकृते संपूजितो बन्धुभिः
कालिन्दीं परिणीय खाण्डववनं दग्ध्वार्जुनेन प्रभुः।
अग्नेर्वीतरुजः प्रहृष्टमनसः संदापयित्वा धनु-
स्तूणीरौ विजयाय किं च विदधे मन्त्री मयेनाहृतः ॥ १२२० ॥

अथ श्रीभागवते ॥

विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ।
स्वयंवरे स्वभगिनीं कृष्णे सक्तां न्यषेधताम् ॥ १२२१ ॥

राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः।
प्रसह्य हृतवान्कृष्णो राजन्राज्ञां प्रपश्यताम् ॥ १२२२ ॥

[ भाग० १०·५८·३०–३१ ]

अथ सूचनम् ॥

राज्ञो नग्नजितो बभूव तनया सत्या प्रपन्ना हरौ
तस्याः सप्त वृषान्विजित्य भगवाञ्जग्राह पाणिं हरिः।
दृष्ट्वा हृष्टमना धनानि सुरभीर्वासांसि मत्तद्विपा-
नश्वान्निष्कपरिष्कृतान्मृगदृशः प्रादाद्दुहित्रे नृपः ॥ १२२३ ॥

अथ श्रीभागवते ॥

श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः।
कैकेयीं भ्रातृभिर्दत्तां कृष्णः संतर्दनादिभिः ॥ १२२४ ॥

सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम्।
स्वयंवरे जहारैकः स सुपर्णः सुधामिव ॥ १२२५ ॥

अन्याश्चैवंविधा भार्याः कृष्णस्यासन्सहस्रशः ।
भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥ १२२६ ॥
[ भाग० १० ५८ ५६–५८ ]

[ भैमी जाम्बवती भामा सत्या भद्रा च लक्ष्मणा ।
कालिन्दी मित्रविन्दा चेत्यष्ट पट्टमहास्त्रियः ॥ १२२७ ॥ ]

अथ सूचनम् ॥

श्रुत्वा शक्रमुखान्महीसुतकृतां बाधां सुराणां हरि-
र्गत्वा तन्नगरं जघान नरकं देवद्रुहश्चासुरान् ।
भूयो भौमगृहे विलोक्य विमला राजन्यकन्याश्चिरं
तासां चिन्तिनमाकलय्य भगवांस्ता द्वारकां प्राहिणोत् ॥ १२२८ ॥

भूयोऽभ्येत्य हरिर्महेन्द्रनगरीं दत्वादितेः कुण्डले
तुष्टः प्राणसमानया दयितया व्यालोक्य देवद्रुमम् ।
निर्जित्येन्द्रमुखान्रणे दिविषदः प्रोत्पाट्य कल्पद्रुमं
पृष्ठे पक्षिपतेर्निधाय नितरां तुष्टः पुरीं प्राविशत् ॥ १२२९ ॥

अथ श्रीभागवते ॥

अथो मुहूर्त एकस्मिन्नानागारेषु ताः स्त्रियः ।
यथोपयेमे भगवांस्तावद्रूपधरोऽव्ययः ॥ १२३० ॥

गृहेषु तासामनपाय्यतर्क्यकृ-
न्निरस्तसाम्यातिशयेष्ववस्थितः ।
रेमे रमानिर्जितकामसस्तुतो
यथेतरो गार्हकमेधिकांश्चरन् ॥ १२३१ ॥

इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता
ब्रह्मादयोऽपि न विदुः पदवीं यदीयाम् ।
भेजुर्मुदाविरतमेधितयानुराग-
हासावलोकनवसंगमजल्पलज्जाः ॥ १२३२ ॥

प्रत्युद्गमासनवरार्हणपादशौच-
ताम्बूलविश्रमणवीजनगन्धमाल्यैः ।
केशप्रसारशयनस्नपनोपहार्यैः
दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ १२३३ ॥
[ भाग० १० ५९ ४२–४५ ]

---

1227 Found in धीधरी टीका    1231c T रेमे रमाभिर्निजकामसप्लुतो

अथ सूचनम् ॥

हर्म्ये हेमपरिष्कृते मणिमयप्राङ्गासिभित्त्युत्करे
मुक्तामालिनि धूपहारिणि सुखासीनो मुदा माधवः ।
वैदर्भीमनुरूपयौवनगुणालंकाररूपान्विता-
मालोक्य स्फुरदास्यहास्यरुचिरः प्रोवाच कौतूहली ॥ १२३४ ॥

सत्यं च चैद्यमवधूय च दन्तवक्र
शाल्वं निरस्य मगधाधिपतिं विहाय ।
निष्किंचनं गुणविहीनमतुल्यरूपं
मां राजपुत्रि कथमीदृशमाश्रितासि ॥ १२३५ ॥

एवं निशम्य किल कैतवजल्पितानि
सद्यः स्खलद्वलयविक्लवदेहयष्टि ।
भैमी भिया भुवि पपात हरिर्भुजाभ्या-
मालिङ्ग्य सान्त्वनविधिं विदधे प्रियायाः ॥ १२३६ ॥

लब्धाधिपं मसृणगद्गदगूढवाणि-
राधाय पाणिकमलं पदयोः प्रियस्य ।
उक्तानि यानि हरिणा वचनानि तानि
तस्य स्तवार्थकतया दयिता बभाषे ॥ १२३७ ॥

श्रुत्वा नम्रमुपश्रियो मधुवचो वाचः प्रियाया हरिः
सद्यः प्रोद्यदमन्दसुन्दरवलद्वक्त्रारविन्दद्युतिः ।
स्वे तल्पे विनिधाय निर्भरपरीरम्भेन संभाव्य तां
मत्त प्रेमभरोपरोधमधुरं प्रोचे गभीरा गिरः ॥ १२३८ ॥

अथ श्रीभागवते ॥ श्रीभगवानुवाच ।

साध्व्येतच्छ्रोतुकामैस्त्वं राजपुत्रि प्रलम्भिता ।
मयोदितं यदन्वात्थ सर्वं तत्सत्यमेव हि ॥ १२३९ ॥

यान्यान्कामयसे कामान्मय्यकामाय मानिनि ।
सन्ति ह्येकान्तभक्तायास्तव कल्याणि नित्यदा ॥ १२४० ॥

उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे ।
यद्वाक्यैश्चाल्यमानाया न धीर्मय्यपकर्षिता ॥ १२४१ ॥

---

1240 *b* T भानिनि for मानिनि

ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्यया ।
कामात्मानोऽपवर्गेशं मोहिता मायया हि मे ॥ १२४२ ॥

मां प्राप्य मानिन्यपवर्गसंपदं
वाञ्छन्ति ये संपद एव तत्पतिम् ।
ते मन्दभाग्या निरयेऽपि ये नृणां
मात्रात्मकत्वान्निरयः सुसङ्गमः ॥ १२४३ ॥

दिष्ट्या गृहेश्वर्यसकृन्मयि त्वया
कृतानुवृत्तिर्भवमोचनी खलैः ।
सुदुष्करासौ सुतरां दुराशिषो
ह्यसुंभराया निकृतिंजुषः स्त्रियः ॥ १२४४ ॥

न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु
पश्यामि मानिनि यया स्वविवाहकाले ।
प्राप्तान्नृपानविगणय्य रहो अहो मे
प्रस्थापितो द्विज उपश्रुतसत्कथस्य ॥ १२४५ ॥

भ्रातुर्विरूपकरणं युधि निर्जितस्य
प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ।
दुःखं समुत्थमसहोऽस्मदयोगभीत्या
नैवाब्रवीः किमपि तेन वयं जितास्ते ॥ १२४६ ॥

दूतस्त्वयात्मलभने सुविविक्तमन्त्रः
प्रस्थापितो मयि चिरायति शून्यमेतत् ।
मत्वा जिहास इदमङ्गमनन्ययोग्यं
तिष्ठेत तत्त्वयि वयं प्रतिनन्दयामः ॥ १२४७ ॥

श्रीशुक उवाच ।

एवं सौरतसंलापैर्भगवान्देवकीसुतः ।
स्वरतो रमया रेमे नरलोकं विडम्बयन् ॥ १२४८ ॥
अथान्यासामपि विभुर्गृहेषु गृहवानिव ।
आस्थितो गृहमेधीयान्धर्माल्लोकगुरुर्हरिः ॥ १२४९ ॥

[ भाग० १०।६०।४६-५९ ]

---

1242d T मम मायया for मायया हि मे 1245c T रहोहरो for रहो अहो.
1249a T तथा for अथ

अथ सूचनम् ॥

षट्साहस्र्यधिकायुतं मृगदृशां रेमे रमानायक-
स्तासां कृष्णकृपावशाद्दश दश प्रत्येकमासन्सुताः ।
तेषां श्रीभगवत्समानवपुषामासन्सुताः कोटिशः
प्रद्युम्नाय सुतां स्वसुर्वचनतो रुक्मी स्वयं प्राददात् ॥ १२५० ॥

प्रद्युम्नस्य चिरेण रुक्मिदुहितुः पुत्रोऽनिरुद्धोऽभव-
त्तस्मै प्रीतिवशात्स्वसुश्च वचसा रुक्मी स्वपौत्रीमदात् ।
तस्मिन्नुत्सवकर्मणि प्रसरति द्यूते सभाहासतो
रामो रुक्मिणमाजघान दशनैर्हीनं कलिङ्गं व्यधात् ॥ १२५१ ॥

अथ श्रीभागवते ॥

निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा ।
रुक्मिणीबलयो राजन्स्नेहभङ्गभयाद्धरिः ॥ १२५२ ॥

ततोऽनिरुद्धं सह सूर्यया वरं
रथं समारोप्य ययुः कुशस्थलीम् ।
रामादयो भोजकटाद्दशार्हाः
सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ १२५३ ॥

[ भाग० १०·६१·३९–४० ]

अथ सूचनम् ॥

राजासीज्जगतीतले बलिसुतो बाणः शिवाराधना-
दस्योषास्तनया ददर्श रहसि स्वप्नेऽनिरुद्धं प्रियम् ।
प्रातस्तद्विरहातुरामतिकृशामालोक्य बाणः सुतां
तामाश्वास्य सुरासुरानथ नृपान्सा चित्रलेखालिखत् ॥ १२५४ ॥

सा दृष्ट्वा पुरतः सुरानथ नृपानालोकयन्ती मुहु-
र्दृष्ट्वा वृष्णिषु राजमानमतुलं चित्रेऽनिरुद्धं पुरः ।
लज्जानम्रमुखी बभूव सुमुखी ज्ञात्वा सखी तं प्रियं
प्राद्युम्निं नियताजहार सहसा सुप्तं निजे सद्मनि ॥ १२५५ ॥

प्रातस्तत्र पुरे चिरं दयितया रेमेऽनिरुद्धः स्वयं
ज्ञातोऽन्तःपुरचारिभिर्नृपतिना युद्धे निरुद्धः कृतः ।
श्रीकृष्णप्रमुखा निशम्य यदुराण्नारदाद्वादरा-
दागत्य स्फुरदोजसो रिपुपुरीमावृत्य तस्थुश्चिरम् ॥ १२५६ ॥

अथ श्रीभागवते ॥

भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम् ।
प्रेक्ष्य बाणो रुषाविष्टस्तुल्यसैन्योऽभिनिर्ययौ ॥ १२५७ ॥

बाणार्थं भगवान्रुद्रः ससुतः प्रमथैर्वृतः ।
आरुह्य नन्दिवृषभं युयुधे रामकृष्णयोः ॥ १२५८ ॥

आसीत्सुतुमुलं युद्धमद्भुतं रोमहर्षणम् ।
कृष्णशंकरयो राजन्प्रद्युम्नगुहयोरपि ॥ १२५९ ॥

कुम्भाण्डकूपकर्णाभ्यां बलेन सह संयुगः ।
साम्बस्य बाणपुत्रेण बाणेन सह सात्यकेः ॥ १२६० ॥

ब्रह्मादयः सुराधीशा मुनयः सिद्धचारणाः ।
गन्धर्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥ १२६१ ॥

शंकरानुचराञ्शौरिर्भूतप्रमथगुह्यकान् ।
डाकिनीर्यातुधानांश्च वेतालान्सविनायकान् ॥ १२६२ ॥

भूतमातृपिशाचांश्च कूष्माण्डान्ब्रह्मराक्षसान् ।
द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ॥ १२६३ ॥

पृथग्विधानि प्रायुङ्क्त पिनाक्यस्त्राणि शार्ङ्गिणे ।
प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥ १२६४ ॥

ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् ।
आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥ १२६५ ॥

मोहयित्वाथ गिरिशं जृम्भणास्त्रेण जृम्भितम् ।
बाणस्य पृतनां शौरिर्जघानासिगदेषुभिः ॥ १२६६ ॥

स्कन्दः प्रद्युम्नबाणौघैरर्द्यमानः समन्ततः ।
असृग्विमुञ्चन्गात्रेभ्यः शिखिनापाक्रमद्रणात् ॥ १२६७ ॥

कुम्भाण्डः कूपकर्णश्च पेततुर्मुसलार्दितौ ।
दुद्रुवुस्तदनीकानि हतनाथानि सर्वतः ॥ १२६८ ॥

विशीर्यमाणं स्वबलं दृष्ट्वा बाणोऽत्यमर्षणः ।
कृष्णमभ्यद्रवत्संख्ये रथी हित्वैव सात्यकिम् ॥ १२६९ ॥

---

1257c T प्रेक्ष्यमाणो for प्रेक्ष्य बाणो  1263a T प्रेतमातृ° for भूतमातृ°.
126 d T प्रास्रम: for प्रास्रवः

धनूंष्याकृष्य युगपद्बाणः पञ्चशतानि वै ।
एकैकस्मिंश्शरौ द्वौ द्वौ संदधे रणदुर्मदः ॥ १२७० ॥

तानि चिच्छेद भगवान्धनूंषि युगपद्धरिः ।
सारथिं रथमश्वांश्च हत्वा शङ्खमपूरयत् ॥ १२७१ ॥

तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा ।
पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥ १२७२ ॥

ततस्तिर्यङ्मुखो नग्नामनिरीक्षन्गदाग्रजः ।
बाणस्तु तावद्विरथश्छिन्नधन्वाविशत्पुरम् ॥ १२७३ ॥

विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ।
अभ्यपद्यत दाशार्हं दहन्निव दिशो दश ।
अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ १२७४ ॥

माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ।
माहेश्वरः समाक्रन्दद्वैष्णवेन बलार्दितः ॥ १२७५ ॥

अलब्ध्वाभयमन्यत्र भीतो माहेश्वरो ज्वरः ।
शरणार्थी हृषीकेशं तुष्टाव प्रणताञ्जलिः ॥ १२७६ ॥

ज्वर उवाच ।

नमामि त्वानन्तशक्तिं परेशं
सर्वात्मानं केवलं ज्ञप्तिमात्रम् ।
विश्वोत्पत्तिस्थानसंरोधहेतुं
यत्तद्ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ॥ १२७७ ॥

कालो दैवं कर्म जीवः स्वभावो
द्रव्यं क्षेत्रं प्राण आत्मा विकारः ।
तत्संघातो बीजरोहप्रवाह-
स्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥ १२७८ ॥

नानाभावैर्लीलयैवोपपन्नै-
र्देवान्साधूँल्लोकसेतून्बिभर्षि ।
हंस्युन्मार्गान्हिंसया वर्तमाना-
ञ्जन्मैतत्ते भारहाराय भूमेः ॥ १२७९ ॥

---

1274 c T अभ्यधावत for अभ्यपद्यत.

ततोऽहं ते तेजसा दुःसहेन
शीतोग्रेणात्युल्बणेन ज्वरेण ।
तावत्तापो देहिनां तेऽङ्घ्रिमूलं
नो सेवेरन्यावदाशानुबद्धाः ॥ १२८० ॥

श्रीभगवानुवाच ।

त्रिशिरस्ते प्रसन्नोऽहं व्येतु ते मज्ज्वराद्भयम् ।
यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम् ॥ १२८१ ॥

इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः ।
बाणस्तु रथमारूढः प्रागाद्योत्स्यञ्जनार्दनम् ॥ १२८२ ॥

ततो बाहुसहस्रेण नानायुधधरोऽसुरः ।
मुमोच परमक्रुद्धो बाणांश्चक्रायुधे नृप ॥ १२८३ ॥

तस्यास्यतोऽस्त्राण्यसकृच्चक्रेण क्षुरनेमिना ।
चिच्छेद भगवान्बाहून्शाखा इव वनस्पतेः ॥ १२८४ ॥

[ भाग० १०.६३.५-३२ ]

अथ वचनम् ॥

बाणस्य बाहुषु विशालतमेषु रोषा-
च्छिन्नेषु हन्त हरिणा किल कौतुकेन ।
रुद्रोऽतिविस्मितमनाः सहसोपसृत्य
प्रास्तौत्प्रणम्य पुरुषोत्तममद्वितीयम् ॥ १२८५ ॥

देवायमेष मम दासपदानुवर्ती
भृत्यस्त्वयापि नियतं परिपालनीयः ।
प्रह्लादपौत्रबलिपुत्रतया तदस्मै
भूयस्तवास्तु करुणाकलितः कटाक्षः ॥ १२८६ ॥

अथ श्रीभागवते ॥ श्रीभगवानुवाच ।

यदात्थ भगवंस्त्वं नः करवाम प्रियं तव ।
भवता यद् व्यवसितं तन्मे साध्वनुमोदितम् ॥ १२८७ ॥

अवध्योऽयं ममाप्येष वैरोचनसुतोऽसुरः ।
प्रह्लादाय वरो दत्तो न वध्यो मे तवान्वयः ॥ १२८८ ॥

---

1280 b T शान्तोग्रेण for शीतोग्रेण.

दर्पोपशमनायास्य प्रवृक्णा बाहवो मया ।
सूदितं च बलं भूरि यच्च भारायितं भुवः ॥ १२८९ ॥

चत्वारोऽस्य भुजाः शिष्टा भविष्यन्त्यजरामराः ।
पार्षदमुख्यो भवतो न कुतश्चिद्भयोऽसुरः ॥ १२९० ॥

इति लब्ध्वाभयं कृष्णं प्रणम्य शिरसासुरः ।
प्राद्युम्निं रथमारोप्य सवधूकमुपानयत् ॥ १२९१ ॥

अक्षौहिण्या परिवृतं सुवासःसमलंकृतम् ।
सपत्नीकं पुरस्कृत्य ययौ रुद्रानुमोदितः ॥ १२९२ ॥

स्वराजधानीं समलंकृतां ध्वजैः
स तोरणैरुक्षितमार्गचत्वराम् ।
विवेश शङ्खानकदुन्दुभिस्वनै-
रभ्युद्यतः पौरसुहृद्द्विजातिभिः ॥ १२९३ ॥

य एतत्कृष्णविजयं शंकरेण च संयुतम् ।
संस्मरेत्प्रातरुत्थाय न तस्य स्यात्पराजयः ॥ १२९४ ॥

[ भाग० १०.६३.४६–५१ ]

अथ सूचनम् ॥

कदाचित्क्रीडायां कलितमनसो यादवगणाः
पयः पातुं प्राप्ताः क्वचन ददृशुः कूपकुहरे ।
नृगं विप्रक्रोधात्कलितकृकलासाकृतिममुं
समुद्धर्तुं त्वाशक्ता जगुरथ पदाभ्यां मुररिपोः ॥ १२९५ ॥

हरिः श्रुत्वागत्य स्वयमथ करेणाम्बुजरुचा
तमुद्धृत्य स्फीतस्फुटरुचिरसौ कृष्णपदयोः ।
मुहुः स्तुत्वा प्रोचे स्फुरदमृतधारामधुरया
गिरा स्वीयां वार्तामतिमुदितचेता नरपतिः ॥ १२९६ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना ।
अनुज्ञातो विमानाग्र्यमारुहत्पश्यतां नृणाम् ॥ १२९७ ॥

---

1291d T ॥ बध्वा समुपानयत्. 1293b T तोरणैरक्षित° for तोरणैरुक्षित°.
1294b T संयुतं for संयुतं

कृष्णः परिजनं प्राह भगवान्देवकीसुतः ।
ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन् ॥ १२९८ ॥

दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि ।
तेजीयसोऽपि किमुत राज्ञामीश्वरमानिनाम् ॥ १२९९ ॥

नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया ।
ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि ॥ १३०० ॥

हिनस्ति विषमत्तारं वह्निरद्भिः प्रशाम्यति ।
कुलं समूलं दहति ब्रह्मस्वारणिपावकः ॥ १३०१ ॥

ब्रह्मस्वं दुरनुज्ञातं भुक्तं हन्ति त्रिपूरुषम् ।
प्रसह्य तु बलाद्भुक्तं दश पूर्वान्दशापरान् ॥ १३०२ ॥

राजानो राजलक्ष्म्या च नात्मपातं विचक्षते ।
निरयं येऽभिमन्यन्ते ब्रह्मस्वं, साधु बालिशाः ॥ १३०३ ॥

[ गृह्णन्ति यावतः पांसून्क्रन्दतामश्रुबिन्दवः ।
विप्राणां हृतवृत्तीनां वदान्यानां कुटुम्बिनाम् ॥ १३०४ ॥

राजानो राजकुल्याश्च तावतोऽब्दान्निरङ्कुशाः । ]
कुम्भीपाकेन पच्यन्ते ब्रह्मदायापहारिणः ॥ १३०५ ॥

स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेच्च यः ।
षष्टिं वर्षसहस्राणि विष्ठायां जायते कृमिः ॥ १३०६ ॥

न मे ब्रह्मधनं भूयाद्यद्गृध्वाल्पायुषो नृपाः ।
पराजिताश्च्युता राज्याद्भवन्त्युद्वेजिनोऽहयः ॥ १३०७ ॥

विप्रं कृतागसमपि नैव द्रुह्यत मामकाः ।
घ्नन्तं बहु शपन्तं वा नमस्कुरुत नित्यशः ॥ १३०८ ॥

यथाहं प्रणमे विप्राननुकालं समाहितः ।
तथा नमत यूयं च योऽन्यथा मे स दण्डभाक् ॥ १३०९ ॥

[ श्रीशुक उवाच । ]

एवं निशाम्य भगवान्मुकुन्दो द्वारकाप्रजाः ।
पावनः सर्वलोकानां विवेश निजमन्दिरम् ॥ १३१० ॥

1304 *a*–1305*b* om in A

[ सद्भिः समागमो राजन्कदाचिन्नाफलो भवेत् ।
विमुक्तो नरकाद्राजा नृगः साधुसमागमात् ॥ १३११ ॥

साधूनां दर्शनं स्पर्शः कीर्तनं स्मरणं तथा ।
तीर्थानामिव पुण्यानां सर्वमेव हि पावनम् ॥ १३१२ ॥

एतच्छ्रुत्वा त्वया सन्तः सदोपास्याः परंतप ।
ब्रह्मस्वं च न हर्तव्यं यदीच्छसि परां गतिम् ॥ १३१३ ॥ ]

[ भाग० १० ६४-३०-४४]

अथ सूचनम् ॥ [ भाग० १० ६५ ]

श्रीरामो व्रजमाजगाम सुहृदामानन्दहेतोरमुं
गोपा नन्दपुरोगमाः सपुलकं प्रोल्लासिवक्त्रश्रियः ।
पप्रच्छुः पुरुषोत्तमस्य कुशलं गोप्यश्च वीतत्रपाः
स्मृत्वा प्रेम परस्परं च रुरुदुः प्रोचुश्च रूक्षा गिरः ॥ १३१४ ॥

मधौ रामो रेमे तरणितनयातीरतरुषु
स्फुरत्पुष्पश्चयोतन्मधुपझंकारमधुरे ।
पुरः कृष्णक्रीडासमयशिशुभिर्गोपगृहिणी-
गणैः पायं पायं मधुरमदिराहृष्टहृदयः ॥ १३१५ ॥

अथ श्रीभागवते ॥

विभ्रत्स्मितमुखाम्भोजं स्वेदप्रालेयभूषितम् ।
स आजुहाव यमुनां जलक्रीडार्थमीश्वरः ॥ १३१६ ॥

निजं वाक्यमनादृत्य मत्त इत्यापगां बलः ।
अनागतां हलाग्रेण कुपितो विचकर्ष ह ॥ १३१७ ॥

पापे त्वं मामवज्ञाय यन्नायासि मया हुता ।
नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् ॥ १३१८ ॥

एवं निर्भर्त्सिता भीता यमुना यदुनन्दनम् ।
उवाच चकिता वाचं पतिता पादयोर्नृप ॥ १३१९ ॥

राम राम महाबाहो न जाने तव विक्रमम् ।
यस्यैकांशेन विधृता जगती जगतां पते ॥ १३२० ॥

परं भावं भगवतो भगवन्मामजानतीम् ।
मोक्तुमर्हसि विश्वात्मन्प्रपन्नां भक्तवत्सल ॥ १३२१ ॥

---

1311–1313 Not found in T.

ततो व्यमुञ्चद्यमुनां याचितो भगवान्बलः।
विजगाह जलं स्त्रीभिः करेणुभिरिवेभराट् ॥ १३२२॥

कामं विहृत्य सलिलादुत्तीर्णायासिताम्बरे।
भूषणानि महार्हाणि ददौ कान्तिशुभां स्रजम् ॥ १३२३ ॥

[ जातरूपमयं चैकं कुण्डलं वज्रभूषणम्।
आदिपद्मं च पद्माक्षं दिव्यं श्रवणभूषणम्।
देवेमां प्रतिगृह्णीष्व पौराणीं भूषणक्रियाम् ॥ १३२४ ॥ ]

वसित्वा वाससी नीले मालामामुच्य काञ्चनीम्।
रेजे स्वलंकृतो लिप्तो माहेन्द्र इव वारणः ॥ १३२५ ॥

अद्यापि दृश्यते राजन्यमुना कृष्टवर्त्मना।
बलस्यानन्तवीर्यस्य वीर्यं सूचयतीव हि ॥ १३२६ ॥

एवं सर्वा निशा याता एकेव रमतो व्रजे।
रामस्याक्षिप्तचित्तस्य माधुर्यैर्व्रजयोषिताम् ॥ १३२७ ॥

[ भाग० १०.६५.२२-३२ ]

अथ सूचनम् ॥ [ भाग० १०.६६ ]

रामे व्रजौकसि हरौ यदुराजधानी-
मध्यस्थिते सपदि पौण्ड्रनृपो मदान्धः।
श्रीवासुदेवपदवीं स्वयमभ्युपेत्य
युद्धाय हन्त हरये सचिवं मुमोच ॥ १३२८ ॥

श्रीकृष्णः स्वयमेत्य तत्र यदुभिः प्रख्यातदोर्विक्रमै-
र्युद्धे तं निजघान पौण्ड्रसुहृदं तं काशिराजं बली।
तत्पुत्रस्य सुदक्षिणस्य चरतो घोरं तपः प्रोज्झितं
कृत्याग्निं शिथिलीचकार चलता चक्रेण रक्षन्पुरीम् ॥ १३२९ ॥

रामे रैवतभूधरोपरि परिक्रीडाकुले सुन्दरी-
वृन्दैरुन्मदचेष्टितैः प्रहसति व्यक्तं क्वचिद्गायति।
आयातो द्विविदः सखा स नरकस्योद्दामदोर्विक्रमः
सुग्रीवस्य समस्तकृत्यसचिवश्चक्रे भयं योषिताम् ॥ १३३० ॥

---

1324 Found in श्रीधरी टीका, the source is said to be हरिवंश.

तं दृष्ट्वा मददर्पितं हलधरो हेलाभिरेवादरा-
दाक्रम्य स्फुरता भुजेन बलवन्निष्पीड्य कण्ठस्थले ।
निष्प्राणं विदधे वमन्स रुधिरं भूमौ पपातामराः
श्रीरामोपरि कल्पवृक्षकुसुमश्रेणीर्ववर्षुर्मुदा ॥ १३३१ ॥

साम्बः कौरवभूमहेन्द्रतनयामाहृत्य दूरेऽद्रव-
त्कर्णाद्याः सहसा निपत्य समरे कोपाद्बबन्धुश्च तम् ।
श्रुत्वा नारदभाषितेन यदवः कोपोपतप्ताः स्वयं
रामस्तत्र जगाम कौरवपुरीं कर्तुं कुरूणां प्रियम् ॥ १३३२ ॥

रामेण स्वयमाज्ञया नरपतेः प्रीत्या पुरो याचिते
साम्बे कर्णपुरोगमाः प्रजहसुः प्रोचुः कठोरा गिरः ।
तेषामुक्तमनूद्य लाङ्गलधरः कोपोल्लसल्लोचनः
प्रोत्पाट्य स्फुरता हलेन नगरं प्रक्षेप्तुमैच्छज्जले ॥ १३३३ ॥

अथ श्रीभागवते ॥

जलयानमिवाघूर्णं गङ्गायां नगरं पतत् ।
आकृष्यमाणमालोक्य कौरवा जातसंभ्रमाः ॥ १३३४ ॥

तमेव शरणं जग्मुः सकुटुम्बा जिजीविषवः ।
सलक्ष्मणं पुरस्कृत्य साम्बं प्राञ्जलयः प्रभुम् ॥ १३३५ ॥

राम रामाखिलाधार प्रभावं न विदाम ते ।
मूढानां नः कुबुद्धीनां क्षन्तुमर्हस्यतिक्रमम् ॥ १३३६ ॥

स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः ।
लोकान्क्रीडनकानीश क्रीडतस्ते वदन्ति हि ॥ १३३७ ॥

त्वमेव मूर्ध्नीदमनन्तलीलया
भूमण्डलं बिभर्षि सहस्रमूर्धन् ।
अन्ते च यः स्वात्मनि रुद्धविश्वः
शेषेऽद्वितीयः परिशिष्यमाणः ॥ १३३८ ॥

कोपस्ते खलशिक्षार्थं न द्वेषान्न च मत्सरात् ।
बिभ्रतो भगवन्सत्त्वं स्थितिपालनतत्परः ॥ १३३९ ॥

नमस्ते सर्वभूतात्मन् सर्वशक्तिधराव्यय ।
विश्वकर्मन् नमस्तेऽस्तु त्वां वयं शरणं गताः ॥ १३४० ॥

---

1339*a* T कोपस्तेऽखिलशिक्षार्थं

श्रीशुक उवाच ।

एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः ।
प्रसादितः संप्रसन्नो मा भैष्टेत्यभयं ददौ ॥ १३४१ ॥

दुर्योधनः पारिबर्हं कुञ्जरान्षष्टिहायनान् ।
ददौ च द्वादशशतान्ययुतानि तुरंगमान् ॥ १३४२ ॥

रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् ।
दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥ १३४३ ॥

प्रतिगृह्य तु तत्सर्वं भगवान्सात्वतर्षभः ।
ससुतः सस्नुषः प्रायात्सुहृद्भिरभिनन्दितः ॥ १३४४ ॥

ततः प्रविष्टः स्वपुरीं हलायुधः
समेत्य बन्धूननुरक्तचेतसः ।
शशंस सर्वं यदुपुंगवानां
मध्ये सभायां कुरुषु स्वचेष्टितम् ॥ १३४५ ॥

अद्यापि च पुरं ह्येतत्सूचयद्रामविक्रमम् ।
समुन्नतं दक्षिणतो गङ्गायां ननु दृश्यते ॥ १३४६ ॥

[ भाग० १०.६८.४२–५४ ]

थ सूचनम् ॥ [ भाग० १०.६९ ]

श्रीमत्कृष्णपदारविन्दयुगलालोकेच्छया नारदः
प्राप्तो द्वारवतीं विलोक्य भगवद्गार्हस्थ्यमत्यद्भुतम् ।
सद्यो विस्मितमानसो भगवता सम्यक्स्वयं बोधितः
प्रास्तौत्श्रीपुरुषोत्तमं मधुमुचा वाचा विनीताकृतिः ॥ १३४७ ॥

अथ श्रीभागवते ॥

इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना ।
सम्यक्सभाजितः प्रीतस्तमेवानुस्मरन्ययौ ॥ १३४८ ॥

एवं मनुष्यपदवीमनुवर्तमानो
नारायणोऽखिलभवाय गृहीतशक्तिः ।
रेमेऽङ्ग षोडशसहस्रवराङ्गनानां
सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥ १३४९ ॥

---

1346*d* T गङ्गायामनुदृश्यते

यानीह विश्वविलयोद्भववृत्तिहेतुः
कर्माण्यनन्यविषयाणि हरिश्चकार।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा
भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥ १३५० ॥

[ भाग० १०·६९·४३–४५ ]

अथ सूचनम् ॥ [ भाग० १० ७० ]

प्रातः स्नानविधिं विधाय भगवान्प्रादात्सुवर्णं गवां
यद्वा (?) भूमिसुरेभ्य एव विधिवत्प्रागः सुधर्मां सभाम्।
यावद्दूतमुपागतं क्षितिभुजामाकर्ण्य संभाषते
तावन्नारदमादरेण भगवद्भक्तं ददर्श प्रभुः ॥ १३५१ ॥

श्रुत्वा तस्य मुखात्पृथासुतकथां यज्ञाय राज्ञामपि
स्मृत्वा हन्त बृहद्रथात्मजरुतां बाधां क्षणं चिन्तयन्।
दूतं तेषु विसृज्य निर्भयगिरा वाचोद्धवस्य स्वयं
कान्ताभिः सह धर्मराजनृपतेः प्रीतः पुरीं प्राविशत् ॥ १३५२ ॥

प्रत्युद्गम्य मुहुः प्रणम्य नृपतिः श्रीकृष्णपादाम्बुजं
हर्षोत्फुल्लविलोचनोऽथ विदधे यज्ञाय विज्ञापनाम्।
संतुष्टः क्रतुमादिदेश भगवान्भूयो नृपाणां कृते
हन्तुं मागधमस्य मन्दिरमगाद्भीमार्जुनाभ्यां सह ॥ १३५३ ॥

अथ श्रीभागवते ॥

ते गत्वातिथ्यवेलायां गृहेषु गृहमेधिनम्।
ब्रह्मण्यं समयाचेरन् राजन्या ब्रह्मलिङ्गिनः ॥ १३५४ ॥

राजन्विद्ध्यतिथीनस्मानर्थिनो दूरमागतान्।
तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे ॥ १३५५ ॥

किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः।
किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥ १३५६ ॥

योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम्।
नाचिनोति स्वयं कल्प स वाच्यः शोच्य एव सः ॥ १३५७ ॥

हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः।
व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ १३५८ ॥

---

1356 a T प्राशर for अस्मान्.

श्रीशुक उवाच ।

एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः ।
प्रसादितः संप्रसन्नो मा भैष्टेत्यभयं ददौ ॥ १३४१ ॥

दुर्योधनः पारिबर्हं कुञ्जरान्षष्टिहायनान् ।
ददौ च द्वादशशतान्ययुतानि तुरंगमान् ॥ १३४२ ॥

रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् ।
दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥ १३४३ ॥

प्रतिगृह्य तु तत्सर्वं भगवान्सात्वतर्षभः ।
ससुतः सस्नुषः प्रायात्सुहृद्भिरभिनन्दितः ॥ १३४४ ॥

ततः प्रविष्टः स्वपुरीं हलायुधः
समेत्य बन्धूननुरक्तचेतसः ।
शशंस सर्वं यदुपुंगवानां
मध्ये सभायां कुरुषु स्वचेष्टितम् ॥ १३४५ ॥

अद्यापि च पुरं ह्येतत्सूचयद्रामविक्रमम् ।
समुन्नतं दक्षिणतो गङ्गायां नतु दृश्यते ॥ १३४६ ॥

[ भाग० १०.६८.४२-५४ ]

अथ सूचनम् ॥ [ भाग० १०.६९ ]

श्रीमत्कृष्णपदारविन्दयुगलालोकेच्छया नारदः
प्राप्तो द्वारवतीं विलोक्य भगवद्गार्हस्थ्यमत्यद्भुतम् ।
सद्यो विस्मितमानसो भगवता सम्यक्स्वयं बोधितः
प्रास्तौत्श्रीपुरुषोत्तमं मधुमुचा वाचा विनीताकृतिः ॥ १३४७ ॥

अथ श्रीभागवते ॥

इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना ।
सम्यक्सभाजितः प्रीतस्तमेवानुस्मरन्ययौ ॥ १३४८ ॥

एवं मनुष्यपदवीमनुवर्तमानो
नारायणोऽखिलभवाय गृहीतशक्तिः ।
रेमेऽङ्ग षोडशसहस्रवराङ्गनानां
सव्रीडसौहृदनिरीक्षणहासजुष्टः ॥ १३४९ ॥

---

1346d T गङ्गायामनुदृश्यते

यानीह विश्वविलयोद्भववृत्तिहेतुः
कर्माण्यनन्यविषयाणि हरिश्चकार।
यस्त्वङ्ग गायति शृणोत्यनुमोदते वा
भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे ॥ १३५० ॥

[ भाग० १०·६९·४३–४५ ]

अथ सूचनम् ॥ [ भाग० १०·७० ]

प्रातः स्नानविधिं विधाय भगवान्प्रादात्सुवर्णं गवां
वद्धा (?) भूमिसुरेभ्य एष विधिवत्प्रातः सुधर्मां सभाम्।
यावद्दूतमुपागतं क्षितिभुजामाकर्ण्य संभाषते
तावन्नारदमादरेण भगवन्तं ददर्श प्रभुः ॥ १३५१ ॥

श्रुत्वा तस्य मुखात्पृथासुतकथां यज्ञाय राज्ञामपि
स्मृत्वा हन्त बृहद्रथात्मजकृतां बाधां क्षणं चिन्तयन्।
दूतं तेषु विसृज्य निर्भयगिरा चाचोद्धवस्य स्वयं
कान्ताभिः सह धर्मराजनृपतेः प्रीतः पुरीं प्राविशत् ॥ १३५२ ॥

प्रत्युद्गम्य मुहुः प्रणम्य नृपतिः श्रीकृष्णपादाम्बुजं
हर्षोत्फुल्लविलोचनोऽथ विदधे यज्ञाय विज्ञापनाम्।
सन्तुष्टः क्रतुमादिदेश भगवान्भूयो नृपाणां कृते
हन्तुं मागधमस्य मन्दिरमगाद्भीमार्जुनाभ्यां सह ॥ १३५३ ॥

अथ श्रीभागवते ॥

ते गत्वातिथ्यवेलायां गृहेषु गृहमेधिनम्।
ब्रह्मण्यं समयाचन्त राजन्या ब्रह्मलिङ्गिनः ॥ १३५४ ॥

राजन्विद्ध्यतिथीनस्मानर्थिनो दूरमागतान्।
तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे ॥ १३५५ ॥

किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः।
किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥ १३५६ ॥

योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम्।
नाचिनोति स्वयं कल्प० स वाच्यः शोच्य एव सः ॥ १३५७ ॥

हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः।
व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ १३५८ ॥

---

1356 *a* T प्राज्ञानां for अस्मान्.

अथ सूचनम् ॥ [ भाग० १०-७३ ]

श्रीकृष्णस्तत्र कारागृहगहनगुहावर्तिभिर्भूमिपालै-
रुन्मुक्तैर्वद्धमूर्धस्फुटितकरयुगं स्तूयमानो नमद्भिः ।
तेभ्यः प्रादात्प्रसन्नः पदयुगलसरोजन्मभक्तिं प्रपन्न-
स्त्राता कुन्तीसुताभ्यां सह मुदितमनाः पार्थधाम प्रपेदे ॥ १३८४ ॥

ब्रह्मेशानपुरोगमा दिविषदो देवीर्दिशामीश्वराः
इन्द्राद्या धरणीभुजोऽतिविदिता व्यासादयो भूसुराः ।
सिद्धाः साध्यमहोरगाः सुरपुरीभार्या रणन्नूपुरा ।
आहूता नृपतेर्मखे मखभुजः सार्कं समीयुः परे ॥ १३८५ ॥

अथ श्रीभागवते ॥

सदस्याग्र्यार्हणार्हं वै मृशन्तस्ते सभासदः ।
नाध्यगच्छन्ननैकान्त्यात्सहदेवस्तदाब्रवीत् ॥ १३८६ ॥

अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान्सात्वतां पतिः ।
एष वै देवताः सर्वा देशकालधनादयः ॥ १३८७ ॥

यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ।
अग्निराहुतयो मन्त्राः सांख्यं योगश्च यत्परः ॥ १३८८ ॥

एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ।
आत्मनात्माश्रयः सभ्याः सृजत्यवति हन्त्यजः ॥ १३८९ ॥

विविधानीह कर्माणि जनयन्यदवेक्षया ।
ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम् ॥ १३९० ॥

तस्मात्कृष्णाय महते दीयतां परमार्हणम् ।
एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेत् ॥ १३९१ ॥

सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ।
देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता ॥ १३९२ ॥

इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित् ।
तच्छ्रुत्वा तुष्टुवुः सर्वे साधु साध्विति सत्तमाः ॥ १३९३ ॥

श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ।
समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥ १३९४ ॥

---

1386 b T मिमृशन्त for मृशन्तस्ते

तत्पादाववनिज्यापः शिरसा लोकपावनीः ।
सभार्यः सानुजामात्यः सकुटुम्बोऽवहन्मुदा ॥ १३९५ ॥

वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः ।
अर्हयित्वाश्रुपूर्णाक्षो नाशकत्समवेक्षितुम् ॥ १३९६ ॥

इत्थं निशम्य दमघोषसुतः स्वपीठा-
दुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी
संश्रावयन्भगवते परुषाण्यभीतः ॥ १३९७ ॥

ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ।
वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥ १३९८ ॥

यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् ।
सदसस्पतयः सर्वे कृष्णो यत्संमतोऽर्हणे ॥ १३९९ ॥

तपोविद्याव्रतधरान्ज्ञानविध्वस्तकिल्मिषान् ।
परमर्षीन्ब्रह्मनिष्ठांल्लोकपालैश्च पूजितान् ॥ १४०० ॥

सदसस्पतीनतिक्रम्य गोपालः कुलपांसनः ।
यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ १४०१ ॥

[ भाग० १० ७४ १८–३४ ]

ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ।
वृथापानरतं शश्वत्सपर्यां कथमर्हति ॥ १४०२ ॥

ब्रह्मर्षिसेवितान्देशान्हित्वैतेऽब्रह्मवर्चसम् ।
समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥ १४०३ ॥

एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः ।
नोवाच किंचिद्भगवान्यथा सिंहः शिवारुतम् ॥ १४०४ ॥

भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः ।
कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥ १४०५ ॥

निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य च ।
ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥ १४०६ ॥

ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकेयसृञ्जयाः ।
उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥ १४०७ ॥

श्रीशुक उवाच ।

स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ।
राजन्यबन्धून्विज्ञाय दृष्टपूर्वानचिन्तयत् ॥ १३५९ ॥

राजन्यबन्धवोऽप्येते ब्रह्मलिङ्गानि बिभ्रति ।
ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥ १३६० ॥

बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा ।
ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥ १३६१ ॥

श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे ।
जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् ॥ १३६२ ॥

जीवता ब्राह्मणार्थाय को न्वर्थः क्षत्रबन्धुना ।
देहेन पतमानेन नेहता विपुलं यशः ॥ १३६३ ॥

इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ।
हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥ १३६४ ॥

श्रीभगवानुवाच ।

युद्धं नो देहि राजेन्द्र द्वन्द्वशो यदि मन्यसे ।
युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकाङ्क्षिणः ॥ १३६५ ॥

असौ वृकोदरः पार्थस्तस्य भ्रातार्जुनो ह्ययम् ।
अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥ १३६६ ॥

एवमावेदितो राजा जहासोच्चैः स मागधः ।
आह चामर्षितो मन्दा युद्धं तर्हि ददामि वः ॥ १३६७ ॥

न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा ।
मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥ १३६८ ॥

अयं तु वयसा तुल्यो नातिसत्त्वो न मे समः ।
अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥ १३६९ ॥

इत्युक्त्वा भीमसेनाय प्रदाय महतीं गदाम् ।
द्वितीयां स्वां समादाय निर्जगाम पुराद्बहिः ॥ १३७० ॥

ततः समे खले वीरौ संयुक्तावितरेतरम् ।
जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥ १३७१ ॥

---

1360 *a* T ह्येते for अप्येते

मण्डलानि विचित्राणि सव्यं दक्षिणमेव च।
चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः ॥ १३७२ ॥

ततश्चटचटाशब्दो वज्रनिष्पेषसंनिभः।
गदयोः क्षिप्तयो राजन्दन्तयोरिव दन्तिनोः ॥ १३७३ ॥

[ भाग० १०.७२.१७–३६ ]

इत्थं तयोः प्रहरतोर्गदयोर्नृवीरौ
क्रुद्धौ स्वमुष्टिभिरयस्परशैरपिष्टाम्।
शब्दस्तयोः प्रहरतोरिभयोरिवासी-
न्निर्घातवज्रपरुषस्तलताडनोत्थः ॥ १३७४ ॥

तयोरेवं प्रहरतोः समशिक्षाबलौजसोः।
निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥ १३७५ ॥

एवं तयोर्महाराज युध्यतोः सप्तविंशतिः।
दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥ १३७६ ॥

एकदा मातुलेयं वै प्राह राजन्वृकोदरः।
न शक्तोऽहं जरासंधं निर्जेतुं युधि माधव ॥ १३७७ ॥

शत्रोर्जन्ममृती विद्वाञ्जीवितं च जराकृतम्।
पार्थमाप्याययन्स्वेन तेजसाचिन्तयद्धरिः ॥ १३७८ ॥

संचिन्त्यारिवधोपायं भीमस्यामोघदर्शनः।
दर्शयामास विटपं पाटयन्निव संज्ञया ॥ १३७९ ॥

तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः।
गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥ १३८० ॥

एकं पादं पदाक्रम्य दोर्भ्यामन्यं प्रगृह्य सः।
गुदतः पाटयामास शाखामिव महागजः ॥ १३८१ ॥

हाहाकारो महानासीन्निहते मागधेश्वरे।
पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ १३८२ ॥

सहदेवं तत्तनयं भगवान्भूतभावनः।
अभ्यषिञ्चदमेयात्मा मागधानां पतिं प्रभुः।
मोक्षयामास राजन्यान्संरुद्धा मागधेन ये ॥ १३८३ ॥

[ भाग० १०.७३.३८–४८ ]

---

1383 c T मोचयामास for मोक्षयामास.

ततश्चैद्यस्त्वसंभ्रान्तो जगृहे खड्गचर्मणी ।
भर्त्सयन्कृष्णपक्षीयान्राज्ञः सदसि भारत ॥ १४०८ ॥

तावदुत्थाय भगवान्स्वान्निवार्य स्वयं रुषा ।
शिरः क्षुरान्तचक्रेण जहारापततो रिपोः ॥ १४०९ ॥

शब्दः कोलाहलश्चासीच्छिशुपाले हते महान् ।
तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ १४१० ॥

चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ।
पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥ १४११ ॥

जन्मत्रयानुगुणितवैरसंरब्धया धिया ।
ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥ १४१२ ॥

ऋत्विग्भ्यः ससदस्येभ्यो दक्षिणां विपुलामदात् ।
सर्वान्संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥ १४१३ ॥

साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः ।
उवास कतिचिन्मासान्सुहृद्भिरभियाचितः ॥ १४१४ ॥

ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः ।
ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥ १४१५ ॥

वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ।
वैकुण्ठवासिनो जन्म विप्रशापात्पुनः पुनः ॥ १४१६ ॥

राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ।
ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ १४१७ ॥

राज्ञा सभाजिताः सर्वे सुरमानवखेचराः ।
कृष्णं क्रतुं च शंसन्तः स्वधामानि मुदा ययुः ॥ १४१८ ॥

दुर्योधनमृते पापं कलिं कुरुकुलामयम् ।
यो न सेहे श्रियं स्फीतां दृष्ट्वा पाण्डुसुतस्य ताम् ॥ १४१९ ॥

य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम् ।
राज्ञां मोक्षं वितानं च सर्वपापैः प्रमुच्यते ॥ १४२० ॥

[ भाग० १० ७४ ३६–५४ ]

1410a T कोलाहलोऽप्यासीत् for कोलाहलश्चासीत्

अथ सूचनम् ॥ [ भाग० १०.७५ ]

राज्ञो धर्मतनूद्भवस्य वितते यज्ञे धराधीश्वराः
सर्वे तोषमुपाययुः प्रमुमुदे राजा स दुर्योधनः ।
हेतुः को ननु तत्र तच्छुकमसौ पप्रच्छ पारिक्षितो
तं चाशेषमबोधयत्स भगवान्व्यासात्मजन्मा मुनिः ॥ १४२१ ॥

अथ श्रीभागवते ॥ ऋषिरुवाच ।

पितामहस्य ते यज्ञे राजसूये महात्मनः ।
बान्धवाः परिचर्यायां तस्यासन्प्रेमबन्धनाः ॥ १४२२ ॥

भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ।
सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥ १४२३ ॥

सतां शुश्रूषणे जिष्णुः कृष्णः पादावनेजने ।
परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥ १४२४ ॥

युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः ।
बाह्लीकपुत्रा भूर्याद्या ये च संतर्दनादयः ॥ १४२५ ॥

निरूपिता महायज्ञे नानाकर्मसु ते तदा ।
प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षवः ॥ १४२६ ॥

ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु
स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ।
चैद्ये च सात्वतपतेश्चरणं प्रविष्टे
चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥ १४२७ ॥

मृदङ्गशङ्खपणवधुन्धुर्यानकगोमुखाः ।
वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥ १४२८ ॥

नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ।
वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥ १४२९ ॥

चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः ।
स्वलंकृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ १४३० ॥

यदुसृञ्जयकाम्बोजकुरुकेकयकोसलाः ।
कम्पयन्तो भुवं सैन्यैर्यजमानपुरःसराः ॥ १४३१ ॥

सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ।
देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १४३२ ॥

स्वलंकृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः ।
विलिम्पन्त्योऽभिषिञ्चन्त्यो विजह्रुर्विविधै रसैः ॥ १४३३ ॥

तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः ।
पुंभिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ॥ १४३४ ॥

गुप्ता नृभिर्निरगमन्नुपलब्धुमेत-
द्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ।
ता मातुलेयसखिभिः किल सिच्यमानाः
सव्रीडहासविकसद्वदना विरेजुः ॥ १४३५ ॥

ता देवरानुत सखीन्सिषिचुर्दृतीभिः
क्लिन्नाम्बरा विवृतगात्रकुचोरमध्याः ।
औत्सुक्यमुक्तकबरच्यवमानमाल्याः
क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥ १४३६ ॥

स सम्राड्रथमारूढः सदश्वं रुक्ममालिनम् ।
व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥ १४३७ ॥

पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः ।
आचान्तं स्नापयांचक्रुर्गङ्गायां सह कृष्णया ॥ १४३८ ॥

देवदुन्दुभयो नेदुर्नरदुन्दुभिभिः समम् ।
मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥ १४३९ ॥

सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता जनाः ।
महापातक्यपि यतः सद्यो मुच्येत किल्बिषात् ॥ १४४० ॥

अथ राजाहते क्षौमे परिधाय स्वलंकृतः ।
ऋत्विक्सदस्यविप्रादीनानर्चाभरणाम्बरैः ॥ १४४१ ॥

बन्धूञ्ज्ञातीन्नृपान्मित्रसुहृदोऽन्यांश्च सर्वशः ।
अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥ १४४२ ॥

सर्वे जनाः सुररुचो मणिकुण्डलस्र-
गुष्णीषकञ्चुकदुकूलमहार्घ्यहाराः ।
नार्यश्च कुण्डलयुगालकवृन्दजुष्ट-
वक्त्रश्रियः कनकमेखलया विरेजुः ॥ १४४३ ॥

अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः ।
विप्रक्षत्रियविट्शूद्रा राजानो ये समागताः ॥ १४४४ ॥

देवर्षिपितृभूतानि लोकपालाः सहानुगाः ।
पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥ १४४५ ॥
हरिदासस्य राजर्षे राजसूयमहोदयम् ।
नैवातृप्यन्प्रशंसन्तः पिबन्मर्त्योऽमृतं यथा ॥ १४४६ ॥
ततो युधिष्ठिरो राजा सुहृत्संबन्धिबान्धवान् ।
प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ॥ १४४७ ॥
भगवानपि तत्राङ्ग न्यवात्सीत्तत्प्रियंकरः ।
प्रस्थाप्य यदुवीरांश्च शाल्वादींश्च कुशस्थलीम् ॥ १४४८ ॥
इत्थं राजा धर्मसुतो मनोरथमहार्णवम् ।
सुदुस्तरं समुत्तीर्य कृष्णेनासीद्गतज्वरः ॥ १४४९ ॥
एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ।
अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः ॥ १४५० ॥

यस्मिन्नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्म्यो
नाना विभान्ति किल विश्वसृजोपक्लृप्ताः ।
ताभिः पतीन्द्रुपदराजसुतोपतस्थे
यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥ १४५१ ॥
यस्मिंस्तदा मधुपतेर्महिषीसहस्रं
श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ।
मध्ये सुचारुकुचकुङ्कुमशोणहारं
श्रीमन्मुखं चपलकुण्डलकुन्तलाढ्यम् ॥ १४५२ ॥

सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् ।
वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥ १४५३ ॥
आसीनः काञ्चने साक्षादासने मघवानिव ।
पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च बन्दिभिः ॥ १४५४ ॥
[ भाग० १० ७५ ३–३५ ]

अथ सूचनम् ॥ [ भाग० १०·७५ ]

राज्ञे यज्ञविधौ मयेन महती दिव्या सभा निर्ममे
गच्छंस्तत्र मनस्विमौलितिलको भूमीन्द्रदुर्योधनः ।
उत्पाद्याम्बरमापनञ्जलधिया भूमौ जले भूधिया
तद्दृष्ट्वा जहसुश्च (?) वायुतनयः सोऽन्तस्ततो जिह्मगे ॥ १४५५ ॥

1448.1 T गान्धारीश for शाल्वादींश

भ्रान्ते मानधने हसत्सु च जनेषूद्यम्य हस्तं हठा-
त्कर्णैः कृष्णगिरा निवार्य सकलांस्तान्सान्त्वयम्भूपतिम् ।
श्रीहांस्येह हठाज्जनोऽयमखिलो हास्यस्य लब्ध्वा फलं
नीचैस्तत्परमेक एव भगवाञ्शुश्राव कृष्णो वचः ॥ १४५६ ॥

अथ श्रीभागवते ॥

स व्रीडितोऽवाग्वदनो रुषा ज्वल-
न्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ।
हाहेति शब्दः सुमहानभूत्सता-
मजातशत्रुर्विमना इवाभवत् ।
बभूव तूष्णीं भगवान्भुवो भरं
जिहीर्षुरथैर्भ्रमति स्म यद्दृशा ॥ १४५७ ॥

एतत्तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ।
सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥ १४५८ ॥

[ भाग० १०.७५ ३९–४० ]

श्रीशुक उवाच ।

अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ।
क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥ १४५९ ॥

शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः ।
यदुभिर्निर्जितः संख्ये जरासंधादयस्तथा ॥ १४६० ॥

शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ।
अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥ १४६१ ॥

इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम् ।
आराधयामास नृपः पांशुमुष्टिं सकृद्ग्रसन् ॥ १४६२ ॥

संवत्सरान्ते भगवानाशुतोष उमापतिः ।
वरेण च्छन्दयामास शाल्वं शरणमागतम् ॥ १४६३ ॥

देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥ १४६४ ॥

---

1457/ T ममुग्भिर्वुर्भ्रमति for जिहीर्षुरथैर्भ्रमति

तथेति गिरिशादिष्टो मयः परपुरंजयः।
पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम् ॥ १४६५ ॥

[ भाग० १०.७६.१-७ ]

अथ सूचनम् ॥ [ भाग० १०.७६ ]

लब्ध्वा कामगमं पुरं भगवतः शाल्वस्ततः शंकरा-
त्तत्रास्थाय बलान्वितः स सहसा गत्वारुणद् द्वारकाम्।
इन्द्रप्रस्थगते हरौ यदुकुलं सर्वं तदा चुक्षुभे
तत्रोत्पातशतं बभूव तरसा भीताश्च पौरा भृशम् ॥ १४६६ ॥

प्रद्युम्नो रथमारुरुह्य तरसा मा भैष यूयं प्रजा
इत्याभाष्य बहिर्जगाम युयुधे शाल्वैरभीतो हसन्।
निर्याता अथ साम्बसात्यकिगदा श्वाफल्किभानू ततो
हार्दिक्यः शुकसारणौ च यदवोऽन्ये चारुदेष्णादयः ॥ १४६७ ॥

युद्धं यादवशाल्वयोः प्रववृते दिव्यास्त्रमायामयं
प्रद्युम्नस्य शरैर्व्यघूर्णत पुरं सौभं मुहुश्चक्रवत्।
दृष्ट्वा तद्गदया द्युमानतिबलः शाल्वस्य सेनापतिः
प्रद्युम्नं निजघान वक्षसि रथेऽसौ मूर्छितः प्रापतत् ॥ १४६८ ॥

संग्रामादथ दारुकस्य तनयस्तं द्रागपासारय-
त्प्रोत्थायैव चुकोप कार्ष्णिरवदत्सूतं व्यधासीर्नु किम्।
रथ्यः सारथिना रथीति विहितो धर्मोऽयमित्यूचिवा-
न्सूतः कार्ष्णिरुपाददे धनुरसौ बाणान्द्युमत्यक्षिपत् ॥ १४६९ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच।

इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना।
राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥ १४७० ॥

कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम्।
निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ ॥ १४७१ ॥

आह चाहमिहायात आर्यमिश्राभिसंगतः।
राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरं मम ॥ १४७२ ॥

वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम्।
सौभं च शाल्वराजं च दारुकं प्राह केशवः ॥ १४७३ ॥

भ्रान्ते मानधने हसत्सु च जनेष्वस्य हस्तं हठा-
त्कर्णः कृष्णगिरा निवार्य सकलांस्तान्सान्त्वयन्भूपतिम् ।
श्रीहास्येह हठाज्जनोऽयमखिलो हास्यस्य लब्ध्वा फलं
नीचैस्ततपरमेक एव भगवाञ्छुश्राव कृष्णो वचः ॥ १४५६ ॥

अथ श्रीभागवते ॥

स व्रीडितोऽवाग्वदनो रुषा ज्वल-
न्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ।
हाहेति शब्दः सुमहानभूत्सता-
मजातशत्रुर्विमना इवाभवत् ।
बभूव तूष्णीं भगवान्भुवो भरं
जिहीर्षुरस्यैभ्रमति स्म यद्दृशा ॥ १४५७ ॥

एतत्तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ।
सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥ १४५८ ॥

[ भाग० १० ७५ ३९–४० ]

श्रीशुक उवाच ।

अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ।
क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥ १४५९ ॥

शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः ।
यदुभिर्निर्जितः संख्ये जरासंधादयस्तथा ॥ १४६० ॥

शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ।
अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥ १४६१ ॥

इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम् ।
आराधयामास नृप पांशुमुष्टिं सकृद्ग्रसन् ॥ १४६२ ॥

संवत्सरान्ते भगवानाशुतोष उमापतिः ।
वरेण च्छन्दयामास शाल्वं शरणमागतम् ॥ १४६३ ॥

देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥ १४६४ ॥

---

1457/ T समुज्जिहीर्षुर्भ्रमति for जिहीर्षुरस्यैभ्रमति

निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः।
विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा ॥ १४८७ ॥

कथं राममसंभ्रान्तं जित्वाजेयं सुरासुरैः।
शाल्वेनाल्पीयमानीतः(?) पिता मे बलवान्विधिः ॥ १४८८ ॥

इति ब्रुवाणे गोविन्दे सौभराट् समुपस्थितः।
वसुदेवमुपानीय कृष्णं चेदमुवाच सः ॥ १४८९ ॥

एष ते जनिता तातो यदर्थमिह जीवसि।
वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥ १४९० ॥

एवं निर्भर्त्स्य मायावी खड्गेनानकदुन्दुभेः।
उत्पाट्य शिर आदाय खस्थं सौभं समाविशत् ॥ १४९१ ॥

ततो मुहूर्तं प्रकृतावुपप्लुतः
स्वबोध आस्ते स्वजनानुषङ्गतः।
महानुभावस्तदबुध्यतासुरीं
मायां स शाल्वप्रसृतां मयोदिताम् ॥ १४९२ ॥

न तत्र दूतं न पितुः कलेवरं
प्रबुद्ध आजौ समपश्यदच्युतः।
स्वाप्नं यथा चाम्बरचारिणं रिपुं
सौभस्थमालोक्य निहन्तुमुद्यतः ॥ १४९३ ॥

एवं वदन्ति राजर्षे मुनयः केचनान्विताः।
यत्स्ववाचो विरुध्येत न नूनं ते स्मरन्ति हि ॥ १४९४ ॥

क्व शोकमोहौ स्नेहो वा भयं वा शेयसंभवः (?)।
क्व चाखण्डितविज्ञानज्ञानैश्वर्यः सुरेडितः ॥ १४९५ ॥

यत्पादसेवोर्जितयात्मविद्यया
हिन्वन्त्यनाद्यात्मविपर्ययग्रहम्।
लभन्त आत्मीयमनन्तमीश्वरं
कुतो नु मोहः परमस्य सद्गतेः ॥ १४९६ ॥

---

1491 c T उत्कृत्य for उत्पाट्य 1492 c T अनु यदाप्य (? ) for अबुध्यतासुरीं 1494b T कथय for मुनयः d T नून तन स्मरन्त्य 1495b T भय वा येऽप्रसभव, d T स्वखण्डित for सुरेडित.

रथं प्रापय मे सूत शाल्वस्यान्तिकमाशु वै ।
संभ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥ १४७४ ॥

इत्युक्तश्चोदयामास रथमास्थाय दारुकः ।
विशन्तं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥ १४७५ ॥

शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ।
प्राहरत्कृष्णसूताय शक्तिं भीमरवां मृधे ॥ १४७६ ॥

तामापतन्तीं नभसि महोल्कामिव रंहसा ।
भासयन्तीं दिशः शौरिः सायकैः शतधाच्छिनत् ॥ १४७७ ॥

तं च षोडशभिर्बाणैर्विद्ध्वा सौभं च खे भ्रमत् ।
अविध्यच्छरसंदोहैः खं सूर्य इव रश्मिभिः ॥ १४७८ ॥

शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ।
बिभेद् नापतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् ॥ १४७९ ॥

हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ।
विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १४८० ॥

यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्याह्वृतेऽक्षतः (?) ।
प्रमत्तः स सभामध्ये मम व्यापादितः सखा ॥ १४८१ ॥

तं त्वाद्य निशितैर्बाणैरपराजितमानिनम् ।
नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ १४८२ ॥

श्रीभगवानुवाच ।

वृथा त्वं कत्थसे मन्द न पश्यस्यन्तिकेऽन्तकम् ।
पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः ॥ १४८३ ॥

इत्युक्त्वा भगवाञ्छाल्वं गदया भीमवेगया ।
तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक् ।
गदायां संनिवृत्तायां शाल्वस्त्वन्तरधीयत ॥ १४८४ ॥

ततो मुहूर्त आगत्य पुरुषः शिरसाच्युतम् ।
देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥ १४८५ ॥

कृष्ण कृष्ण महाबाहो पिता ते पितृवत्सल ।
बद्ध्वापनीतः शाल्वेन सौनिकेन यथा पशुः ॥ १४८६ ॥

---

1479 c T न्यपतद् for नापतद्  1481b T अक्षतो for अक्षत, d T सखा for मम

निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः।
विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा ॥ १४८७ ॥

कथं राममसंभ्रान्तं जित्वाजेयं सुरासुरैः।
शाल्वेनाल्पीयसानीतः (?) पिता मे बलवान्विधिः ॥ १४८८ ॥

इति ब्रुवाणे गोविन्दे सौभराट् समुपस्थितः।
वसुदेवमुपानीय कृष्णं चेदमुवाच सः ॥ १४८९ ॥

एष ते जनिता तातो यदर्थमिह जीवसि।
वधिष्ये वीक्षतस्तेऽसुमीशश्चेत्पाहि बालिश ॥ १४९० ॥

एवं निर्भर्त्स्य मायावी खड्गेनानकदुन्दुभेः।
उत्पाट्य शिर आदाय खस्थं सौभं समाविशत् ॥ १४९१ ॥

ततो मुहूर्तं प्रकृतावुपप्लुतः
स्वबोध आस्ते स्वजनानुषङ्गतः।
महानुभावस्तदबुध्यतासुरीं
मायां स शाल्वप्रसृतां मयोदिताम् ॥ १४९२ ॥

न तत्र दूतं न पितुः कलेवरं
प्रबुद्ध आजौ समपश्यदच्युतः।
स्वाप्नं यथा चाम्बरचारिणं रिपुं
सौभस्थमालोक्य निहन्तुमुद्यतः ॥ १४९३ ॥

एवं वदन्ति राजर्षे मुनयः केचनान्विताः।
यत्स्ववाचो विरुध्येत न नूनं ते स्मरन्ति हि ॥ १४९४ ॥

क्व शोकमोहौ स्नेहो वा भयं वा ज्ञेयर्नजकः (?)।
क्व चाखण्डितविज्ञानज्ञानैश्वर्यः सुखेडितः ॥ १४९५ ॥

यत्पादसेवोर्जितयात्मविद्यया
हिन्वन्त्यनाद्यात्मविपर्ययग्रहम्।
लभन्त आत्मीयमनन्तमीश्वरं
कुतो नु मोहः परमस्य सद्गतेः ॥ १४९६ ॥

---

1491 a T उत्कृत्य for उत्पाट्य 1492 c T अनुपनाद्युगं for अनुपनाद्युगं. 1494 b T कश्चन for मुनयः; d T नून तम स्मरन्त्यु। 1495 b T भय वा मेऽस्य- भमर ; d T स्वखण्डित for सुखेडित .

तं शास्त्रपूगैः प्रहरन्तमोजसा
शाल्वं शरैः शौरिरमोघविक्रमः ।
विद्ध्वाच्छिनद्वर्म धनुः शिरोमणिं
सौभं च शत्रोर्गदया रुरोज ह ॥ १४९७ ॥

तत्कृष्णहस्तेरितया विचूर्णितं
पपात तोये गदया सहस्रधा ।
विसृज्य तद्भूतलमास्थितो गदा-
मुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥ १४९८ ॥

आधावतः सगदं तस्य बाहुं
भल्लेन छित्त्वा स रथाङ्गमद्भुतम् ।
वधाय शाल्वस्य लयार्कसंनिभं
बिभ्रद्बभौ सार्क इवोदयाचलः ॥ १४९९ ॥

जहार तेनैव शिरः सकुण्डलं
किरीटयुक्तं पुरुमायिनो हरिः ।
वज्रेण वृत्रस्य यथा पुरंदरो
बभूव हाहेति वचस्तदा नृणाम् ॥ १५०० ॥

तस्मिन्निपतिते पापे सौभे च गदया हते ।
स्थानामपचितिं कुर्वन्दन्तवक्त्रो रुषाभ्यगात् ॥ १५०१ ॥
[भाग० १०.७७.६-३७]

अथ सूचनम् ॥

शाल्वं दृष्ट्वा हतमथ हठाद्दन्तवक्रो गदाभृ-
त्स्मृत्वा भ्रातुर्वधमथ पुरो मित्रघातेन रुष्टः ।
सद्यः प्रोद्यद्गरलसदृशैर्भर्त्सयित्वा वचोभिः
प्रोत्प्लुत्योच्चैः सपदि गदया मूर्ध्नि कृष्णं जघान ॥ १५०२ ॥

प्रहारादेतस्मात्कुलिशपतनाद्भूधर इव
स्थितः कृष्णो नैव व्यचलदथ तं चापि गदया ।
इतस्कौमोदक्या सपदि निजघानाथ पतितो
धरायां चेदीनामधिपतिरगादन्तकपदम् ॥ १५०३ ॥

---

1498*a* T विचूर्णितं for विघूर्णितं 1499*b* T भित्त्वाथ for भित्त्वा स.
1501*c* T सर्वानामपचितिं कुर्वन्, *d* T अभ्ययात् for अभ्यगात्

अथ श्रीमागवते ॥

ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् ।
पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥ १५०४ ॥

[ माग० १०.७८.१० ]

अथ सूचनम् ॥

भ्राता तस्य विदूरथः समगमत्कृष्णं निहन्तुं ततः
चक्रेणास्य शिरोऽच्छिनद्यदुपतिः सद्यः किरीटोज्ज्वलम् ।
दृष्ट्वा तान्निहतान्सुरा गगनगाः पुष्पैरवर्षन्मुदा-
नृत्यन्नप्सरसो जगुश्च विजयं गन्धर्वमुख्या हरेः ॥ १५०५ ॥

अथ श्रीमागवते ॥

[ ]
वृतश्च वृष्णिप्रवरैर्विवेशालंकृतां पुरीम् ॥ १५०६ ॥

एवं योगेश्वरः कृष्णो भगवाञ्जगदीश्वरः ।
ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥ १५०७ ॥

श्रुत्वा युद्धोद्यमं रामः कुरूणां पाण्डवैः सह ।
तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥ १५०८ ॥

स्नात्वा प्रभासे संतर्प्य देवर्षिपितृमानवान् ।
सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ॥ १५०९ ॥

पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम् ।
विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम् ॥ १५१० ॥

यमुनामनु यान्येव गङ्गामनु च भारत ।
जगाम नैमिषं यत्र ऋषयः सत्रमासते ॥ १५११ ॥

तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ।
अभिनन्द्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥ १५१२ ॥

सोऽर्चितः सपरीवारः कृतासनपरिग्रहः ।
रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत ॥ १५१३ ॥

अप्रत्युत्थायिनं सूतमकृतप्रह्वणाञ्जलिम् ।
अध्यासीनं च तान्विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥ १५१४ ॥

कस्मादसाविमान्विप्रानध्यास्ते प्रतिलोमजः ।
धर्मपालांस्तथैवास्मान्वधमर्हति दुर्मतिः ॥ १५१५ ॥

ऋषेर्भगवतो भूत्वा शिष्योऽध्येत्य बहूनि च।
सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ १५१६ ॥

अदान्तस्याविनीतस्य वृथापण्डितमानिनः।
न गुणाय भवन्ति स्म नटस्येवाजितात्मनः ॥ १५१७ ॥

एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः।
वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः ॥ १५१८ ॥

एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि।
भावित्वा तं कुशाग्रेण करस्थेनाहनत्प्रभुः ॥ १५१९ ॥

हाहेति वादिनः सर्वे मुनयः खिन्नमानसाः।
ऊचुः संकर्षणं देवमधर्मस्ते कृतः प्रभो ॥ १५२० ॥

अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन।
आयुश्चात्मसमं तावद्यावत्सत्रं समाप्यते ॥ १५२१ ॥

अजानतैवाचरितस्त्वया ब्रह्मवधो यथा।
योगेश्वरस्य भवतो नाम्ना योऽपि नियामकः ॥ १५२२ ॥

यद्येतद्ब्रह्महत्यायाः पावनं लोकपावनः।
चरिष्यति भवाँल्लोके संग्रहो नान्यथोदितः ॥ १५२३ ॥

श्रीराम उवाच।

चरिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया।
नियमः प्रथमे कल्पे यावान्स तु विधीयताम् ॥ १५२४ ॥

दीर्घमायुर्बतैतस्य सत्त्वमिन्द्रियमेव च।
आशासितं तु यद्ब्रूत साधये योगमायया ॥ १५२५ ॥

ऋषिरुवाच।

अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च।
यथा भवेद्वचः सत्यं तथा राम विधीयताम् ॥ १५२६ ॥

श्रीभगवानुवाच।

आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम्।
तस्मादस्य भवेद्वक्ता आयुरिन्द्रियसत्त्ववान् ॥ १५२७ ॥

---

1521c T आयुश्चात्मसमं तावद्. 1524a T वरिष्ये for चरिष्ये
1525c T सद् ब्रून for यद् ब्रू.

किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ ।
अजानतस्त्वपचितिं यथा मे चिन्त्यतां बुधाः ॥ १५२८ ॥

ऋषय ऊचुः ।

इल्वलस्य सुतो घोरो बल्वलो नाम दानवः ।
स दूषयति नः सत्रमेत्य पर्वणि पर्वणि ॥ १५२९ ॥

तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् ॥
पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥ १५३० ॥

ततश्च भारतं वर्षं परीत्य सुसमाहितः ।
चरित्वा द्वादशान्मासांस्तीर्थस्नायी विशुध्यसे ॥ १५३१ ॥

[ भाग० १०·७८·१५–३९ ]

अथ सूचनम् ॥ [ भाग० १०·७९ ]

इष्टिं पर्वणि दूषयन्नुपगतो दैत्यस्ततो बल्वल-
स्तं विज्ञाय निजं हलं च मुसलं सस्मार संकर्षणः ।
ते संप्राप्य च बल्वलं हलमुखेनाकृष्य दूराम्बरा-
द्वज्रेणेव हठाज्जघान मुसलेनासौ पपात व्यसुः ॥ १५३२ ॥

संतुष्टैऋषिभिस्ततः स भगवानभ्यर्चितः संस्तुतो
दिव्यान्यम्बरभूषणानि च ददुर्मालां स्फुरत्पङ्कजाम् ।
तस्मै ते तदनुज्ञया हलधरो नत्वा मुनींस्तानगा-
ल्लोकानुग्रहमात्रमेव कलयंस्तीर्थानि सर्वेश्वरः ॥ १५३३ ॥

अथ श्रीभागवते ॥

अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ।
स्नात्वा सरोवरमगाद्यतः सरयुरास्रवत् ॥ १५३४ ॥

अनुस्रोतेन सरयूं प्रयागमुपगम्य सः ।
स्नात्वा संतर्प्य देवादीञ्जगाम पुलहाश्रमम् ॥ १५३५ ॥

गोमतीं गण्डकीं स्नात्वा विपाशां शोण आप्लुतः ।
गयां गत्वा पितॄनिष्ट्वा गङ्गासागरसंगमे ॥ १५३६ ॥

उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वाभिवाद्य च ।
सप्तगोदावरीं वेणीं पम्पां भीमरथीं ततः ॥ १५३७ ॥

स्कन्दं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् ।
द्राविडेषु महापुण्यं दृष्ट्वाद्रिं वेङ्कटं प्रभुः ॥ १५३८ ॥

कामकोष्णीं पुरीं काञ्चीं कावेरीं च सरिद्वराम् ।
श्रीरङ्गाख्यं महापुण्यं यत्र संनिहितो हरिः ॥ १५३९ ॥

ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ।
सामुद्रं सेतुमगमन्महापातकनाशनम् ॥ १५४० ॥

[ भाग० १० ७९ ९–१५ ]

ततोऽतिव्रज्य भगवान्केरलांस्तु त्रिगर्तकान् ।
गोकर्णाख्यं शिवक्षेत्रं सांनिध्यं यत्र धूर्जटेः ।
आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद्बलः ॥ १५४१ ॥

तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्डकम् ।
प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी ।
मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥ १५४२ ॥

श्रुत्वा द्विजैः कथ्यमानं कुरुपाण्डवसंयुगम् ।
सर्वराजन्यनिधनं भारं मेने हृतं भुवः ॥ १५४३ ॥

स भीमदुर्योधनयोर्गदाभ्यां युध्यतोर्मृधे ।
वारयिष्यन्विनशनं जगाम यदुनन्दनः ॥ १५४४ ॥

युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि ।
अभिवाद्याभवंस्तूर्ष्णीं किंविवक्षुरिहागतः ॥ १५४५ ॥

गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ।
मण्डलानि विचित्राणि चरन्ताविदमब्रवीत् ॥ १५४६ ॥

युवां तुल्यबलौ वीरौ हे राजन्हे वृकोदर ।
एकं प्राणाधिकं मन्ये उतैकं शिक्षयाधिकम् ॥ १५४७ ॥

तस्मादेकतरस्येह युवयोः समवीर्ययोः ।
न लभ्यते जयोऽन्यो वा विरमत्वफलो रणः ॥ १५४८ ।

न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् ।
अनुस्मरन्तावन्योन्यं दुरुक्तं दुष्कृतानि च ॥ १५४९ ॥

दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ ।
उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥ १५५० ॥

---

1541*a* T ततोऽभिव्रज्य for ततोऽतिव्रज्य 1548*c* T लभ्यते for लभ्यते

तं पुनर्नैमिषप्राप्तमृषयोऽयाजयन्मुदा ।
क्रत्वङ्गं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम् ॥ १५५१ ॥

तेभ्यो विशुद्धविज्ञानं भगवान्व्यतरद्विभुः ।
येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः ॥ १५५२ ॥

स्वपत्न्यावभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः ।
रेजे स्वज्योत्स्नयेवेन्दुः सुवासाः सुष्ठ्वलंकृतः ॥ १५५३ ॥

ईदृग्विधान्यसंख्यानि बलस्य बलशालिनः ।
अनन्तस्याप्रमेयस्य मायामर्त्यस्य सन्ति हि ॥ १५५४ ॥

योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः ।
सायं प्रातरनन्तस्य विष्णोः स दयितो भवेत् ॥ १५५५ ॥
[ भाग० १०.७९.२९-३४ ]

सूत उवाच ।

विष्णुरातेन संपृष्टो भगवान्बादरायणिः ।
वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥ १५५६ ॥

श्रीशुक उवाच ।

कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ।
विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ।
यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ॥ १५५७ ॥

तस्य भार्या कुचैलस्य क्षुत्क्षामा च तथाविधा ।
पतिव्रता पतिं प्राह म्लायता वदनेन सा ।
दरिद्रा सीदमाना च वेपमानाभिगम्य च ॥ १५५८ ॥
[ भाग० १०.८०.५-८ ]

अथ सूचनम् ॥ [ भाग० १०.८० ]

दरिद्रस्त्वं नैव प्रभवसि कुटुम्बस्य भरणे
दरिद्राणां मित्रं शरणमिह हि प्राकृतमपि ।
वृथा सीदस्येवं भज ननु निजं मित्रमधुना
न मित्रे मानस्य व्यसनमथवा नैव लघुता ॥ १५५९ ॥

अथ श्रीभागवते ॥

ननु ब्रह्मन्भगवतः सखा साक्षाच्छ्रियः पतिः ।
ब्रह्मण्यश्च शरण्यश्च भगवान्सात्वतर्षभः ॥ १५६० ॥

तमुपेहि महाभाग साधूनां च परायणम् ।
दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ॥ १५६१ ॥

आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः ।
स्मरतः पादकमलमात्मानमपि यच्छति ।
किं त्वर्थकामान्भजते नात्यभिष्टाञ्जगद्गुरुः ॥ १५६२ ॥

स एवं भार्यया विप्रो बहुशः प्रार्थितो मुहुः ।
अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ।
इति संचिन्त्य मनसा गमनाय मतिं दधे ॥ १५६३ ॥

अप्यस्त्युपायनं किंचिद्गृहे कल्याणि दीयताम् ।
याचित्वा चतुरो मुष्टीन्विप्र पृथुकतण्डुलान् ।
चैलखण्डेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम् ॥ १५६४ ॥

स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल ।
कृष्णसंदर्शनं मह्यं कथं स्यादिति चिन्तयन् ॥ १५६५ ॥

त्रीणि गुल्मान्यतीयाय तिस्रः कक्ष्याश्च स द्विजः ।
विप्रोऽन्धकवृष्णीनां गृहेष्वच्युतधर्मिणाम् ॥ १५६६ ॥

गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः ।
विवेशैकतमं श्रीमद्ब्रह्मानन्दं गतो यथा ॥ १५६७ ॥

तं विलोक्याच्युतो दूरात्प्रियापर्यङ्कमास्थितः ।
सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १५६८ ॥

सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः ।
प्रीतो व्यमुञ्चदब्बिन्दून्नेत्राभ्यां पुष्करेक्षणः ॥ १५६९ ॥

अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् ।
उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ।
अग्रहीच्छिरसा राजन्भगवाँल्लोकपावनः ॥ १५७० ॥

व्यलिम्पद्दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः ।
धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा ।
अर्चित्वावेद्य ताम्बूलं गां च स्वागतमब्रवीत् ॥ १५७१ ॥

---

1563b T मृदु for मुहु 1564b T विप्रान् for विप्र

कुचैलं मलिनं क्षामं द्विजं धमनिसंततम् ।
देवी पर्यचरद्भैष्मी चामरव्यजनेन वै ॥ १५७२ ॥

अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना ।
विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम् ॥ १५७३ ॥

किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ।
श्रिया हीनेन लोकेऽस्मिन्गर्हितेनाधमेन च ॥ १५७४ ॥

योऽसौ त्रिलोकगुरुणा श्रीनिवासेन संयुतः ।
पर्यङ्कस्था श्रियं हित्वा परिष्वक्तोऽग्रजो यथा ॥ १५७५ ॥

कथयाचक्रतुर्गाथाः पूर्वा गुरुकुले सतो ।
आत्मनोर्ललिता राजन्करौ गृह्य परस्परम् ॥ १५७६ ॥

श्रीभगवानुवाच ।

अपि ब्रह्मन्गुरुकुलाद्भवता लब्धदक्षिणात् ।
समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा ॥ १५७७ ॥

प्रायो गृहेषु ते चित्तमकामविहतं तथा ।
नैवातिप्रीयसे विद्वन्धनेषु विदितं हि मे ॥ १५७८ ॥

केचित्कुर्वन्ति कर्माणि कामैरहतचेतसः ।
त्यजन्त प्रकृतीर्दैवीर्यथाहं लोकसंग्रहम् ॥ १५७९ ॥

कच्चिद्गुरुकुले वासं ब्रह्मन्स्मरसि नौ यतः ।
द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥१५८० ॥

स वै सत्कर्मणां साक्षाद्द्विजातेरिह संभवः ।
आद्योऽङ्ग यत्राश्रमिणां यथाहं ज्ञानदो गुरुः ॥ १५८१ ॥

नन्वर्थकोविदा ब्रह्मन्वर्णाश्रमवतामिह ।
ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम् ॥ १५८२ ॥

नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा ।
तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ १५८३ ॥

अपि नः स्मर्यते ब्रह्मन्वृत्तं निवसतां गुरौ ।
गुरुदारैश्चोदितानामिन्धनानयने क्वचित् ॥ १५८४ ॥

---

1572c T and श्रीधरी टीका read साक्षात्, विजयध्वजी, वाक्योविनी and सदर्थ्री read शैब्या for भैष्मी

प्रविष्टानां महारण्यमपर्तौ सुमहद्द्विज ।
यातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः ॥ १५८५ ॥

सूर्यश्चास्तं गतस्तावत्तमसा चावृता दिशः ।
निम्नं कूलं जलमयं न प्राज्ञायत किंचन ॥ १५८६ ॥

वयं भृशं तत्र महानिलाम्बुभि-
र्निहन्यमाना मुहुरम्बुसंप्लवे ।
दिशोऽविदन्तोऽथ परस्परं वने
गृहीतहस्ताः परिबभ्रिमातुराः ॥ १५८७ ॥

एतद्विदित्वा उदिते रवौ सांदीपनिर्गुरु ।
अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान् ॥ १५८८ ॥

अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ।
आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥ १५८९ ॥

एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ।
यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ १५९० ॥

तुष्टोऽहं वो द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः ।
छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥ १५९१ ॥

इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु ।
गुरोरनुग्रहेणैव पुमान्पूर्णः प्रजायते ॥ १५९२ ॥

ब्राह्मण उवाच ।

किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो ।
भवता सत्यकामेन येषां वासो गुरावभूत् ॥ १५९३ ॥

यस्य च्छन्दोमयं ब्रह्म देह आवपनं विभो ।
श्रेयसां तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥ १५९४ ॥

[ भाग १० ८० ९–४५ ]

श्रीशुक उवाच ।

स इत्थं द्विजमुख्येन सह संकथयन्हरिः ।
सर्वभूतमनोभिज्ञः स्मयमान उवाच तम् ॥ १५९५ ॥

---

1595c T सर्वभूतमयोऽभिज्ञ

श्रीभगवानुवाच।

किमुपायनमानीतं ब्रह्मन्मे भवता गृहात्।
अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत्।
भूर्यप्यभक्त्योपहृतं न मे तोषाय कल्पते॥ १५९६॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥ १५९७॥

इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः।
पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः॥ १५९८॥

सर्वभूतात्मदृक्साक्षात्तस्यागमनकारणम्।
विज्ञायाचिन्तयन्नायं श्रीकामो माभजत्पुरा॥ १५९९॥

पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया।
प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभाः॥ १६००॥

इत्थं विचिन्त्य वसनाच्चीरबद्धान्द्विजन्मनः।
स्वयं जहार किमिदमिति पृथुकतण्डुलान्॥ १६०१॥

नन्वेतदुपनीतं मे परमप्रीणनं सखे।
तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः॥ १६०२॥

इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे।
तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः॥ १६०३॥

एतावतालं विश्वात्मन्सर्वसंपत्समृद्धये।
अस्मिँल्लोकेऽथवामुष्मिन्पुंसस्त्वत्तोषकारणम्॥ १६०४॥

ब्राह्मणस्तां तु रजनीमुषित्वाच्युतमन्दिरे।
भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा॥ १६०५॥

श्वोभूते विश्वभावेन स्वसुखेनाभिवन्दितः।
जगाम स्वालयं तात पथ्यनुव्रज्य नन्दितः॥ १६०६॥

स चालब्ध्वा धनं सख्युर्न च याचितवान्स्वयम्।
स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः॥ १६०७॥

अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया।
यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि॥ १६०८॥

---

1597 cf. भगवद्गीता. 1607ab T कृष्णात् || for सख्युर्न च

क्वाहं दरिद्रः पापीयान्क कृष्णः श्रीनिकेतनः ।
ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥ १६०९ ॥

निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा ।
महिष्या वीजितः श्रान्तो वालव्यजनहस्तया ॥ १६१० ॥

शुश्रूषया परमया पादसंवाहनादिभिः ।
पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १६११ ॥

स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् ।
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥ १६१२ ॥

अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ।
इति कारुणिको नूनं धनं मे भूरि नाददात् ॥ १६१३ ॥

इति तच्चिन्तयन्नन्तः प्राप्तो निजगृहान्तिकम् ।
सूर्यानलेन्दुसंकाशैर्विमानैः सर्वतो वृतम् ॥ १६१४ ॥

विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः ।
प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभिः ॥ १६१५ ॥

जुष्टं स्वलंकृतैः पुंभिः स्त्रीभिश्च हरिणाक्षिभिः ।
किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥ १६१६ ॥

[ भाग० १० ८११–२३ ]

अथ सूचनम् ॥ [ भाग० १०.८१ ]

शृङ्गै रत्नपरिष्कृतैः स्फुरदुरुज्योतिर्जटालैर्वियद्-
दातन्वद्भुरहूतचापशतक भागो हिमाद्रेरिव ।
साधो दूरत एव तेन ददृशे पश्चात्तदाचिन्तय-
त्वासौ पर्णकुटी मम व्यपगता कस्यैष सौधोत्तमः ॥ १६१७ ॥

द्रागभ्येत्य ततः समैक्षत गजांश्च्योतन्मदान्सप्तधा
यद्वान्द्वारि वनायुजानथ हयान्कक्षान्तरे संयतान् ।
द्वारे रत्नविभूषणोज्ज्वलरुचो दृष्ट्वोपविष्टाङ्गनान्
किं स्वित्सर्वमिदं त्वपूर्वमभवद्विप्रस्तदा विस्मितः ॥ १६१८ ॥

अथ श्रीभागवते ॥

एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः ।
प्रत्यगृह्णन्महाभागं गीतवाद्येन भूयसा ॥ १६१९ ॥

पतिमागतमाकर्ण्य पत्न्युद्धर्षातिसंभ्रमा ।
निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् ॥ १६२० ॥

पतिव्रता पतिं दृष्ट्वा प्रीतोत्कण्ठाश्रुलोचना ।
मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥ १६२१ ॥

पत्नीं वीक्ष्य प्रस्फुरन्तीं देवीं वैमानिकीमिव ।
दासीनां निष्ककण्ठीनां मध्ये भान्तीं स विस्मितः ॥ १६२२ ॥

प्रीतः स्वयं तया युक्तः प्रविष्टो निजमन्दिरम् ।
मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा ॥ १६२३ ॥

पय फेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ।
पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥ १६२४ ॥

आसनानि च हैमानि मृदूपस्तरणानि च ।
मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥ १६२५ ॥

स्वच्छस्फटिककुड्येषु महामारकतेषु च ।
रत्नदीपान्भ्राजमानांल्ललना रत्नसंयुताः ॥ १६२६ ॥

विलोक्य ब्राह्मणस्तत्र समृद्धिं सर्वसंपदाम् ।
तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ १६२७ ॥

नूनं च नैतन्मम दुर्भगस्य
शश्वद्दरिद्रस्य समृद्धिहेतुः ।
महाविभूतेरवलोकतोऽन्य-
न्नैवोपपद्येत यदूत्तमस्य ॥ १६२८ ॥

नन्वब्रुवाणो दिशते समक्षं
याचिष्णवे भूर्यपि भूरिभोजः ।
पर्जन्यवत्तत्स्वयमीक्षमाणो
दाशार्हकाणामृषभः सखा मे ॥ १६२९ ॥

किंचित्करोत्युर्वपि यः स्वदत्तं
सुहृत्कृतं फल्ग्वपि भूरिकारि ।
मयोपनीतां पृथुकैकमुष्टिं
प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥ १६३० ॥

---

1621b T प्रेमोत्कण्ठा° for प्रीतोत्कण्ठा　1628a T कनैतन्मम for च नैतन्मम.

तस्यैव मे सौहृदसख्यमैत्री-
दास्यं पुनर्जन्मनि जन्मनि स्यात् ।
महानुभावेन गुणालयेन
विषज्जतस्तत्पुरुषेषु सङ्गः ॥ १६३१ ॥

भक्ताय चित्रा भगवान्हि संपदो
राज्यं विभूतीर्न समर्थयत्यजः ।
अदीर्घबोधाय विचक्षणः स्वयं
पश्यन्निपातं धनिनां मदोद्भवम् ॥ १६३२ ॥

इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने ।
विषयाञ्जाययात्यर्थं बुभुजे नातिलम्पटः ॥ १६३३ ॥

तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ।
ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ १६३४ ॥

एवं स विप्रो भगवत्सुहृत्तदा
दृष्ट्वा स्वभृत्यैरजितं पराजितम् ।
तद्ध्यानवेगोद्ग्रथितात्मबन्धन-
स्तद्धाम लेभेऽचिरतः सतां गतेः ॥ १६३५ ॥

एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ।
लब्धभावो भगवति कर्मबन्धाद्विमुच्यते ॥ १६३६ ॥

[ भाग० १०.८१.२४–४१ ]

अथ सूचनम् ॥ [ भाग० १०.८२ ]

ग्रहे भानोर्दानोल्लसितमनसो भूरिविभवः
कुरुक्षेत्रं याता यदुकुरुकुलानां समुदयाः ।
अनाश्याम्ये गोपा अपि च किल नन्दप्रभृतयः
समीयुस्तेऽन्योन्यं सुहृदुपगमानन्दितहृदः ॥ १६३७ ॥

तेऽन्योन्यं चिरविप्रयोगमिलिता हर्षाश्रुरुद्धेक्षणाः
स्निग्धा बन्धुसुहृज्जनाः सरभसं दूरादुपेत्यादरात् ।
प्रोद्गाढं परिरेभिरे कृतनमस्काराः प्रयुक्ताशिषो
वाचा गद्गदया मुहुश्च कुशलं पप्रच्छुरत्युत्सुकाः ॥ १६३८ ॥

---

1631*d* T तत्पुरुषप्रसङ्ग for तत्पुरुषेषु सङ्ग. 1633*c* T स्वधर्म for अत्यर्थं.
1635*d* T गतिं for गते.

कृष्णावलोकामृतमापिबन्तो
न तृप्तिमापुः स्वजनाः परेऽपि।
सुखोपविष्टा विदधुः कथास्ते
मुख्या यदूनां प्रवराः कुरूणाम्॥ १६३९॥

अथ श्रीभागवते॥ कुन्त्युवाच।

आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम्।
यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः॥ १६४०॥

सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि।
नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम्॥ १६४१॥

वसुदेव उवाच।

अम्ब मास्मानसूयेथा दैवक्रीडनकान्नरान्।
ईशस्य हि वशे लोकः कुरुते कार्यतेऽथवा॥ १६४२॥

कंसप्रतापिताः सर्वे वयं याता दिशो दश।
एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः॥ १६४३॥

श्रीशुक उवाच।

वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः।
आसन्नच्युतसंदर्शपरमानन्दनिर्वृताः॥ १६४४॥

भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा।
सदाराः पाण्डवाः कुन्ती संजयो विदुरः कृपः॥ १६४५॥

कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान्।
पुरुजिद्द्रुपदः शैब्यो धृष्टकेतुः सकाशिराट्॥ १६४६॥

दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ।
युधामन्युः सुशर्मा च ससुता बाह्लिकादयः॥ १६४७॥

राजानोऽन्ये च राजेन्द्र युधिष्ठिरमनुव्रताः।
श्रीनिकेतं वपुः शौरेः सस्त्रीकं वीक्ष्य विस्मिताः॥ १६४८॥

अथ ते कृष्णरामाभ्यां सम्यक्प्राप्तसमर्हणाः।
प्रशशंसुर्मुदा युक्ता वृष्णीन्कृष्णपरिग्रहान्॥ १६४९॥

अहो भोजपते यूयं जन्मभाजो नृणामिह।
यत्पश्यथासकृत्कृष्णं दुर्दर्शमपि योगिनाम्॥ १६५०॥

यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति
पादावनेजनपयश्च वचश्च शास्त्रम् ।
भूः कालभर्जितभगापि यदङ्घ्रिपद्म-
स्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान् ॥ १६५१ ॥

तद्दर्शनस्पर्शनानुपथप्रजल्प-
शय्यासनाशनसयौनसपिण्डबन्धः ।
येषां गृहे निरयवर्त्मनि वर्ततां वः
स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥ १६५२ ॥

श्रीशुक उवाच ।

नन्दस्तत्र यदून्प्राप्ताञ्ज्ञात्वा कृष्णपुरोगमान् ।
तत्रागमद्वृतो गोपैरनःस्थार्थैर्दिदृक्षया ॥ १६५३ ॥

तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः ।
परिषस्वजिरे गाढं चिरदर्शनकातराः ॥ १६५४ ॥

वसुदेवः परिष्वज्य संप्रीतः प्रेमविह्वलः ।
स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासं च गोकुले ॥ १६५५ ॥

कृष्णरामौ परिष्वज्य पितरावभिवाद्य च ।
न किंचनोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह ॥ १६५६ ॥

तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च ।
यशोदा च महाभागा सुतौ विजहतुः शुचः ॥ १६५७ ॥

रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम् ।
स्मरन्त्यौ तत्कृतां मैत्रीं बाष्पकण्ठ्यौ समूचतुः ॥ १६५८ ॥

का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि ।
अप्यवाप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ १६५९ ॥

एतावदृष्टपितरौ युवयोः स्म पित्रोः
संप्रीणनाभ्युदयपोषणपालनानि ।
प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णो-
र्न्यस्तावकुत्रचभयौ न सतां परस्वौ ॥ १६६० ॥

---

1660*a* T पर स्व for परस्वौ

कापिरुवाच ।

गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं
यत्प्रेक्षणे दृशि सुपक्ष्मकृतं शपन्ति ।
दृग्भिर्हृदीकृतमलं परिरभ्य सर्वा-
स्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ १६६१ ॥

भगवांस्तास्तथाभूता विविक्त उपसंगतः ।
आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ १६६२ ॥

[ भाग १० ८२·१६–४१ ]

अथ सूचनम् ॥ [ भाग० १० ८२ ]

मच्चित्ते किमु कीलिताः किमथवा यूयं निखाताः प्रियाः
किं लीनाः किमु जीवितेन सुदृढं निर्धूतमभ्यागताः ।
विश्लेषेऽपि बहिर्न यच्चृदयतः किं वा मनो – ⏑ –
को वाध्यापितवांश्चिराय भवतीर्मायामिमामीदृशीम् ॥ १६६३ ॥

शोचन्ति ताः प्रियतमा दयितस्य विरहाद्
भ्रश्यन्ति याः प्रणयगाढनिबद्धचित्ताः ।
कस्तस्य पश्यति मुखं पिशुनस्य नूनं
यच्चेतसः प्रियजनः क्षणमप्यपैति ॥ १६६४ ॥

अथ श्रीभागवते ॥

अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ।
गतांश्चिरायिताञ्शत्रुपक्षक्षपणचेतसः ॥ १६६५ ॥

अप्यवध्या यथास्मान्स्विदकृतज्ञा विशङ्कया ।
नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ॥ १६६६ ॥

वायुर्यथा घनानीकं तृणतूलरजांसि च ।
संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥ १६६७ ॥

मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ।
दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदायनः ॥ १६६८ ॥

अहं हि सर्वभूतानामादिरन्तोऽन्तरं बहिः ।
भौतिकाना यथा खं वा भूर्वायुर्ज्योतिरङ्गनाः ॥ १६६९ ॥

एवं ह्येतानि भूतानि भूतेष्वात्मा तत प्रभुः ।
उभयं मय्यथ परे पश्यताभातमक्षरे ॥ १६७० ॥

---

1670b T भूतेष्वात्मात्मना तत

ऋषिरुवाच ।

अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ।
तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥ १६७१ ॥

आहुश्च ते नलिननाभ पदारविन्दं
योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं
गेहंजुषामपि मनस्युदियात्सदा नः ॥ १६७२ ॥

[ भाग० १०.८२.४२-४९ ]

श्रीशुक उवाच ।

तथानुगृह्य भगवान्गोपीनां स गुरुर्गतिः ।
युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोऽव्ययम् ॥ १६७३ ॥

त एवं लोकनाथेन परिपृष्टा सुसत्कृताः ।
प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥ १६७४ ॥

कुतोऽशिवं त्वच्चरणाम्बुजासवं
महन्मनस्तो मुखनिःसृतं क्वचित् ।
पिबन्ति ये कर्णपुटैरलं प्रभो
देहंभृतां देहकृदस्मृतिच्छिदम् ॥ १६७५ ॥

हित्वात्मधाम विधुतात्मकृतत्र्यवस्थ-
मानन्दसंप्लवमखण्डमकुण्ठबोधम् ।
कालोपसृष्टनिगमावन आत्तयोग-
मायाकृतिं परमहंसगतिं नताः स्मः ॥ १६७६ ॥

ऋषिरुवाच ।

इत्युत्तमश्लोकशिखामणिं जने-
ष्वभिष्टुवत्स्वन्धककौरवस्त्रियः ।
समेत्य गोविन्दकथा मिथोऽगृणं-
स्त्रिलोकगीताः शृणु वर्णयामि ते ॥ १६७७ ॥

द्रौपद्युवाच ।

हे वैदर्भ्यच्युतो भद्रे हे जाम्बवति कौसले ।
हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे ॥ १६७८ ॥

---

1671 T श्रीशुक उवाच for ऋषिरुवाच

हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवानयम् ।
उपयेमे यथा लोकमनुकुर्वन्स्वमायया ॥ १६७९ ॥

रुक्मिण्युवाच ।

चैद्याय मार्पयितुमुद्यतकार्मुकेषु
राजस्वजेयभटशेखरिताङ्घ्रिरेणुः ।
निन्ये मृगेन्द्र इव भागमजाविर्यूथा-
त्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ १६८० ॥

सत्यभामोवाच ।

यो मे सनाभिवधतप्तहृदा ततेन
लिप्ताभिशापमपमार्ष्टुमुपाजहार ।
जित्वर्क्षराजमथ रत्नमदात्स तेन
भीतः पितादिशत मां प्रभवेऽपि दत्ताम् ॥ १६८१ ।

जाम्बवत्युवाच ।

प्राज्ञाय देहकृदमुं निजनाथदेवं
सीतापतिं त्रिणवहान्यमुनाभ्ययुध्यत् ।
ज्ञात्वा परीक्षित उपाहरदर्हणं मां
पादौ प्रगृह्य मणिनाहममुष्य दासी ॥ १६८२ ॥

कालिन्द्युवाच ।

तपश्चरन्तीमाज्ञाय स्वपादस्पर्शनेच्छया ।
सख्योपेत्याग्रहीत्पाणिं याहं तद्गृहमार्जनी ॥ १६८३ ॥

भद्रोवाच ।

यो मां स्वयंवर उपेत्य विजित्य भूपा-
न्निन्ये श्वयूथगमिवात्मबलिं द्विपारिः ।
भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियौक-
स्तस्यास्तु मेऽनुभवमङ्घ्र्यवनेजनत्वम् ॥ १६८४ ॥

---

1679*b* T भगवान्स्वयं for भगवानयं. 1684 T मित्रविन्दोवाच for भद्रोवाच; the Editor of T notes : अत्र भद्रोवाच इति मुद्रितपुस्तके पाठ । विजयध्वजवीरराघव-बाल्बोधिनीमदेश्वराणां संमतस्तु मित्रविन्दोवाचेत्येव

सत्योवाच ।

सत्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गा-
न्पित्रा कृतान्क्षितिपवीर्यपरीक्षणाय ।
तान्वीरदुर्मदहनस्तरसा निगृह्य
क्रीडन्बबन्ध ह यथा शिशवोऽजतोकान् ॥ १६८५ ॥

य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम् ।
पथि निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥ १६८६ ॥

मित्रोवाच ।

पिता मे मातुलेयाय स्वयमाहूय दत्तवान् ।
कृष्णे कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥ १६८७ ॥
अस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि ।
कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥ १६८८ ॥

लक्ष्मणोवाच ।

ममापि राज्ञ्यच्युतजन्म कर्म च
श्रुत्वा मुहुर्नारदगीतमास ह ।
चित्तं मुकुन्दे किल पद्महस्तया
वृतः सुसंमृश्य विहाय लोकपान् ॥ १६८९ ॥

ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ।
बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥ १६९० ॥

[ भाग० १० ८३ १–१८ ]

अथ सूचनम् ॥ [ भाग० १०.८३ ]

तातो मे विदधे स्वयंवरविधौ मत्स्यं निबद्धं विय-
त्याच्छन्नं प्रतिबिम्बतः परमसौ तोयान्तरेऽदृश्यत ।
सच्छेत्तुं न धनुर्भृतस्त्वमशकन्पार्थः शरेणास्पृश-
न्नो चिच्छेद ततश्च ते समभवन्सर्वेऽपि लज्जानताः ॥ १६९१ ॥

विलोक्य भूयो भगवान्करेण
धनुः समादाय तदादरेण ।
पश्यत्सु भूपेषु हरिर्विहस्य
विव्याध चक्षुश्चपलं झषस्य ।
विस्मापयन्सासुरमानुषदिव्यलोकं
कृष्णो जहास च जहार च मानसं मे ॥ १६९२ ॥

---

1687 T भद्रोवाच for मित्रोवाच

अथ श्रीभागवते ॥

दिवि दुन्दुभयो नेदुर्जयशब्दयुता भुवि ।
देवाश्च कुसुमासारान्मुमुचुर्हर्षविह्वलाः ॥ १६९३ ॥

तद्रुक्मावितमदं कलनूपुराभ्यां
पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ।
नूत्ने विनीय परिधाय च कौशिकाग्र्ये
सव्रीडहासवदना कबरीधृतस्रक् ॥ १६९४ ॥

उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विड्
गण्डस्थलं शिशिरहासकटाक्षमोक्षैः ।
राज्ञो निरीक्ष्य परितः शनकैर्मुरारे-
रंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥ १६९५ ॥

तावन्मृदङ्गपटहाः शङ्खभेर्यानकादयः ।
[ निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ १६९६ ॥ ]

[ भाग० १०·८३·२४–३० ]

अथ सूचनम् ॥

व्यासाद्या मुनयः समीयुरथ ते पार्श्वं प्रभोः सत्कृताः
श्रीमत्कृष्णपदाब्जमग्नमनसो हृष्टा हरिं तुष्टुवुः ।
इष्ट्वा तत्र महर्षिभिः क्रतुवरं कृष्णेश्वरा यादवाः
स्वर्णानि स्फुरदंशुकानि विधिवत्तेभ्यो ददुर्दक्षिणाम् ॥ १६९७ ॥

राजानो मुनयः परे च सुहृदः संबन्धिनो बान्धवा
स्वर्णालंकरणादिरम्यरचयः स्वां स्वां पुरीं निर्ययुः ।
नन्दाद्यान्परिरभ्य निर्भरतरं मुञ्चन्मुहुश्चाश्रुणोः
( राजा ) श्रीबलदेवकृष्णसहितः शौरीं प्रतस्थे पुरीम् ॥ १६९८ ॥

विश्वेषामीशितारं जगदुदयतिरोभावरक्षैकहेतुं
शौरिः संस्तूय कृष्णं स्वयमथ पुलकद्दण्डपालिर्ननाम ।
प्रास्तौद्रम्या च पुत्रावथ मुदितमनाः कालदोषेण नष्टा-
नुत्कण्ठाम्यद्स्वपुत्रानतिविनयमतिः प्रेमलुब्धा ययाचे ॥ १६९९ ॥

---

1694*d* A कबरीभृतस्रक्     1698*b* A शङ्खभेर्यौ महात्मन for भेर्यानकादय, *cd* not found in A.

अभ्यार्थनया जगाम महसा पातालमूलं हरिः
श्रीरामश्च ननाम तौ प्रमुदितस्तत्रैन्द्रसेनो नृपः ।
तस्मान्मातुरभीप्सितांश्च तनयानानीय दिव्याकृती-
म्पित्रोः प्रीतिपरंपरामनितरामुत्पादयामासतुः ॥ १,७०० ॥

अथ श्रीभागवते ॥

तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी ।
परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ १,७०१ ॥
अपाययत्स्तनं प्रीता सुतस्पर्शपरिस्नुतम् ।
मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥ १,७०२ ॥
पीत्वामृतं पयस्तस्याः पीतशेषं गदाभृतः ।
नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ १७०३ ॥
ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् ।
मिषतां सर्वलोकानां ययुर्धाम विहाय तान् ॥ १७०४ ॥
तं दृष्ट्वा देवकी देवी मृतागमननिर्गमम् ।
मेने सुविस्मिता मायां कृष्णस्य रचितां नृप ॥ १,७०५ ॥
एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः ।
वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥ १७०६ ॥

श्रीसूत उवाच ।

य इदमनुशृणोति श्रावयेद्वा मुरारे-
श्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ।
जगदघभिदलं तद्भक्तसत्कर्णपूरं
भगवति कृतचित्तो याति तत्क्षेम धाम ॥ १७०७ ॥
[ भाग० १० ८५ ५३-५९ ]

अथ सुभद्राहरणम् ॥ [ भाग० १० ८६ ]

तीर्थान्यटन्नाहितवर्णिलिङ्गी
दृष्ट्वा सुभद्रां विजयो जहार ।
रामस्य कोपं परिसान्त्वयित्वा
ददावमुष्मै भगिनीं मुकुन्दः ॥ १,७०८ ॥
भूपालो बहुलाश्व इत्यभिहितो विष्णुप्रियो मैथिलो
विप्रश्च श्रुतदेव एव भगवत्पादारविन्दानतः ।
प्रासः सद्म तयोः स्वयं स भगवानारुह्य दिव्यं रथं
ताभ्यामर्पणया ततश्च विदधे तत्त्वोपदेशं तयोः (?) ॥ १७०९ ॥

अथ श्रीभागवते ॥

स इत्थं प्रभुणादिष्टः सहकृष्णान्द्विजोत्तमान्।
आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥ १७१० ॥

एवं स्वभक्तभाक्तिं यो भगवान्भक्तभक्तिमान्।
उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ १७११ ॥

[ भाग० १०.८६.५८–५९ ]

अथ सूचनम् ॥ [ भाग० १०.८७ ]

परीक्षिते प्रश्नपरं परेशे
कथं श्रुतिर्ब्रूस्तिमुपीकरोति।
तदुत्तरं तूर्णमुदाजहार
मुनिः प्रसङ्गादितिहासवार्ताम् ॥ १७१२ ॥

स्तुतिं स्तुतिः काचिदयं चकार
प्रसङ्गतः श्रीपुरुषोत्तमस्य।
या श्रोत्रमात्रे विहिता जनानां
प्रसह्य तापत्रितयं प्रमार्ष्टि ॥ १७१३ ॥

ब्रह्मविष्णुशिवा देवाः समीहितफलप्रदाः।
आहत्य फलदः शंभुरेवमादिकथोत्तरम् ॥ १७१४ ॥

आसीत्पूर्वमशेषदेवपरिषद्वैरी वृको दानवः
शंभुस्तेन तपस्यया कठिनया सम्यक्समाराधितः।
यन्मौलौ करमादधासि कुतुकेनापि त्वमेष क्षणा-
द्भस्मीभावमुपैष्यतीति भगवांस्तस्मै वरं प्राददात् ॥ १७१५ ॥

सत्यत्वं वचसोऽसुरो विविदिषुः शंभोः शिरस्यादरा-
दच्छदातुमसौ करं स भगवान्दुद्राव भीत्या भवः।
विष्णोः पार्श्वमगादमुं च भगवानाश्वास्य भूयो वृकं
दृष्ट्वा किं त्वमिह श्रमाकुल इव प्राप्तोऽसि पप्रच्छ तम् ॥१७१६॥

तद्वार्तामखिलां निशम्य भगवान्प्रोवाच विष्णुः कथं
तद्वाक्प्रत्ययमादधासि शिरसि स्वीये करं योजय।
मायामूढहृदासुरेण विहितस्तद्भस्मभूतस्तत्क्षणा-
देवं श्रीपुरुषोत्तमस्य चरिते प्रासङ्गिकीयं कथा ॥ १७१७ ॥

अथ श्रीभागवते ॥ श्रीशुक उवाच ।

सरस्वत्यास्तटे राजनृषयः सत्रमासत ।
वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥ १७१८ ॥

तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ।
तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद्ब्रह्मणः सभाम् ॥ १७१९ ॥

न तस्मै प्रह्वणं चक्रे स्तोत्रं सत्त्वपरीक्षया ।
तस्मै चुक्रोध भगवान्प्रज्वलन्स्वेन तेजसा ॥ १७२० ॥

स आत्मन्युत्थितं मन्युमात्मजायात्मना प्रभुः ।
अशीशमद्यथा वह्निं स्वयोन्या वारिणात्मभूः ॥ १७२१ ॥

ततः कैलासमगमत्स तं देवो महेश्वरः ।
परिरब्धुं समारेभे उत्थाय भ्रातरं मुदा ॥ १७२२ ॥

नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह ।
शूलमुद्यम्य तं हन्तुमारेभे तिग्मलोचनः ॥ १७२३ ॥

पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा ।
अथो जगाम वैकुण्ठं यत्र देवो जनार्दनः ॥ १७२४ ॥

शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् ।
तत उत्थाय भगवान्सह लक्ष्म्या सतां गतिः ।
स्वतल्पादवरुह्याशु ननाम शिरसा मुनिम् ॥ १७२५ ॥

आह ते स्वागतं ब्रह्मन्निषीदात्रासने क्षणम् ।
अजानतामागतान्वः क्षन्तुमर्हथ नः प्रभो ॥ १७२६ ॥

अतीव कोमलौ तात चरणौ ते महामुने ।
इत्युक्त्वा विप्रचरणौ मर्दयन्स्वेन पाणिना ॥ १७२७ ॥

पुनीहि सहलोकं मां लोकपालांश्च मद्गतान् ।
पादोदकेन भगवंस्तीर्थानां तीर्थकारिणा ॥ १७२८ ॥

अद्याहं भगवंल्लक्ष्म्या आसमेकान्तभाजनम् ।
वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः ॥ १७२९ ॥

श्रीशुक उवाच ।

एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा ।
निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः ॥ १७३० ॥

---

1720*d* 1 वारिणात्मन for वारिणात्मभू

पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ।
स्वानुभूतमशेषेण राजन्भृगुरवर्णयत् ॥ १७३१ ॥

तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ।
भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥ १७३२ ॥

धर्मः साक्षाद्यतो ज्ञानं वैराग्यं च तदन्वितम् ।
ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥ १७३३ ॥

मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् ।
अकिंचनानां साधूनां यमाहुः परमां गतिम् ॥ १७३४ ॥

सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवता ।
भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः ॥ १७३५ ॥

त्रिविधाकृतयस्तस्य राक्षसा असुराः सुराः ।
गुणिन्या मायया सृष्टाः सत्त्वं तत्तीर्थसाधनम् ॥ १७३६ ॥

श्रीशुक उवाच ।

इत्थं सारस्वता विप्रा नृणां संशयनुत्तये ।
पुरुषस्य पदाम्भोजसेवया तद्गतिं गताः ॥ १७३७ ॥

श्रीसूत उवाच ।

इत्येतन्मुनितनयास्यपद्मगन्ध-
पीयूषं भवभयभित्परस्य पुंसः ।
सुश्लोकं श्रवणपुटैः पिबत्यभीक्ष्णं
पान्थो भूभ्रमणपरिश्रमं जहाति ॥ १७३८ ॥

[ भाग० १० ८९ १–२१ ]

अथ सूचनम् ॥

द्वित्रा ये विप्रपुत्रा यदुपतिनगरे जातमात्रा मृतास्ता-
नादाय द्वारि राज्ञः कटुकठिनगिरा हन्त विप्रो मुमोच ।
भूयोभाविन्यपत्ये सदसि मधुरिपोरर्जुनो बालरक्षा-
मङ्गीकृत्याथ शक्तः सपदि हुतभुजि स्वं प्रवेष्टुं प्रसक्तः ॥ १७३९ ॥

---

1736*a* T त्रिविधाकृतय for त्रिविधा° 1737*a* T एवं for इत्थं 1738*c* T सुश्लोक्य for सुश्लोक. *d* T पान्थोऽध्वभ्रमण° for पान्थो भूभ्रमण°

दृष्ट्वा भक्तानुकम्पापरवशहृदयः फाल्गुनस्यापकर्षं
श्रीकृष्णस्तं निवार्य स्वयमथ च रथं स्वं समारोप्य जिष्णुम् ।
भूयो गत्वा प्रतीचीं दिशमिह च महाहासभोगाम्ननर्ध्यं
दृष्ट्वा श्रीविष्णुमेनं हरिरपि विजयेऽस्त्यादरात्तं ननाम ॥ १७४० ॥

अथ श्रीभागवते ॥

तावाह भूमा परमेष्ठिनां प्रभु-
र्बद्धाञ्जलिः सस्मितमूर्जया गिरा ।
द्विजात्मजा मे युवयोर्दिदृक्षुणा
मयापनीता भुवि धर्मगुप्तये ।
कलावतीर्णाववनेर्भरासुरा-
न्हत्वेह भूयस्त्वरयेतमन्तिमे ॥ १७४१ ॥

पूर्णकामावपि युवां नरनारायणावृषी ।
धर्ममाचरतं स्थित्यै ऋषभौ लोकसंग्रहम् ॥ १७४२ ॥

इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना ।
ओमित्यानम्य भूमानमादाय द्विजदारकान् ॥ १७४३ ॥

न्यवर्ततां स्वयं धाम संप्रहृष्टौ यथागतम् ।
विप्राय ददतुः पुत्रान्यथारूपं यथावयः ॥ १७४४ ॥

निशम्य वैष्णवं धाम पार्थः परमविस्मितः ।
यत्किंचित्पौरुषं पुंसां मेने कृष्णानुकम्पितम् ॥ १७४५ ॥

इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन् ।
बुभुजे विषयान्ग्राम्यानीजे चात्यूर्जितैर्मखैः ॥ १७४६ ॥

प्रववर्षाखिलान्कामान्प्रजासु ब्राह्मणादिषु ।
यथाकालं यथैवेन्द्रो भगवाञ्छ्रैष्ठ्यमास्थितः ॥ १७४७ ॥

हत्वा नृपानधर्मिष्ठान्घातयित्वार्जुनादिभिः ।
अञ्जसा वर्तयामास धर्मं धर्मसुतादिभिः ॥ १७४८ ॥

[ भाग० १० ८९.५८–६६ ]

श्रीशुक उवाच ।

सुखं स्वपुर्यां निवसन्द्वारकायां श्रियः पतिः ।
सर्वसंपत्समृद्धायां जुष्टायां वृष्णिपुंगवैः ॥ १७४९ ॥

---

1741/ T notes वीरराघव's v. l त्वरयेत मेऽन्तिक for त्वरयेतमन्तिमे

स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः ।
कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिस्तडिद्द्युभिः ॥ १७५० ॥

नित्यं संकुलमार्गायां मदच्युद्भिर्मतंगजैः ।
अलंकृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ १७५१ ॥

उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ।
निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः ॥ १७५२ ॥

रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ।
तावन्ति विचित्ररूपाणि तद्गृहेषु महर्द्धिषु ॥ १७५३ ॥

प्रोत्फुल्लोत्पलकह्लारकुमुदाम्भोजरेणुभिः ।
वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥ १७५४ ॥

विजहार विगाह्याम्भो ह्रदिनीषु महोदयः ।
कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च योषिताम् ॥ १७५५ ॥

उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान् ।
वादयद्भिर्मुदा वीणां सूतमागधवन्दिभिः ॥ १७५६ ॥

सिच्यमानोऽच्युतस्ताभिर्हसन्तीभिः स्मरेचकैः ।
प्रतिसिञ्चन्विचिक्रीडे यक्षीभिर्यक्षराडिव ॥ १७५७ ॥

ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः
सिञ्चन्त्य उद्धृतबृहत्कबरप्रसूनाः ।
कान्तं स्मरेचकजिहीर्षयोपगूह्य
जातस्मरोत्सवलसद्वदना विरेजुः ॥ १७५८ ॥

कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक्
क्रीडाभिषङ्गधुतकुन्तलवृन्दबन्धः ।
सिञ्चन्मुहुर्युवतिभिः परिषिच्यमानो
रेमे करेणुभिरिवेभपतिः परीतः ॥ १७५९ ॥

नटानां नर्तकानां च गीतवाद्योपजीविनाम् ।
क्रीडालंकारवासांसि कृष्णोऽदात्तस्य च स्त्रियः ॥ १७६० ॥

कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः ।
नर्मक्ष्वेलापरिष्वङ्गैः स्त्रीणां किल हृता धियः ॥ १७६१ ॥

---

1753c T तावद्विचित्ररूपोऽसौ  1758c T जिहीरयोपगृह्य for जिहीर्षयोपगूह्य  1759c T प्रतिषिच्यमानो for परिषिच्य°.  1761c T नर्मक्ष्वेलिपरिष्वङ्गैः..

ऊचुर्मुकुन्दैकधियो गिरमुन्मत्तवज्जडम् ।
चिन्तयन्त्योऽरविन्दाक्षं तानि मे गदतः शृणु ॥ १७६२ ॥

महिष्य ऊचुः ।

कुररि विलपसि त्वं वीतनिद्रा न शेषे
स्वपिति जगति राज्यामीश्वरो गुप्तबोधः ।
वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता
नलिननयनहासोदारलीलेक्षितेन ॥ १७६३ ॥

नेत्रे निमीलयसि नक्तमदृष्टबन्धु-
स्त्वं रोरवीषि करुणं बत चक्रवाकि ।
दास्यं गता वयमिवाच्युतपादजुष्टां
किं वा स्रजं स्पृहयसे कबरेण वोढुम् ॥ १७६४ ॥

भो भोः सदा निष्टनसे उदन्व-
न्नलब्धनिद्रोऽधिगतप्रजागरः ।
किं वा मुकुन्दापहृतात्मलाञ्छनः
प्राप्तो दशां त्वं जगतो दुरत्ययाम् ॥ १७६५ ॥

त्वं यक्ष्मणा बलवता सुगृहीत इन्दो
क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ।
कच्चिन्मुकुन्दगदितानि यथा वय त्वं
विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥ १७६६ ॥

किं वाचरितमस्माभिर्मलयानिल तेऽप्रियम् ।
गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥ १७६७ ॥

मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं
श्रीवत्साङ्कं वयमिव भवान्ध्यायति प्रेमबद्धः ।
अत्युत्कण्ठः शबलहृदयोऽस्मद्विधो बाष्पधाराः
स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः ॥ १७६८॥

प्रियराव पदानि भाषसे
मृतसंजीविकयानया गिरा ।
करवाणि किमद्य ते प्रियं
वद मे वल्गितकण्ठ कोकिल ॥ १७६९ ॥

---

1763*c* T गाढनिर्भिन्नचेता 1765*d* T च गतो for जगतो 1766*a* T बलवतासि गृहीत for बलवता सुगृहीत 1767*a* A त्वाचरित for वाचरित

न चलसि न वदस्युदारबुद्धे
क्षितिधर चिन्तयसे महान्तमर्थम् ।
अपि बत वसुदेवनन्दनाङ्घ्रिं
वयमिव कामयसे स्तनैर्विधर्तुम् ॥ १७७० ॥

शुष्यद्ध्रदाः कर्शिताः सिन्धुपत्न्यः
संप्रत्यपेतकमलश्रिय इष्टभर्तुः ।
यद्वद्वयं यदुपतेः प्रणयावलोक-
मप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्मः ॥ १७७१ ॥

हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां
दूतं त्वानुविदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा ।
किं वा नः खलसौहृदः स्मरति तं कस्माद्भजामो वयं
क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥ १७७२ ॥

इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे ।
क्रियमाणेन माधव्यो लेभिरे वैष्णवीं गतिम् ॥ १७७३ ॥

श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः ।
उरुगायोरुगीतं च पदयन्तीनां कुतः पुनः ॥ १७७४ ॥

याः संपर्यचरन्प्रेम्णा पादसंवाहनादिभिः ।
जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥ १७७५ ॥

एवं वेदोदितं धर्ममनुतिष्ठन्सतां गतिः ।
गृहं धर्मार्थकामानां मुहुश्चादर्शयत्पदम् ॥ १७७६ ॥

आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम् ।
आसन्षोडशसाहस्रं महिष्योऽष्ट शताधिकम् ॥ १७७७ ॥

तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः ।
रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्वशः ॥ १७७८ ॥

एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान् ।
यावत्य आत्मनो भार्या अमोघगतिरीश्वरः ॥ १७७९ ॥

---

1171*b* T संप्रत्यपास्तकमल° for संप्रत्यपेतकमल°. 1772*c* T नश्चलसौहृद· for न खलसौहृद 1773*d* T परमां for वैष्णवीं 1774*c* T उरुगायोरुगीतो वा. 1777*a* T धाम for धर्मं

तेषामुद्दामवीर्याणामष्टादश महारथाः ।
आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ १७८० ॥

प्रद्युम्नश्चारुदेष्णश्च दीप्तिमान्भानुरेव च ।
साम्बो मधुर्बृहद्भानुर्भानुवृन्दो वृकोदरः ॥ १७८१ ॥
पुष्करो वेदबाहुश्च श्रुतदेवः सुनन्दनः ।
चित्रबर्हिर्विरूपश्च कविर्न्यग्रोध एव च ॥ १७८२ ॥
एतेषामपि राजेन्द्र तनूजानां मधुद्विषः ।
प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः ॥ १७८३ ॥

स रुक्मिणो दुहितरमुपयेमे महारथः ।
तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ १७८४ ॥

स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ।
वज्रस्तस्याप्यभूद्यस्तु मौसलादवशेषितः ॥ १७८५ ॥

प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चात्मजः ।
सुबाहोरुपसेनोऽभूद्भद्रसेनस्तु तत्सुतः ॥ १७८६ ॥

न ह्येतस्मिन्कुले जाता अधना अबहुप्रजाः ।
अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ १७८७ ॥

यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ।
सङ्ख्या न शक्यते कर्तुं मयि वर्षायुतैर्नृप ॥ १७८८ ॥

तिस्रः कोट्यः सहस्राणि षट्षष्टीतिशतानि च ।
आसन्यदुकुलाचार्याः कुमाराणामिति श्रुतिः ॥ १७८९ ॥

संख्यानं यादवानां कः करिष्यति महात्मनाम् ।
यत्रायुतं नामयुतं लक्षेणास्ते स आहुकः ॥ १७९० ॥
देवासुराहवहता दैतेया ये सुदारुणाः ।
ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता ववाधिरे ॥ १७९१ ॥

तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ।
अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥ १७९२ ॥

---

1781*a* T चानिरुद्धश्च T notes that our v l is accepted by विजयध्वज *d* T चित्रभानुर्वंकोऽरुण 1782*a* T देवबाहुश्च for वेदबाहुश्च, *c* T चित्रबाहु for चित्रबर्हि 1786*cd* T सुबाहो शान्तसेनोऽभूच्छतसेनस्तु तत्सुत 1789*a* T सहस्राणां for सहस्राणि, *b* T अष्टाशीति° for षट्षशीति°.

तेषां प्रमाणं भगवान्प्रभुत्वेनाभवद्धरिः ।
ते चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥ १७९३ ॥

शय्यासनाटनालापक्रीडास्थानाशनादिषु ।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ १७९४ ॥

तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं
विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ।
यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः
कृष्णस्यैतद्विचित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ १७९५ ॥

जयति जननिवासो देवकीजन्मवादो
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम् ॥
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्धयन्कामदेवम् ॥ १७९६ ॥

इत्थं परस्य निजधर्मरिरक्षयात्त-
लीलातनोस्तदनुरूपविडम्बनानि ।
कर्माणि कर्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ १७९७ ॥

मर्त्यस्तयानुसवमेधितया मुकुन्द-
श्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।
तद्धाम दुस्तरकृतान्तजवापवर्गं
ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥ १७९८

[ भाग० १०-९० १-५० ]

अथ सूचनम् [ भाग० ११ १ ]

भारावहाराय कृतावतारो
भारं धराया यदुभिर्विलोक्य ।
बलेन युक्तः कदनं यदूनां
स विप्रशापस्य मिषादकार्षीत् ॥ १७९९ ॥

---

*1793c* T ये for ते *1795d* T कृष्णस्यैतम चित्र for कृष्णस्यैतद्विचित्रं
*1797a* T निजवर्त्मरिरक्षया for निजधर्मरिरक्षया

तेषामुद्दामवीर्याणामष्टादश महारथाः ।
आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ १७८० ॥

प्रद्युम्नश्चारुदेष्णश्च दीप्तिमान्भानुरेव च ।
साम्बो मधुर्बृहद्भानुर्भानुवृन्दो वृकोदरः ॥ १७८१ ॥
पुष्करो वेदबाहुश्च श्रुतदेवः सुनन्दनः ।
चित्रबर्हिर्विरूपश्च कविर्न्यग्रोध एव च ॥ १७८२ ॥
एतेषामपि राजेन्द्र तनूजानां मधुद्विषः ।
प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः ॥ १७८३ ॥

स रुक्मिणो दुहितरमुपयेमे महारथः ।
तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ १७८४ ॥

स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ।
वज्रस्तस्याभवद्यस्तु मौसलादवशेषितः ॥ १७८५ ॥

प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चात्मजः ।
सुबाहोरुग्रसेनोऽभूदुग्रसेनस्तु तत्सुतः ॥ १७८६ ॥

न ह्येतस्मिन्कुले जाता अधना अबहुप्रजाः ।
अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ १७८७ ॥

यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ।
संख्या न शक्यते कर्तुं मयि वर्षायुतैर्नृप ॥ १७८८ ॥

तिस्रः कोट्यः सहस्राणि षष्टषशीतिशतानि च ।
आसन्यदुकुलाचार्याः कुमाराणामिति श्रुतिः ॥ १७८९ ॥

संख्यानं यादवानां कः करिष्यति महात्मनाम् ।
यत्रायुतं नामयुतं लक्षेणास्ते स आहुकः ॥ १७९० ॥
देवासुराहवहता दैतेया ये सुदारुणाः ।
ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥ १७९१ ॥
तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ।
अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥ १७९२ ॥

---

1781*a* T चानिरुद्धश्च, T notes that our v l is accepted by विजयध्वज *d* T चित्रभानुर्वृकोऽरुण . 1782*a* T देवबाहुश्च for वेदबाहुश्च, *c* T चित्रबाहु for चित्रबर्हि 1786*cd* T सुबाहो शान्तसेनोऽभूच्छतसेनस्तु तत्सुत 1789*a* T सहस्राणा for सहस्राणि, *b* T अष्टाशीति° for षष्टषशीति°.

तेषां प्रमाणं भगवान्प्रभुत्वेनाभवद्धरिः ।
ते चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥ १७९३ ॥

शय्यासनाटनालापक्रीडास्थानाशनादिषु ।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ १७९४ ॥

तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वः सरित्पादशौचं
विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ।
यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः
कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ १७९५ ॥

जयति जननिवासो देवकीजन्मवादो
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम् ॥
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्धयन्कामदेवम् ॥ १७९६ ॥

इत्थं परस्य निजधर्मरिरक्षयात्त-
लीलातनोस्तदनुरूपविडम्बनानि ।
कर्माणि कर्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ १७९७ ॥

मर्त्यस्तयानुसवमेधितया मुकुन्द-
श्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।
तद्धाम दुस्तरकृतान्तजवापवर्गं
ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥ १७९८

[ भाग० १० ९० १–५० ]

अथ सूचनम् [ भाग० ११ १ ]

भारावहाराय कृतावतारो
भारं धराया यदुभिर्विलोक्य ।
बलेन युक्तः कदनं यदूना
स विप्रशापस्य मिषादकार्षीत् ॥ १७९९ ॥

---

1793*c* T ये for ते  1795*d* T कृष्णस्यैतन्न चित्र for कृष्णस्यैतन्नचित्र
1797*a* T निजवर्त्मरिरक्षया for निजधर्मरिरक्षया

विश्वामित्रमुखाः सुखेन मुनयः प्राप्तास्तु पिण्डारकं
क्रीडन्तो यदुनन्दनाः सविनयं पप्रच्छुरेतानमी ।
शाम्बं स्त्रीवपुषं विधाय विधिना संमोहिताः किं भवे-
देतस्याः सुतलाभलुब्धमनसः श्रुत्वाथ ते चुक्रुधुः ॥ १८०० ॥

ऊचुः स्यान्मुसलं कुलक्षयकरं युष्माकमित्थं दरा-
दाकर्ण्य क्षुभिता निरीक्ष्य मुसलं ते यादवा विस्मिताः ।
चक्रुश्चूर्णमदः समुद्रसलिले न्यस्तानि चूर्णानि ता-
न्यासंस्तीरगतैरकाः कियदतिस्वल्पं च मीनोऽग्रसत् ॥ १८०१ ॥

अथ श्रीभागवते ॥

मत्स्यो गृहीतो मत्स्यघ्नैर्जालेनान्यैः सहार्णवे ।
[ तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् ॥ १८०२ ॥ ]

भगवाञ्ज्ञातसर्वार्थ ईश्वरोऽपि तदन्यथा ।
कर्तुं नैच्छद्विप्रशापं कालरूप्यन्वमोदत ॥ १८०३ ॥

[ भाग० ११.१ २३–२४ ]

अथ सूचनम् ॥

ब्रह्मा भवः सुरपतिः सह देवताभि-
रागत्य तत्र सविधं यदुनायकस्य ।
संस्तूय कृष्णमभिवन्द्य विनीतवेषाः
शेषाभिधेयमखिलार्थविचारमूचुः ॥ १८०४ ॥

भारावतारममरेश वसुंधरायाः
कर्तुं भवानवततार सुरार्थनाभिः ।
संपाद्य तत्स्वयमथ त्रिदशस्य धाम
स्वेनाब्जसुन्दरपदा त्वमलंकुरुष्व ॥ १८०५ ॥

अथ श्रीभागवते ॥ श्रीभगवानुवाच ।

अवधारितमेतन्मे यदात्थ विबुधेश्वर ।
कृतं वः कार्यमखिलं भूमेर्भारोऽवतारितः ॥ १८०६ ॥

यदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् ।
लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णवः ॥ १८०७ ॥
यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् ।
गन्तास्म्यनेन लोकोऽयमुद्वेलेन विनंक्ष्यति ॥ १८०८ ॥

इदानीं नाश आरब्धः कुलस्य द्विजशापजः ।
यास्यामि भवनं ब्रह्मन्नेतदन्ते तवानघ ॥ १८०९ ॥

श्रीशुक उवाच ।

इत्युक्तो लोकनाथेन स्वयंभूः प्रणिपत्य तम् ।
सह देवगणैर्देवः स्वधाम प्रत्यपद्यत ॥ १८१० ॥

अथ तस्यां महोत्पातान्द्वारवत्यां समुत्थितान् ।
विलोक्य भगवानाह यदुवृद्धान्समागतान् ॥ १८११ ॥

श्रीभगवानुवाच ।

एते वै सुमहोत्पाता ह्युत्तिष्ठन्तीह सर्वतः ।
शापश्च नः कुलस्यासीद्ब्राह्मणेभ्यो दुरत्ययः ॥ १८१२ ॥

न वस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ।
प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव माचिरम् ॥ १८१३ ॥

यत्र स्नात्वा दक्षशापाद्गृहीतो यक्ष्मणोडुराट् ।
विमुक्तः किल्बिषात्सद्यो भेजे भूयः कलोदयम् ॥ १८१४ ॥

वयं च तस्मिन्नाप्लुत्य तर्पयित्वा पितॄन्सुरान् ।
भोजयित्वोशिजो विप्रान्नानागुणवतान्धसा ॥ १८१५ ॥

तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महान्ति वै ।
वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥ १८१६ ॥

[ श्रीशुक उवाच ]

एवं भगवतादिष्टा यादवाः कुलनन्दन ।
गन्तुं कृतधियस्तीर्थं स्यन्दनान्समयूयुजन् ॥ १८१७ ॥

तन्निरीक्ष्योद्धवो राजञ्श्रुत्वा भगवतोदितम् ।
*दृष्ट्वारिष्टानि घोराणि नित्यं कृष्णमनुव्रतः ॥ १८१८ ॥*

विविक्त उपसंगम्य जगतामीश्वरेश्वरम् ।
प्रणम्य शिरसा पादौ प्राञ्जलिस्तमभाषत ॥ १८१९ ॥

---

1809*b* T द्विजशापन for °शापज    1810*d* T समपद्यत for प्रत्यपद्यत
1813*c* T सुमहत्पुण्य for सुमहापुण्य

उद्धव उवाच ।

देवदेवेश यज्ञेश पुण्यश्रवणकीर्तन ।
संहृत्यैतत्कुलं नूनं लोकं संत्यक्ष्यते भवान् ।
विप्रशापं समर्थोऽपि प्रत्यहन्न यदीश्वरः ॥ १८२०

नाहं तवाङ्घ्रिकमलं क्षणार्धमपि केशव ।
त्यक्तुं समुत्सहे नाथ स्वधाम नय मामपि ॥ १८२१ ॥

तव विक्रीडितं कृष्ण नृणां परममङ्गलम् ।
कर्णपीयूषमास्वाद्य त्यजत्यन्यस्पृहां जनः ॥ १८२२ ॥

शय्यासनाटनस्थानस्नानक्रीडाशनादिषु ।
कथं त्वां प्रियमात्मानं वयं भक्तास्त्यजेमहि ॥ १८२३ ॥

त्वयोपभुक्तस्रग्गन्धवासोलंकारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव [ मायां जयेमहि ॥ १८२४ ॥

वातवसना य ऋषयः श्रमणा ऊर्ध्वमन्थिनः ।
ब्रह्माख्यं धाम ते यान्ति शान्ताः संन्यासिनोऽमलाः ॥ १८२५ ॥

वयं त्विह ] महायोगिन्भ्रमन्तः कर्मवर्त्मसु ।
त्वद्वार्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥ १८२६ ॥

स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च ।
गत्युत्स्मितेक्षणक्ष्वेलीयन्नृलोकविडम्बनम् ॥ १८२७ ॥

[ श्रीशुक उवाच । ]

एवं विज्ञापितो राजन्भगवान्देवकीसुतः ।
एकान्तिनं प्रियं भक्तमुद्धवं समभाषत ॥ १८२८ ॥

[ भाग० ११.६ २८–५० ]

[ श्रीभगवानुवाच । ]

यदात्थ मां महाभाग तच्चिकीर्षितमेव मे ।
ब्रह्मा भवो लोकपालाः स्वर्वासं मेऽभिकाङ्क्षिणः । ॥ १८२९ ॥

मया निष्पादितं ह्यत्र देवकार्यमशेषतः ।
यदर्थमवतीर्णोऽहमंशेन ब्रह्मणार्थितः ॥ १८३० ॥

---

1824 Portion in *d* from माया up to त्विह in 1826*a* is om. in A, and supplied from T 1830*c* T तदर्थे for यदर्थे

कुलं वै शापनिर्दग्धं नङ्क्ष्यत्यन्योन्यविग्रहात् ।
समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यति ॥ १८३१ ॥

यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गलः ।
भविष्यत्यचिरात्साधो कलिनापि निराकृतः ॥ १८३२ ॥

न वस्तव्यं त्वयैवेह मया त्यक्ते महीतले ।
जनोऽधर्मरुचिर्भद्र भविष्यति कलौ युगे ॥ १८३३ ॥

त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु ।
मय्यावेश्य मनः सम्यक्समदृग्विचरस्व गाम् ॥ १८३४ ॥
[ भाग० ११.७.१-६ ]

अथ सूचनम् ॥

सम्यक्संभाष्य हर्षादतिविषमयमत्रासविच्छेदहेतु
शास्त्राणां सारभूतं स्वयमथ भगवानुद्धवायादिदेश ।
सर्वं श्रुत्वावधार्य प्रमुदितहृदयः कृष्णपादातिभक्-
स्त्यक्त्वा संसारवार्तां घरमथ नगरादुद्धवो निर्जगाम ॥ १८३५ ॥

अथ श्रीभागवते ॥ राजोवाच ।

ततो महाभागवते उद्धवे निर्गते वनम् ।
द्वारवत्यां किमकरोद्भगवान्भूतभावनः ॥ १८३६ ॥

ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः ।
प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत् ॥ १८३७ ॥

प्रत्याक्रष्टुं नयनमबला यत्र मग्नं न शेकुः
कर्णाविष्टं न सरति ततो यत्सतामात्मलग्नम् ।
यच्छ्रीर्वाचां जनयति रतिं कीर्त्यमाना कवीनां
दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ १८३८ ॥

ऋषिरुवाच ।

दिवि भुव्यन्तरिक्षे च महोत्पातान्समुत्थितान् ।
दृष्ट्वासीनान्सुधर्मायां कृष्णः प्राह यदूनिदम् ॥ १८३९ ॥

श्रीभगवानुवाच ।

एते घोरा महोत्पाता द्वार्वत्यां यमकेतवः ।
मुहूर्तमपि न स्थेयमत्र नो यदुपुंगवाः ॥ १८४० ॥

---

1838*a* T लग्नं for मग्नं.

स्त्रियो बालाश्च वृद्धाश्च शङ्खोद्धारं व्रजन्त्वितः ।
वयं प्रभासं यास्यामो यत्र प्रत्यक्सरस्वती ॥ १८४१ ॥

तत्राभिषिच्य शुचय उपोष्य सुसमाहिताः ।
देवताः पूजयिष्यामः स्नपनालेपनार्हणैः ॥ १८४२ ॥

ब्राह्मणांस्तु महाभागान्कृतस्वस्त्ययना वयम् ।
गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ॥ १८४३ ॥

विधिरेष ह्यरिष्टघ्नो मङ्गलायनमुत्तमम् ।
देवद्विजगवां पूजा भूतेषु परमो भवः ॥ १८४४ ॥

इति सर्वे समाकर्ण्य यदुवृद्धा मधुद्विषः ।
तथेति नौभिरुत्तीर्य प्रभासं प्रययू रथैः ॥ १८४५ ॥

तस्मिन्भगवतादिष्टं यदुदेवेन यादवाः ।
चक्रुः परमया भक्त्या सर्वश्रेयोपबृंहिताः ॥ १८४६ ॥

ततस्तस्मिन्महापानं पपुर्मैरेयकं मधु ।
दिष्टविभ्रंशितधियो यादवा नष्टमङ्गला ॥ १८४७ ॥

महापानाभिमत्तानां वीराणां दृप्तचेतसाम् ।
कृष्णमायाविमूढानां संघर्षः सुमहानभूत् ॥ १८४८ ॥

युयुधुः क्रोधसंरब्धा वेलायामाततायिनः ।
धनुर्भिः परिघैर्भल्लैर्गदाभिस्तोमरर्ष्टिभि ॥ १८४९ ॥

पतत्पताकै रथकुञ्जरादिभिः
खरोष्ट्रगोभिर्महिषैर्नरैरपि ।
मिथः समेत्याश्वतरैश्च दुर्मदा
न्यहन्शरैर्दद्भिरिव द्विपा वने ॥ १८५० ॥

प्रद्युम्नसाम्बौ युधि रूढमत्सरा-
वक्रूरभोजावनिरुद्धसात्यकी ।
सुभद्रसंग्रामजितौ सुदारुणौ
गदौ सुमित्रासुरथौ समीयतुः ॥ १८५१ ॥

---

1847*d* T यद्द्रवैर्भ्रश्यते मति 1849*c* T असिभि for परिघै

अन्ये च ये वै निशठोल्मुकादयः
सहस्रजिच्छतजिद्भानुमुख्याः ।
अन्योन्यमासज्य मदान्धकारिता
जघ्नुर्मुकुन्देन विमोहिता भृशम् ॥ १८५२ ॥

दशार्हवृष्ण्यन्धकभोजसात्वता
मध्वर्बुदा माथुरशूरसेनाः ।
विसर्जनाः कुकुराः कुन्तयश्च
मिथस्ततस्तेऽथ विसृज्य सौहृदम् ॥ १८५३ ॥

पुत्रास्त्वयुध्यन्पितृभिर्भ्रातृभिश्च
स्वस्रीयदौहित्रपितृव्यमातुलैः ।
मित्राणि मित्रैः सुहृदः सुहृद्भि-
र्ज्ञातींस्त्वहञ्ज्ञातय एव मूढाः ॥ १८५४ ॥

शरेषु हीयमानेषु भज्यमानेषु धन्वसु ।
शस्त्रेषु क्षीयमाणेषु मुष्टिभिर्जह्नुरेरकाः ॥ १८५५ ॥

ता वज्रकल्पास्त्वभवन्परिघा मुष्टिना भृताः ।
जघ्नुर्द्विषस्तैः कृष्णेन वार्यमाणास्तु तं च ते ॥ १८५६ ॥

प्रत्यनीकं मन्यमाना बलभद्रं च मोहिताः ।
हन्तुं कृतधियो राजन्नापन्ना आततायिनः ॥ १८५७ ॥

ततस्तावपि संक्रुद्धावुद्यम्य कुरुनन्दन ।
एरकामुष्टिपरिघौ चरन्तौ जघ्नतुर्युधि ॥ १८५८ ॥

ब्रह्मशापोपसृष्टानां कृष्णमायावृतात्मनाम् ।
स्पर्धा क्रोधः क्षयं निन्ये वैणवोऽग्निर्यथा वनम् ॥ १८५९ ॥

एवं नष्टेषु सर्वेषु कुलेषु स्वेषु केशवः ।
अवतारितो भुवो भार इति मेनेऽवशेषितः ॥ १८६० ॥

रामः समुद्रवेलायां योगमास्थाय पौरुषम् ॥
तत्याज लोकं मानुष्यं संयोज्यात्मानमात्मनि ॥ १८६१ ॥

रामनिर्याणमालोक्य भगवान्देवकीसुतः ।
निषसाद धरोपस्थे तूष्णीमासाद्य पिप्पलम् ॥ १८६२ ॥

---

1852*c* T आसाद्य for आसज्य. 1854*a* T पुत्रा अयुध्यन् for पुत्रास्त्वयुध्यन्.
1855*a* T क्षीयमाणेषु for हीयमानेषु 1856*a* T ह्यभवन् for त्वभवन्

बिभ्रच्चतुर्भुजं रूपं भ्राजिष्णु प्रभया स्वया ।
दिशो वितिमिराः कुर्वन्विधूम इव पावकः ॥ १८६३ ॥

श्रीवत्साङ्कं घनश्यामं तप्तहाटकवर्चसम् ।
कौशेयाम्बरयुग्मेन परिवीतं सुमङ्गलम् ॥ १८६४ ॥

सुन्दरस्मितवक्त्राब्जं नीलकुन्तलमण्डितम् ।
पुण्डरीकाभिरामाक्षं स्फुरन्मकरकुण्डलम् ॥ १८६५ ॥

कटिसूत्रब्रह्मसूत्रकिरीटकटकाङ्गदैः ।
हारनूपुरमुद्राभिः कौस्तुभेन विराजितम् ॥ १८६६ ॥

वनमालापरीताङ्गं मूर्तिमद्भिर्निजायुधैः ।
कृत्वोरौ दक्षिणे पादमासीनं पङ्कजारुणम् ॥ १८६७ ॥

मुसलावशेषायःखण्डकृतेषुर्लुब्धको जरा ।
मृगस्याकारस्तच्चरणं विव्याध मृगशङ्कया ॥ १८६८ ॥

चतुर्भुजं तं पुरुषं दृष्ट्वास्मिन्कृतकिल्बिषः ।
भीतः पपात शिरसा पादयोरसुरद्विषः ॥ १८६९ ॥

अजानता कृतमिदं पापेन मधुसूदन ।
क्षन्तुमर्हसि पापस्य उत्तमश्लोक मेऽनघ ॥ १८७० ॥

यस्यानुस्मरणं नृणामज्ञानध्वान्तनाशनम् ।
वदन्ति तस्य ते विष्णो मयासाधुकृतं विभो ॥ १८७१ ॥

तन्माशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् ।
यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम् ॥ १८७२ ॥

यस्यात्मयोगरचितं न विदुर्विरञ्चो
रुद्रादयोऽस्य तनयाः पतयो गिरां ये ।
त्वन्मायया विहतदृष्टय एतदञ्जः
किं तस्य ते वयमसद्गतयो गृणीमः ॥ १८७३ ॥

श्रीभगवानुवाच ।

मा भैर्जरे त्वमुत्तिष्ठ काम एष कृतो मया ।
याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम् ॥ १८७४ ॥

---

1868c T मृगास्याकार तच्चरण 1869b T दृष्ट्वा स कृतकिल्बिष
1874b T हि मे for मया

[ श्रीशुक उवाच । ]

इत्यादिष्टो भगवता कृष्णेनेच्छाशरीरिणा ।
त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ ॥ १८७५ ॥

दारुकः कृष्णपदवीमन्विच्छन्नधिगम्य ताम् ।
वायुं तुलसिकामोदमाघ्रायाभिमुखं ययौ ॥ १८७६ ॥

तं तत्र तिग्मद्युभिरायुधैर्वृतं
ह्यश्वत्थमूले कृतकेतनं पतिम् ।
स्नेहप्लुतात्मा निपपात पादयो
रथादवप्लुत्य स बाष्पलोचनः ॥ १८७७ ॥

अपश्यतस्ते चरणाम्बुजं प्रभो
दृष्टिः प्रनष्टा तमसि प्रविष्टा ।
दिशो न जाने न लभे च शर्म
यथा निशायामुडुपे प्रनष्टे ॥ १८७८ ॥

इति ब्रुवति वै सूते रथो गरुडलाञ्छनः ।
खमुत्पपात राजेन्द्र साश्वध्वज उदीक्षतः ॥ १८७९ ॥

तमन्वगच्छन्दिव्यानि विष्णुप्रहरणानि च ।
तेनातिविस्मितात्मानं सूतमाह जनार्दनः ॥ १८८० ॥

[ श्रीभगवानुवाच । ]

गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः ।
संकर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् ॥ १८८१ ॥

द्वारकायां च न स्थेयं भवद्भिश्च स्वबन्धुभिः ।
मया त्यक्तां पुरीमेतां समुद्रः प्लावयिष्यति ॥ १८८२ ॥

स्वं स्वं परिग्रहं सर्वे आदाय पितरौ च नः ।
अर्जुनेनाविताः सर्वे इन्द्रप्रस्थं गमिष्यथ ॥ १८८३ ॥

त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः ।
मन्मायारचनामेतां विज्ञायोपशमं व्रज ॥ १८८४ ॥

इत्युक्तस्तं परिक्रम्य नमस्कृत्य पुनः पुनः ।
तत्पादौ शीर्ष्ण्युपाधाय दुर्मनाः प्रययौ पुरम् ॥ १८८५ ॥

[ भाग० ११ ३० १–५० ]

1878*a* T त्वच्चरणाम्बुज for ते चरण°. 1885*d* T पुरीं for पुर

श्रीशुक उवाच ।

अथ तत्रागमद्ब्रह्मा भगवान्पद्मसंभवः ।
महेन्द्रप्रमुखा देवा मुनयः सप्रजेश्वराः ॥ १८८६ ॥

पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः ।
चारणा यक्षरक्षांसि किंनराप्सरसो द्विजाः ॥ १८८७ ॥

द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः ।
गायन्तश्च गृणन्तश्च शौरेः कर्माणि जन्म च ॥ १८८८ ॥

ववर्षुः पुष्पवर्षाणि विमानावलिभिर्नभः ।
कुर्वन्तः संकुलं राजन्भक्त्या परमया युताः ॥ १८८९ ॥

भगवानपि ता वीक्ष्य विभूतीरात्मनो विभुः ।
संयोज्यात्मनि चात्मानं पद्मनेत्रे न्यमीलयत् ॥ १८९० ॥

लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलाम् ।
योगधारणयाग्नेय्या दग्ध्वा धामाविशत्स्वकम् ॥ १८९१ ॥

दिवि दुन्दुभयो नेदुः पेतुः सुमनसश्च खात् ।
सत्यं धर्मो धृतिर्भूमेः कीर्तिः श्रीश्चानु तं ययुः ॥ १८९२ ॥

देवादयो ब्रह्ममुख्यानविशन्तं (?) स्वधामनि ।
अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः ॥ १८९३ ॥

सौदामिन्या यथाकाशे यान्त्या हित्वाभ्रमण्डलम् ।
गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः ॥ १८९४ ॥

ब्रह्मरुद्रादयस्ते तु दृष्ट्वा योगगतिं हरेः ।
विस्मितास्तां प्रशंसन्तः स्वं स्वं लोकं ययुस्तदा ॥ १८९५ ॥

राजन्परस्य तनुभृज्जननाप्ययेहा-
मायाविडम्बनमवेहि यथा नटस्य ।
सृष्ट्वात्मनेदमनुविश्य विहृत्य चान्ते
संहृत्य चात्ममहिमोपरतः स आस्ते ॥ १८९६ ॥

---

1886b T भवान्या। स यम भव    1890a T भगवानिपतामह वीक्ष्य.

मर्त्येन यो गुरुसुतं यमलोकनीतं
त्वां चानयच्छरणदः परमास्त्रदग्धम् ।
जिग्येऽन्तकान्तकमपीशमसावनीशः
किं स्वावने स्वरनयन्मृगयुं सदेहम् ॥ १८९७ ॥

तथाप्यशेषस्थितिसंभवाप्यये-
ष्वनन्यहेतुर्यदशेषशक्तिधृक् ।
नैच्छत्प्रणेतुं वपुरत्र शेषितं
मर्त्येषु वा स्वस्थगतिं प्रदर्शयन् ॥ १८९८ ॥

य एतां प्रातरुत्थाय कृष्णस्य पदवीं पराम् ।
प्रयतः कीर्तयेद्भक्तस्तामेवाप्नोत्यनुत्तमाम् ॥ १८९९ ॥

दारुको द्वारकामेत्य वसुदेवोग्रसेनयोः ।
पतित्वा चरणावस्रैर्न्यषिञ्चत्कृष्णविच्युतः ॥ १९०० ॥

कथयामास निधनं वृष्णीनां कृत्स्नशो नृप ।
तच्छ्रुत्वोद्विग्नहृदया जनाः शोकविमूर्च्छिताः ॥ १९०१ ॥

तत्र स्म त्वरिता जग्मुः कृष्णविश्लेषविह्वलाः ।
व्यसवः शेरते यत्र ज्ञातयो घ्नन्त आननम् ॥ १९०२ ॥

देवकी रोहिणी चैव वसुदेवस्तथा सुतौ ।
कृष्णरामावपश्यन्तः शोकार्ता विजहुः स्मृतिम् ॥ १९०३ ॥

प्राणांश्च विजहुस्तत्र भगवद्विरहातुरा ।
उपगुह्य पतींस्तांस्तांश्चितामारुरुहुः स्त्रियः ॥ १९०४ ॥

रामपत्न्यश्च तं देहमुपगुह्याग्निमाविशन् ।
वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन्हरेः स्नुषा ।
कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥ १९०५ ॥

अर्जुनः प्रेयसः सख्युः कृष्णस्य विरहातुरः ।
आत्मानं सान्त्वयामास कृष्णगीतैः सदुक्तिभिः ॥ १९०६ ॥

बन्धूनां नष्टगोत्राणामर्जुनः सांपरायिकम् ।
हतानां कारयामास यथावदनुपूर्वशः ॥ १९०७ ॥

द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् ।
वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ १९०८ ॥

---

1898*d* T मर्त्येन किं for मर्त्येषु वा

२·१०

अथ कल्क्यवतारः ॥

तत्र श्रीभागवते ॥

ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दमः ।
कालेन वलिना राजन्नंक्ष्यत्यायुर्वलं स्मृतिः ॥ १ ॥

वित्तमेव कलौ नृणां जन्माचारगुणोदयः ।
धर्मन्यायव्यवस्थायां कारणं वलमेव हि ॥ २ ॥

दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ।
स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥ ३ ॥

लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम् ।
अवृत्त्यां न्यायदौर्वल्यं पाण्डित्ये चापलं वचः ॥ ४ ॥

अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु ।
स्वीकार एव चोद्वाहः स्नानमेव प्रसाधनम् ॥ ५ ॥

दूरे वार्ययनं तीर्थं लावण्ये केशधारणम् ।
उदरंभरिता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ।
दाक्ष्यं कुटुम्बभरणं यशोर्थे धर्मसेवनम् ॥ ६ ॥

एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ।
ब्रह्मविट्क्षत्रशूद्राणां यो वली भविता नृप ॥ ७ ॥

प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ।
आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् ॥ ८ ॥

शाकमूलामिषक्षौद्रफलपुष्पास्थिभोजनाः ।
अनावृष्ट्या विनंक्ष्यन्ति दुर्भिक्षकरपीडिताः ॥ ९ ॥

शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः ।
क्षुत्तृड्भ्यां व्याधिभिश्चैव संतापेन च चिन्तया ॥ १० ॥

त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ।
क्षीयमाणेषु देहेषु देहिनां कालदोषतः ॥ ११ ॥

वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ।
पाषण्डप्रचुरे धर्मे दस्युतुल्येषु राजसु ॥ १२ ॥

---

1*b* T दया for दम    12*d* T दस्युप्रायेषु for दस्युतुल्येषु.

चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ।
शूद्रप्रायेषु वर्णेषु छागप्रायासु धेनुषु ॥ १३ ॥

गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु ।
अणुप्रायास्वौषधीषु शमीप्रायेषु स्थाणुषु ॥ १४ ॥

विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ।
इत्थं कलौ गतप्राये जनेषु खरधर्मिषु ।
धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥ १५ ॥

चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ।
धर्मत्राणाय साधूनां जन्मकर्मापनुत्तये ॥ १६ ॥

शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ।
भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ १७ ॥

अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः ।
असिना साधुदमनमष्टैश्वर्यगुणान्वितः ॥ १८ ॥

विचरन्नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः ।
नृपलिङ्गच्छदो दस्यून्कोटिशो निहनिष्यति ॥ १९ ॥

अथ तेषां भविष्यन्ति मनांसि विशदानि वै ।
वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् ॥ २० ॥

पौरजानपदानां वै हतेष्वखिलदस्युषु ।
तेषां प्रजा विसर्गश्च स्थविष्ठः संभविष्यति ।
वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते ॥ २१ ॥

यदावतीर्णो भगवान्कल्किर्धर्मपतिर्हरिः ।
कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी ॥ २२ ॥
[ भाग० १२.२.१–२३ ]

म्लेच्छम्लानपुराणधर्मधवलप्राकारभूयोनवी–
कारे कारुकलासु कोऽपि निपुणो देवस्त्रिलोकीद्रुमः ।
पाषण्डोक्तिनिदाघदग्धनिगमारामस्य धाराधरो
धन्यः पुण्यवतां करोति करुणामह्नाय कल्की हरिः ॥ २३ ॥

* * * *

14*d* T स्थाखुषु for स्थाणुषु 15*b* T खरधर्मिणि for खरधर्मिषु 21*d* T सत्त्वमूर्तौ.

मत्स्यः कूर्मः कोलरूपी नृसिंहः
खर्वो रामो रामचन्द्रोऽथ रामः ।
बुद्धः कल्की टोडरेन्द्रस्य नव्यं
भूयो भव्यं देवदेवो विदध्यात् ॥ २४ ॥

गूढार्थाः श्रुतयो मुनेर्भणितयोऽनन्ताः पुराणादयो
विस्तीर्णास्तद्दोषवैष्णवपदप्राप्तौ जनानाकुलान् ।
दृष्ट्वा द्रागुपकारकातरमना निर्णीय तेषामसौ
सारार्कर्षणसंग्रहं समकरोच्छ्रीटोडरक्ष्मापतिः ॥ २५ ॥

॥ शुभम् ॥

इति श्रीमत्समस्तप्रशस्तविरुदावलीविराजमान-दयादाक्षिण्यादिगुणग्राम
निधान श्रीमद्गोविन्दपदारविन्दनिस्यन्दमानामन्दमकरन्दास्वादलुब्ध
मधुपायमानमानस निरुपमसमरस्वीकारसाहस निरन्तरानन्त
हयहस्तिहेममहीरादिदानकृतार्थीकृतार्थिसार्थवचोनिष्ठा
कनिष्ठीकृतप्रथमपार्थ-पारसीकाधिनाथश्रीमज्जलाल-
दीनाकबरसाहप्रथमामात्य-महाराजाधिराज-
श्रीमट्टोडरमल्लविरचिते टोडरानन्दे
अवतारसौख्ये दशमो हर्षः ॥१०॥

संवत् १६२० वर्षे फाल्गुनवदि ७ शनिवासरे ॥ श्रीरस्तु ॥ कल्याणम् ॥

## Appendix A

[*Life of Rājā Todarmal Extracts from AĪN-I-AKBARĪ of Abul Fazl, translated by Blochmann One volume edition issued by the Royal Asiatic Society of Bengal Bibliotheca Indica, Calcutta, 1939* ]

*Note on page 33*

Rājā Todarmal, a Khatri by caste was born at Lahore He appears to have entered Akbar s service during the 18th year (12-3–1573) of the emperor's reign, when he was employed to settle the affairs of Gujarāt In the 19th year (11–3–74) we find him in Bengal in company with *Mungim Khan* and three years later (1577) again at Gujarāt In the 27th year (1582) he was appointed *Diwān* of the empire, when he remodelled the revenue system After an unsuccessful attempt on his life made by a *khatri* in the 32nd year (1587), he was sent against the Yūsufzāis to avenge the death of Bir Bar In th 34th year (1589) old age and sickness obliged him to send in his resignation which Akbar unwillingly accepted Retiring to the banks of the Ganges, he died—or *went to hell* as Bādaoni expresses himself in the case of Hindus—on the 11th day A H 998—or 10th Nov 1589, the same year in which Rāja Bhagwān Das died Todarmal had reached the rank of a *chahārhazāri* or Commander of Four Thousand, and was no less distinguished for his personal courage, than his financial abilities His eldest son Dhārū a commander of seven hundred was killed in the war with T hatha

Abū l-Fazl did not like Todarmal personally, but praises him for his strict integrity and abilities, he charges him with vindictiveness of temper and bigotry Awrangzeb said he had heard from his father that Akbar complained of the rājā s *independence vanity* and *bigoted adherence to Hinduism* Abū l-Fazl openly complained of him to Akbar but the emperor, with his usual regard for faithful services said that he could not drive away an old servant In his adherence to Hinduism, Todarmal may be contrasted with Bir Bar, who a short time before his death had become a member of the

*Divine Faith* Once when accompanying Akbar to the Punjāb, in the hurry of the departure, Todarmal's idols were lost; and as he transacted no business before his daily worship, he remained for several days without food and drink, and was at last with great difficulty cheered up by the emperor.

*Pages* 376–379.

**39. Raja Todar Mal, a Khatrī.**

He was born at Lāhore. The *Ma'āsir-'l-Umarā* does not record his services before the 18th year of Akbar's reign; but T. M. appears to have entered Akbar's service at a very early period. In 971, he was employed under Muzaffar, and in 972, he served under Akbar against Khān Zamān" He held the first important post in the 18th year, when after the conquest of Gujarat, he was left there to assess that province. In the 19th year, after the conquest of Patna, he got an'*alam* and a *naqqāra*, and was ordered to accompany Mun'im Khān to Bengal He was the soul of the expedition In the battle with Dā'ūd Khān-i-kararānī, when Khān Ālam had been killed, and Munim Khān's horse had run away, the Rājā held his ground bravely, and "not only was there no defeat, but an actual victory". "What harm," said T. M. "if Khān Ālam is dead, what fear if the Khān Khānān has run away, the empire is ours!" After settling several financial matters in Bengal and Orissa, T. M went to court, and was employed in revenue matters. When Khān Jahān went to Bengal, T. M, was ordered to accompany him. He distinguished himself, as before, in the defeat and capture of Dāūd. In the 21st year, he took the spoils of Bengal to the Court, among them 300 to 400 elephants. In the following year, he was again sent to Gujrat, *vice* Vazīr Khān, who had given no satisfaction. Whilst arranging at Ahmedabad matters with Vazir Khān, Muzaffar Husayn, at the instigation of Mihr Ali Kolabī, rebelled. Vazīr Khān proposed to retreat to the Fort, but T. M. was ready to fight, and defeated Muzaffar in the 22nd year, near Dholquah, which lies 12*kos* from Ahmedabad. Vazīr Khān would have been lost in this battle, if T. M. had not come to his assistance Muzaffar, after his defeat, fled to Junagadh

In the same year Todar Mal was appointed *Vazir* When Akbar left Ajmir for the Punjab the house idols of the Raja were lost, as mentioned on page 33 Note

When the news of Muzaffar s death and the occupation of the whole of Bengal and Bihār by the rebels reached Akbar he sent T M, Sādiq Khān Tarson Khān etc from Fathpūr Sikri to Bihār Muhibb Ali, *Governor of Rahtās* and Muhammad Masūm Khān-i Farankhūdi were appointed *Kumakis*, or auxiliaries The latter joined the Rājā with 3000 well-equipped horse evidently bent on rebellion T M managed to keep him quiet, but he reported the matter to the court The Bengal rebels *under Masūm-i Kābuli the Qāqshāls*, and Mirzā Sharafv-Din Husayn with 30000 horse 500 elephants and *many ships* and artillery, had *colleted near* Mungir, and T M from fear of treachery among his auxiliaries shut himself up in the Fort of Mungir instead of risking general engagement During the seige two of his officers Humāyūn Farmili and Tarkhān Diwāna joined the rebels Though suffering from want of provisions T M held himself bravely especially as he received timely remittances from court After the seige had lasted for some time, Babā Khān Qāqshāl died and Jabāri son of Majnūn Khan Qaqqshal desired to leave The rebel army dispersed Mac sum i Kabuli went to South Bihar, and 'Arab Bahādur wished to surprise Patna, and take possession of the Imperial treasury, which Pahār Khān had safely lodged in the Fort of that town After sending Mac sūm-i Farankhūdi to Patna, to assist Pahār Khān T M and Ṣadiq Khān followed Mac sūm i Kabuli to Bihār Mac sūm made a fruitless attempt to defeat Ṣadiq Khān in a sudden night attack but was obliged to retreat finding a ready asylum with 'Isā Khān Zamindar of Orisā. T M was thus enabled to report to Akbar that South Bihār as far as Garhi was re-annexed to the Delhi empire

In the 27th year (990) T M was made Divān, or *Vakil* During this year he introduced his financial reforms which have made him so famous The third book of Āin contains his new rent roll or Asl-i Jam'i Tūmār, which superseded Muzaffar s assessment His regulations regarding the coinage have been alluded to above and others may be found in the Akbarnāmā

The most important reform introduced by T. M. is the change in the language and the character used for the revenue accounts. Formerly they had been kept in Hindī by Hindū *Muharrirs*. T. M. ordered that all Government documents should henceforth be written in Persian. He thus forced his co-religionists to learn the court language of their rulers—a circumstance which may well compare to the introduction of the English language in the courts of India. The study of Persian therefore became necessary for its pecuniary advantages.

T. M's. order, and Akbar's generous policy of allowing Hindūs to compete for the highest honours—we saw on p 363 that Mān Singh was the first commander of Seven Thousand,—explain two facts, *first*, that before the end of the 18th century, the Hindūs had almost become the Persian teachers of the Muhammadans; *secondly*, that a new dialect could arise in Upper India, the *Urdū*, which without the Hindūs as receiving medium, never could have been called into existence. Whether we attach more influence to T. M.'s order or to Akbar's policy, which once initiated, his successors, willing or not, had to follow, one fact could be borne in mind that before the times of Akbar, the Hindūs, as a rule, did not study Persian, and stood therefore politically below their Muhammadan rulers

In the 29th year, Akbar honoured him by paying him a visit. In the 32nd year, a khatrī, from private hatred, wounded T. M on a march at night time The man was at once cut down.

When Bīr Bar had been killed in the war with the Yūsufzāī's, T. M was ordered to accompany Mān Singh, who had been appointed commander-in-chief. In the 34th year, when Akbar went to Kashmīr, T. M. was left in charge of Lāhore. Soon after, he applied for leave to go to the banks of the Ganges, as he was old and wished to die. Akbar let him go; but he recalled him from Hardwār, and told him that looking after his duties was more virtuous than sitting on the banks of the Ganges, T. M. unwillingly returned, but died soon after, on the 11th day of the year 998.

Though often accused of headstrongness and bigotry by contemporaneous historians, T M.'s fame, as general and finan-

cier, had outlived the deeds of most of Akbar's grandees; together with Abū'l-Fazl and Mān Singh, he is best known to the people of India at the present day.

His son Dhārū was a Commander of Seven Hundred, and was killed during the Sindh expedition, while serving under Khān Khānān People say that he used to shoe his horses with golden shoes.

The name *Ṭodar Mal* is often spelt in MSS with the Hindi *Ṭ*, *d* and *r*, which explains the spelling Torel Mall, which we find in old histories. Under Shāhjahān also there lived a distinguished courtier of the name T. M.

The *Tafrīn' l-Ismārat* says T. M.'s father died when T M. was quite young, and the widow was in great distress T M at an early age showed much clearness and common sense, and received an appointment as writer from which humble position he rose to the greatest honours '

[ Akbar-born 949, *died 1014*, came to the throne 963, A. H. ]

## Appendix B

[ *This appendix contains a few stanzas glorifying Todarmal They are found in Manirāma's PADYASAMGRAHA (MS No 361 of 1884-86 of the Deccan College Library now deposited in the Bhandarkar Oriental Research Institute, Poona It appears that Manirāma may either himself be a protege of Todarmal, or was very closely connected with Pandits patronised by him Manirāma's age therefore will be between 1589 and 1650 A D approximately I am thankful to my friend Mr. P. K. Gode, the Curator of the Bhandarkar Oriental Research Institute, for having drawn my attention to the above MS This appendix also contains the three stanzas found inscribed on the walls of Pāndavamandapa or Draupadikunda at Benares* ]

१

टोडरेशयशोनद्यां मुहुर्वास्तारकव्रजाः ।
व्योमगङ्गा मृणालीव फेनखण्डोपमो विधुः ॥ ६८ ॥

२

देवश्रीटोडरेशक्षितिपतितिलकश्वेतमानैर्यशोभि-
र्जाते गीर्वाणवृन्दे तव शिवसदृशे कौतुकं तत्र जातम् ।
अन्योन्यं सर्वदेवा नतिततिविनताः श्रीमहादेवबुद्ध्या
जाता लक्ष्म्या च कृष्णे पुनरपि च शिवे योजिता दृष्टिपाताः ॥ ६९ ॥

ममैवैतौ ।

Both found on fol 6

३

दीप सत्रपमन्दिरे परचमूरात्रौ च चण्डद्युतिः
रात्रौ संगरसागरेषु मगधान्साक्षात्पुनर्वाडवः ।
विपुष्ठैरिकुलाचले सुमनसां वृन्दे सुपर्णाचलो
राजाटोडरमल्लनामनृपतेर्भाति प्रतापानलः ॥ ८० ॥

मम ।

Found on fol. 7.

८

कालिन्दी कामकेलौ कलयति न कला केरली केलितल्प
कर्णाटी कर्णकूपे कमलकलिकया नापि कान्ति करोति।
गौडी गत्वा गुहाया ग[म]यति गुरुतां गुर्जभूर्जे [प्र] देश (?)
तैलङ्गी तैलवार्ता त्यजति तु नितरां टोडरेशप्रयाणे॥

ममैवेदम्।

Found on fol 9

७

याने श्रीनृपटोडरस्य सकल केतु निरीक्ष्यारुण
यात्रादुन्दुभिदीर्घनिस्वनदलद्ब्रह्माण्डरुक्मभ्रमात्।
धाता व्यग्रमति प्रपश्यति पुन सधाय हेतु भयात्
सूर्यो भूम्न चकम्पते मुहुरलेलोऽप्यमावर्तते॥१२॥

ममैव।

Found on fol 10

६

Benares Draupadi Kunda Inscription dated Samvat 1616 i. e 1589 A D

प्रत्यर्थिक्षितिपालकालन ×××× ने दूतिका
मुद्राङ्कप्रकटप्रतापनपनप्रोद्भासिताशामुखे।
क्षाणीशकबरे प्रशासति महीं तस्मिन्नृपालावली
स्फूर्जन्मौलिमरीचिवीचिरचितरोदप्रपदाम्भोरुहे॥१॥
तद्राज्यैकधुरन्धरस्य वसुधासाम्राज्यदीक्षागुरो
श्रीमट्टण्डनवंशमण्डनमणे श्रीटोडरक्ष्मापते।
धर्मार्थैकविधौ समाहितमतेरादेशतोऽचीकर
द्वापीं पाण्डवमण्डपे ··घनो(?)गोविन्ददास सुधी॥२॥
ऋतुनिगमरसैमासामिते(१६१६) यत्संवदो
मुररिपुनिहितस्य टोडरक्षोणिपाल।
विहितविविधपूर्वोऽर्चाकरश्चावशार्यी
विमलमलिलमारा यद्वसोपानवानिम्॥३॥

